( वाजपेयोपयुक्ताप्तहोमाभिधानम् )

( अथ प्रथमाष्टके सप्तमप्रपाठके दशमोऽनुवाकः। )

---

वाजस्येमं प्रसवः सुषुवे अग्रे सोमꣳ राजा-
नमोषधीष्वप्सु। ता अस्मभ्यं मधुमतीर्भवन्तु
वयꣳ राष्ट्रे जाग्रियाम पुरोहिताः। वाजस्येदं
प्रसव आ बभूवेमा च विश्वा भुवनानि सर्वतः।
स विराजं पर्येति प्रजानन्प्रजां पुष्टिं वर्धय-
मानो अस्मे। वाजस्येमां प्रसवः शिश्रिये
दिवमिमा च विश्वा भुवनानि सम्राट्। अदि-
त्सन्तं दापयतु प्रजानन्रयिम् ( १ ) च नः
सर्ववीरां नि यच्छतु। अग्ने अच्छा वदेह नः
प्रति नः सुमना भव। प्र णो यच्छ भुवस्पते
धनदा असि नस्त्वम्। प्र णो यच्छत्वर्यमा
प्र भगः प्र बृहस्पतिः। प्र देवाः प्रोत सूनृता
प्र वाग्देवी ददातु नः। अर्यमणं बृहस्पति-
मिन्द्रं दानाय चोदय। वाचं विष्णुꣳ सरस्व-
तीꣳ सवितारम् ( २ ) च वाजिनम्। सोमꣳ
राजानं वरुणमग्निमन्वारभामहे। आदित्या-
न्विष्णुꣳ सूर्यं ब्रह्माणं च बृहस्पतिम्।
देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां
पूष्णो हस्ताभ्याꣳ सरस्वत्यै वाचो यन्तुर्य-

न्त्रेणाग्नेस्त्वा साम्राज्येनाभि षिञ्चामीन्द्रस्य बृहस्पतेस्त्वा साम्राज्येनाभि षिञ्चामि ( ३ ) ॥

( रयिः॰ सविता॰ षट्त्रिं॰ शच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके सप्तमप्रपाठके दशमोऽनुवाकः ॥ १० ॥

---

( अथ प्रथमाष्टके सप्तमप्रपाठके दशमोऽनुवाकः । )

---

वाजस्य । इमम् । प्रसव इति प्र—सवः । सुषुवे । अग्रे । सोमम् । राजानम् । ओषधीषु । अप्स्वित्यप्—सु । ताः । अस्मभ्यमित्यस्म—भ्यम् । मधुमतीरिति मधु—मतीः । भवन्तु । वयम् । राष्ट्रे । जागृयाम । पुरोहिता इति पुरः—हिताः । वाजस्य । इदम् । प्रसव इति प्र—सवः । एति । बभूव । इमा । च । विश्वा । भुवनानि । सर्वतः । सः । विराजमिति वि—राजम् । परीति । एति । प्रजानन्निति प्र—जानन् । प्रजामिति प्र—जाम् । पुष्टिम् । वर्धयमानः । अस्मे इति । वाजस्य । इमाम् । प्रसव इति प्र—सवः । शिश्रिये । दिवम् । इमा । च । विश्वा । भुवनानि । सम्राडिति सम्—राट् । अदित्सन्तम् । दापयतु । प्रजानन्निति प्र—जानन् ।

( वाजपेयोपयुक्ताग्रहोमाभिधानम् )

रयिम् ( १ )। च। नः। सर्ववीरामिति सर्व—वीराम्। नीति। यच्छतु। अग्ने। अच्छ। वद। इह। नः। प्रतीति। नः। सुमना इति सु—मनाः। भव। प्रेति। नः। यच्छ। भुवः। पते। धनदा इति धन—दाः। असि। नः। त्वम्। प्रेति। नः। यच्छतु। अर्यमा। प्रेति। भगः। प्रेति। बृहस्पतिः। प्रेति। देवाः। प्रेति। उत। सूनृता। प्रेति। वाक्। देवी। ददातु। नः। अर्यमणम्। बृहस्पतिम्। इन्द्रम्। दानाय। चोदय। वाचम्। विष्णुम्। सरस्वतीम्। सवितारम् ( २ )। च। वाजिनम्। सोमम्। राजानम्। वरुणम्। अग्निम्। अन्वारभामह इत्यनु—आरभामहे। आदित्यान्। विष्णुम्। सूर्यम्। ब्रह्माणम्। च। बृहस्पतिम्। देवस्य। त्वा। सवितुः। प्रसव इति प्र—सवे। अश्विनोः। बाहुभ्यामिति बाहु—भ्याम्। पूष्णः। हस्ताभ्याम्। सरस्वत्यै। वाचः। यन्तुः। यन्त्रेण। अग्नेः। त्वा। साम्राज्येनेति साम्—राज्येन। अभीति। सिञ्चामि। इन्द्रस्य। बृहस्पतेः। त्वा। साम्राज्येनेति साम्—राज्येन। अभीति। सिञ्चामि ( ३ )॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टके सप्तमप्रपाठके दशमोऽनुवाकः॥ १०॥

( अथ प्रथमकाण्डे सप्तमप्रपाठके दशमोऽनुवाकः । )

---

नवमे यूपारोहणमुक्तं दशमेऽन्नहोमा उच्यन्ते ।

कल्पः—" अथास्यैतत्पुरस्तादौदुम्बरे द्रोणे सर्वौषधमाज्येन समुदा भवति तस्यौदुम्बरेण स्रुवेणोपघातं सप्तान्नहोमाञ्जुहोति वाजस्येमं प्रसवः सु वे अग्रे सोममिति " इति ।

तत्रेयमृक्प्रथमा—

वाजस्येमं प्रसवः सुषुवे अग्रे सोमꣳ राजान-
मोषधीष्वप्सु । ता अस्मभ्यं मधुमतीर्भवन्तु
वयꣳ राष्ट्रे जाग्रियाम पुरोहिताः ।, इति ।

वाजस्यान्नस्योत्पादकः परमेश्वर ओषधीष्वप्सु च सारभूतमिमं सो वल्लीरूपं राजानं दीप्तिमन्तं पदार्थमग्रे सृष्ट्यादौ सुषुव उत्पादयामास । ताश्चौ षधय आपश्चास्मदर्थं मधुमतीर्माधुर्योपेता भवन्तु । वयमप्यस्मिन्राष्ट्रे पुरोहित यागानुष्ठानादौ पुरोगामिनो जाग्रियाम जागरूका भूयास्म ॥

अथ द्वितीया—

वाजस्येदं प्रसव आ बभूवेमा च विश्वा भुव-
नानि सर्वतः । स विराजं पर्येति प्रजान-
न्प्रजां पुष्टिं वर्धयमानो अस्मे ।, इति ।

वाजस्य प्रसवः परमेश्वर इदमनुष्ठीयमानं कर्माऽऽबभूव भावितवानुत्पादितवान् । इमानि सर्वाणि भुवनानि सर्वत उत्पादितवान् । स परमेश्वरोऽस्मे अस्मदर्थं प्रजां पुष्टिं च वर्धयमानः प्रजानन्नस्मदभिप्रायं प्रकर्षेण जानानो विराजं हूयमानमन्नं पर्येति सर्वतः प्राप्नोतु । अन्नं वै विराडिति श्रुतिः ॥

अथतृतीया—

वाजस्येमां प्रसवः शिश्रिये दिवमिमा
च विश्वा भुवनानि सम्राट् । अदि-
त्सन्तं दापयतु प्रजानन्रयिं च
नः सर्ववीरां नि यच्छतु ।, इति ।

वाजस्य प्रसव ईश्वर इमां दिवमिमानि चान्यानि सर्वाणि भुवनानि

( वाजपेयोपयुक्तान्नहोमाभिधानम् )

शिश्रिय आश्रितवान्। सर्वेषां च भुवनानां राजा भूत्वाऽदित्सन्तं हविर्दातुमनिच्छन्तं मां प्रजानन्मदीयबुद्धिप्रेरणेन हविर्दापयतु। ततो नोऽस्मभ्यं सर्ववीरां पुत्रभृत्यादयः सर्वे वीरा यस्याः सा सर्ववीरा तादृशीं रयिं धनं च नियच्छतु नियमेन ददातु॥

अथ चतुर्थी—

अग्ने अच्छा वदेह नः प्रति नः
सुमना भव। प्र णो यच्छ भुव-
स्पते धनदा असि नस्त्वम्।, इति।

हेऽग्न इहास्मिन्कर्मणि नोऽस्माकमच्छाऽऽभिमुख्येन वद हितं कथय। नोऽस्मान्प्रति सुमनाः करुणार्द्रचित्तो भव। हे भुवस्पते भूमिपते नोऽस्मभ्यं प्रकर्षेण यच्छ धनं देहि। यस्मात्त्वमस्मत्स्वामी सन्नोऽस्मभ्यं धनदा असि॥

अथ पञ्चमी—

प्र णो यच्छत्वर्यमा प्र भगः प्र बृह-
स्पतिः। प्र देवाः प्रोत सूनृता
प्र वाग्देवी ददातु नः।, इति।

षड्भिः प्रशब्दैः प्रयच्छन्त्विति प्रददात्वित्यन्वये सत्येतानि षड्वाक्यानि भवन्ति। अर्यमभगबृहस्पतयो देवपुत्तमन्त्वाद्रिप्रपरिव्राजकन्यायेन पृथङ्निर्दिश्यन्ते। तेभ्योऽन्ये त्वत्र देवशब्देनोच्यन्ते। ते सर्वे नोऽस्मभ्यं धनं प्रयच्छन्तु। उतापि च सूनृता प्रियवागभिमानिनी देवता या चान्यवाङ्मात्राभिमानिनी देवता ते उभे धनं प्रयच्छताम्॥

अथ षष्ठी—

अर्यमणं बृहस्पतिमिन्द्रं दानाय चोदय। वाचं
विष्णुꣳ सरस्वतीꣳ सवितारं च वाजिनम्।, इति।

हे ईश्वर पुनरस्मभ्यं दातुं धनस्य दानायार्यमादींश्चोदय प्रेरय। वाक्सरस्वत्योः पूर्वोक्तसूनृतावाचोरिव भेदो द्रष्टव्यः। वाजिनमन्नाधिपतिम्॥

अथ सप्तमी—

सोमꣳ राजानं वरुणमग्निमन्वारभामहे। आदि-
त्यान्विष्णुꣳ सूर्यं ब्रह्माणं च बृहस्पतिम्।, इति।

वयं सोमराजादीन्प्रथमतः कर्मारम्भकाननुसृत्य पश्चादारभामहेऽतस्ते स नुगृह्णन्तु ॥

विधत्ते—

" सप्तान्नहोमाञ्जुहोति । सप्त वा अन्नानि । यावन्त्येवान्नानि । ता वावरुन्धे । सप्त ग्राम्या ओषधयः । सप्ताऽऽरण्याः । उभयीषामवरुद्ध्यै । [ ब्रा० का० १ प्र० ३ अ० ८ ] इति ।

अन्नहेतूनामोषधीनां सप्तत्वात्तत्कार्याणामन्नानामपि सप्तत्वम् । ओषधी सप्तत्वमापस्तम्बोऽग्निचयने दर्शयति—" तिलमाषव्रीहियवाः प्रियङ्ग्वण गोधूमा वेणुः श्यामाका नीवारा जर्तिलाश्च गवीधुका अरण्यजा मार्कट विज्ञेया गार्मुतसप्तमाः कुलत्थसप्तमा वा सप्त ग्राम्याः कृष्टे सप्ताऽऽरण अकृष्टे " इति ॥

एकैकस्यान्नस्य पृथगेव होमं विधत्ते—

" अन्नस्यान्नस्य जुहोति । अन्नस्यान्नस्यावरुद्ध्यै । " [ ब्रा० का० प्र० ३ अ० ८ ] इति ।

इमं पक्षमापस्तम्बो दर्शयति—" वाजप्रसवीयं जुहोति सप्त ग्राम्या ओष धयः सप्ताऽऽरण्याः पृथगन्नानि द्रवीकृत्यौदुम्बरेण स्रुवेण वाजस्येमं प्रसव सुषुव इति ग्राम्याणि हुत्वाऽऽरण्यानि जुहोति " इति ॥

इदानीं बौधायनाभिमतं सर्वाण्येकीकृत्य होमं विधत्ते—

" यद्वाजपेययाज्यनवरुद्धस्याश्नीयात् ( १ ) । अवरुद्धेन व्यृध्येत । सर्वस्य समवदाय जुहोति । अनवरुद्धस्यावरुद्ध्यै । " [ ब्रा० का० १ प्र० ३ अ० ८ ] इति ।

होमकाले यदन्नमवरुद्धं स्वीकृतं तदुपेक्ष्य यदस्वीकृतं वाजपेययाजी काला- न्तरेऽश्नीयात् । तदानीमुपेक्षितेन यागकालीनेनान्नेनासौ वियुक्तो भवेत् । अतः सर्वमेकीकृत्य होमे सर्वस्यापि यागकाले स्वीकृतत्वेन दोषापादकमस्वीकृतं किंचिन्न भवेत् । अतोऽस्वीकृतस्य सर्वस्यापि यागकाले स्वीकाराय मिलित्वा होम इत्यर्थः ॥

होमे साधनविशेषं विधत्ते—

" औदुम्बरेण स्रुवेण जुहोति । ऊर्ग्वा अन्नमुदुम्बरः । ऊर्ज एवान्नाद्यस्याव- रुद्ध्यै । " [ ब्रा० का० १ प्र० ३ अ० ८ ] इति ।

---

१ क. घ. ङ. च. 'कारोऽयं मि' ।

( वाजपेयोपयुक्तान्नहोमाभिधानम् )

ऊर्ग्वा अन्नं बलप्रदमेवान्नमत एव देशविशेषे बहूद्यते ॥

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याꣳ सरस्वत्यै वाचो यन्तुर्यन्त्रे-णाग्नेस्त्वा साम्राज्येनाभि षिञ्चामिन्द्रस्य बृहस्पतेस्त्वा साम्राज्येनाभि षिञ्चामि ॥

कल्पः—" अथ यजमानायतने कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमाऽऽस्तृणाति तद्यजमानं प्राञ्चमुपवेश्य सुवर्णरजताभ्यां रुक्माभ्यां पर्युपास्य पुरस्तात्प्रत्यञ्चमभिषिञ्चति शीर्षतोऽभिषिञ्चत्यामुखादन्ववस्रावयति देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याꣳ सरस्वत्यै वाचो यन्तुर्यन्त्रे-णाग्नेस्त्वा साम्राज्येनाभिषिञ्चामीन्द्रस्य त्वा बृहस्पतेस्त्वा साम्राज्येनाभिषि-ञ्चामीति " इति ।

अत्रेन्द्रस्येत्यस्मिन्मध्यममन्त्रेऽनुषङ्गसूचनायानाम्नातोऽपि त्वाशब्दः सूत्रका-रेण पठितः । देवस्य त्वेत्यादिर्व्याख्यातः । या सरस्वती वाग्विशेषदेवता या च वाक्शब्दाभिहिता वाक्सामान्यदेवता यश्चान्तर्यामी यन्तृशब्दवाच्यो योऽप्य-ग्निस्तेजःप्रदस्तेषां यन्त्रेण नियमनेनानुज्ञया साम्राज्यनिमित्तं त्वामभिषिञ्चामि । इन्द्रस्येत्येतावानेवाऽऽम्नातो द्वितीयो मन्त्रः । स च पूर्वोत्तरभागयोरनुषङ्गेण व्याख्यातव्यः । बृहस्पतेरित्यादौ तृतीयमन्त्रे पूर्वभागोऽनुषञ्जनीयः ॥

देवस्य त्वेत्येतस्मिन्मन्त्रभागे प्रसवपदाभिप्रायमाह—

" देवस्य त्वा सवितुः प्रसव इत्याह । सवितृप्रसूत एवैनं ब्रह्मणा देवता-भिरभिषिञ्चति । " [ ब्रा० का० १ प्र० ३ अ० ८ ] इति ।

ब्रह्मणा मन्त्रेण प्रतिपाद्याभिरिति शेषः ॥

सर्वौषधिरसमभिषेकद्रव्यत्वेन विधत्ते—

" अन्नस्यान्नस्याभिषिञ्चति । अन्नस्यान्नस्यावरुद्ध्यै ( २ ) । " [ ब्रा० का० १ प्र० ३ अ० ८ ] इति ॥

प्रकारविशेषं विधत्ते—

" पुरस्तात्प्रत्यञ्चमभिषिञ्चति । पुरस्ताद्धि प्रतीचीनमन्नमद्यते । शीर्षतोऽ-भिषिञ्चति । शीर्षतो ह्यन्नमद्यते । " [ ब्रा० का० १ प्र० ३ अ० ८ ] इति ।

आसपुटाघातविषयवाक्यवद्व्याख्येयम् ॥

गुणान्तरं विधत्ते—

" आमुखादन्ववस्रावयति । मुखत एवास्मा अन्नाद्यं दधाति । " [ ब्रा० का० १ प्र० ३ अ० ८ ] इति ।

शिरस आरभ्याऽऽनुलोम्येन मुखपर्यन्तमेवावस्रावयेन्न त्वधः ॥

मन्त्रेष्वग्नीन्द्रबृहस्पतिशब्दतात्पर्यं व्याचष्टे—

" अग्नेस्त्वा साम्राज्येनाभिषिञ्चामीत्याह । एष वा अग्नेः सवः । तेनैवैनमभिषिञ्चति । इन्द्रस्य त्वा साम्राज्येनाभिषिञ्चामीत्याह ( ३ ) । इन्द्रियमेवास्मिन्नेतेन दधाति । बृहस्पतेस्त्वा साम्राज्येनाभिषिञ्चामीत्याह । ब्रह्म वै देवानां बृहस्पतिः । ब्रह्मणैवैनमभिषिञ्चति । " [ ब्रा० का० १ प्र० ३ अ० ८ ] इति ।

एष ओषधिरसोऽग्नेः सवोऽग्निना प्रेरितः । अतोऽग्निशब्दमुच्चारयन्नग्निसंबन्धेन तेनैव रसेनाभिषिञ्चति । एष वा इन्द्रस्य सवो बृहस्पतेः सव इत्यनुसंधेयम् ॥

विधत्ते—

" सोमग्रहा॑श्चावदानीयानि चर्त्विग्भ्य उपहरन्ति । अमुमेव तैर्लोकमन्नवन्तं करोति । सुराग्रहा॑श्चानवदानीयानि च वाजसृद्भ्यः । इममेव तैर्लोकमन्नवन्तं करोति । अथो उभयीष्वेवाभिषिच्यते । " [ ब्रा० का० १ प्र० ३ अ० ८ ] इति ।

पशोर्यान्यवदानीयानि हृदयादीनि हृदयस्याग्रेऽवद्यतीत्यादिश्रुतेः, तानीडायामवत्तानि सोमग्रहांश्चर्त्विग्भ्यः प्रयच्छेत् । शिरआदीन्यनवदानीयानि न शीर्ष्णोऽवद्यति नांसयोरित्यादिश्रुतेः, तानि सुराग्रहांश्च वाजसृद्भ्यो रथान्तरैः षोडशभिराजिधावनं कृतवद्भ्यो वैश्येभ्यः प्रयच्छेत् । एवं सत्युभयीषु दैवीषु मानुषीषु च प्रजास्वयमभिषिक्तो भवति ॥

विधत्ते—

" विमाथं कुर्वते वाजसृतः ( ४ ) । इन्द्रियस्यावरुद्ध्यै । " [ ब्रा० का० १ प्र० ३ अ० ८ ] इति ।

विशेषेण मथनमालोडनं कलहो विमाथः । पानवश्यनटनायाभिनयं विमाथं कुर्युः ॥

सवनत्रये स्तोत्रेषु ऋग्विशेषं विधत्ते—

" अनिरुक्ताभिः प्रातःसवने स्तुवते । अनिरुक्तः प्रजापतिः । प्रजापतेराप्त्यै । वाजवतीभिर्माध्यंदिने । अन्नं वै वाजः । अन्नमेवावरुन्धे । शिपिवि-

( वाजपेयविषयोज्जितिमन्त्राभिधानम् )
ष्टवतीभिस्तृतीयसवने । यज्ञो वै विष्णुः । पशवः शिपिः । यज्ञ एव पशुषु प्रतितिष्ठति " [ ब्रा० का० १ प्र० ३ अ० ८ ] इति ।

अनिरुक्ताभिरव्यक्तदेवताकाभिर्ऋग्भिः । साकल्येन तन्महिम्नो वक्तुमशक्यत्वात्प्रजापतिरनिरुक्तः। वाजशब्दोपेता ऋचो वाजवत्यः, शिपिविष्टशब्दोपेताश्चर्चः शिपिविष्टवत्यस्ताः सर्वाः सामवेदे द्रष्टव्याः । विष्टशब्दो विष्णुपर्यायः सन्नत्र फलव्यापिनं यज्ञमाचष्टे, शिपिशब्दः पशुवाची, अतः शिपिविष्टवतीभिर्ऋग्भिर्यज्ञे पशुषु च प्रतितिष्ठत्येव ॥

सामविशेषं विधत्ते—

" बृहदन्त्यं भवति । अन्तमेवैनꣳ श्रियै गमयति (९)। " [ ब्रा० का० १ प्र० ३ अ० ८ ] इति ।

आन्तिमस्य स्तोत्रस्य यदन्त्यं साम तद्बृहद्गायेत् । तेन गानेनैनं यजमानं श्रियै संपत्सिद्धये यज्ञस्यान्तं समाप्तिं प्रापितवान्भवति ॥

अत्र विनियोगसंग्रहः—

" वाजसप्तभिरन्नस्य होमो देवयजुस्त्रयात् ।
अभिषिञ्चेत्स्वामिनं तं दश मन्त्रा इहोदिताः ॥ १ ॥ " इति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे सप्तमप्रपाठके दशमोऽनुवाकः ॥ १० ॥

---

( अथ प्रथमाष्टके सप्तमप्रपाठक एकादशोऽनुवाकः । )

---

अ॒ग्निरेका॑क्षरेण॒ वाच॒मुद॑जयद॒श्विनौ॒ द्व्य॑क्षरेण प्राणापा॒नावुद॑जयतां॒ विष्णु॒स्त्र्य॑क्षरेण॒ त्रीꣳल्लो॒कानुद॑जय॒त्सोम॒श्चतु॑रक्षरेण॒ चतु॑ष्पदः प॒शून् उद॑जयत्पू॒षा पञ्चा॑क्षरेण प॒ङ्क्तिमुद॑जयद्धा॒ता षड॑क्षरेण॒ षडृ॒तूनुद॑जय॒न्मरु॑तः स॒प्ताक्ष॑रेण स॒प्तप॑दा॒ꣳ शक्व॑रीमुद॑जय॒न्बृह॒स्पति॑र॒ष्टाक्ष॑रेण गाय-

त्रीमुदंजयन्मित्रो नवाक्षरेण त्रिवृतꣳ स्तोममुदंजयत् ( १ ) वरुंणो दशाक्षरेण विराजमुदंजयदिन्द्र एकादशाक्षरेण त्रिष्टुभमुदंजयद्विश्वे देवा द्वादशाक्षरेण जगतीमुदंजयन्वसंवस्त्रयोदशाक्षरेण त्रयोदशꣳ स्तोममुदंजयन्रुद्राश्चतुर्दशाक्षरेण चतुर्दशꣳ स्तोममुदंजयन्नादित्याः पञ्चदशाक्षरेण पञ्चदशꣳ स्तोममुदंजयन्नदितिः षोडशाक्षरेण षोडशꣳ स्तोममुदंजयत्प्रजापतिः सप्तदशाक्षरेण सप्तदशꣳ स्तोममुदंजयत् (२)॥

( त्रिवृतꣳ स्तोममुदंजयत्षट्चत्वारिꣳशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके सप्तमप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

---

(अथ प्रथमाष्टके सप्तमप्रपाठक एकादशोऽनुवाकः । )

---

अग्निः । एकाक्षरेणेत्येकं—अक्षरेण । वाचम् । उदिति । अजयत् । अश्विनौ । द्व्यक्षरेणेति द्वि—अक्षरेण । प्राणापानाविति प्राण—अपानौ । उदिति । अजयताम् । विष्णुः । त्र्यक्षरेणेति त्रि—अक्षरेण । त्रीन् । लोकान् । उदिति । अजयत् । सोमः । चतुरक्षरेणेति चतुः—अक्षरेण । चतुष्पद इति चतुः—

पदः। पशून्। उदिति। अजयत्। पूषा। पञ्चाक्षरेणेति पञ्च—अक्षरेण। पङ्क्तिम्। उदिति। अजयत्। धाता। षडक्षरेणेति षट्—अक्षरेण। षट्। ऋतून्। उदिति। अजयत्। मरुतः। सप्ताक्षरेणेति सप्त—अक्षरेण। सप्तपदामिति सप्त—पदाम्। शक्करीम्। उदिति। अजयन्। बृहस्पतिः। अष्टाक्षरेणेत्यष्टा—अक्षरेण। गायत्रीम्। उदिति। अजयत्। मित्रः। नवाक्षरेणेति नव—अक्षरेण। त्रिवृतमिति त्रि—वृतम्। स्तोमम्। उदिति। अजयत् ( १ )। वरुणः। दशाक्षरेणेति दश—अक्षरेण। विराजमिति वि—राजम्। उदिति। अजयत्। इन्द्रः। एकादशाक्षरेणेत्येकादश—अक्षरेण। त्रिष्टुभम्। उदिति। अजयत्। विश्वे। देवाः। द्वादशाक्षरेणेति द्वादश—अक्षरेण। जगतीम्। उदिति। अजयन्। वसवः। त्रयोदशाक्षरेणेति त्रयोदश—अक्षरेण। त्रयोदशमिति त्रयः—दशम्। स्तोमम्। उदिति। अजयन्। रुद्राः। चतुर्दशाक्षरेणेति चतुर्दश—अक्षरेण। चतुर्दशमिति चतुः—दशम्। स्तोमम्। उदिति। अजयन्। आदित्याः। पञ्चदशाक्षरेणेति पञ्चदश—अक्षरेण। पञ्चदशमिति पञ्च—दशम्। स्तोमम्। उदिति।

अजयन् । अदितिः । षोडशाक्षरेणेति षोडश—अक्षरेण । षोडशम् । स्तोमम् । उदिति । अजयत् । प्रजापतिरिति प्रजा—पतिः । सप्तदशाक्षरेणेति सप्तदश—अक्षरेण । सप्तदशमिति सप्त—दशम् । स्तोमम् । उदिति । अजयत् ( २ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टके सप्तमप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

---

( अथ प्रथमकाण्डे सप्तमप्रपाठक एकादशोऽनुवाकः । )

---

दशमेऽन्नहोम उक्तः । एकादश उज्जितिमन्त्रा उच्यन्ते ।

कल्पः—" अथ यजमानमन्वास्थायोज्जितीर्वाचयत्यग्निरेकाक्षरेण वाचमुदजयदिति सप्तदश " इति ।

पाठस्तु—

अग्निरेकाक्षरेण वाचमुदजयदश्विनौ द्व्यक्षरेण प्राणापानावुदजयतां विष्णुस्त्र्यक्षरेण त्रीँल्लोकानुदजयत्सोमश्चतुरक्षरेण चतुष्पदः पशूनुदजयत्पूषा पञ्चाक्षरेण पङ्क्तिमुदजयद्धाता षडक्षरेण षडृतूनुदजयन्मरुतः सप्ताक्षरेण सप्तपदाꣳ शक्करीमुदजयन्बृहस्पतिरष्टाक्षरेण गायत्रीमुदजयन्मित्रो नवाक्षरेण त्रिवृतꣳ स्तोममुदजयद्वरुणो दशाक्षरेण विराजमुदजयदिन्द्र एकादशाक्षरेण त्रिष्टुभमुदजयद्विश्वे देवा द्वादशाक्षरेण जगतीमुदजयन्वसवस्त्रयोदशाक्षरेण त्रयोदशꣳ स्तोममुदजयन्रुद्राश्चतुर्दशाक्षरेण चतुर्दशꣳ स्तोममुदजयन्नादित्याः पञ्चदशाक्षरेण पञ्चदशꣳ

( वाजपेयोपयुक्तातिग्राह्यमन्त्राभिधानम् )

स्तोममुदजयन्नदितिः षोडशाक्षरेण षोडशꣳ स्तोममुदजयत्प्रजापतिः सप्तदशाक्षरेण सप्तदशꣳ स्तोममुदजयत्॥, इति ॥

आश्रावयेत्यादिके सप्तदशाक्षरे मन्त्रसंघ एकैकाक्षरवृद्ध्या तत्तन्मन्त्रं पठित्वा तत्सामर्थ्यादग्न्यादयो वागादीनुदजयन् । अथ वा विध्यन्तर एकाक्षरो मन्त्रशास्त्रप्रसिद्ध्या वागग्निबीजं तेनैकाक्षरेण मन्त्रेणाग्नेर्वागुज्जयः । द्व्यक्षरेणाजपामन्त्रेण प्राणापानात्मकेनाश्विनोः प्राणापानोज्जयः। एवमन्येऽपि त्र्यक्षरादिमन्त्रा यथायोगमुन्नेयाः । मन्त्राक्षरसंख्यानुसारेण लोकत्रयादिजयो विज्ञेयः। त्रिवृत्स्तोमगतानामृचां नवसंख्योपेतत्वात्तज्जयो द्रष्टव्यः । त्रयोदशस्तोमादावपि तिसृणामृचामावृत्तिविशेषेण तत्तत्संख्या द्रष्टव्या । एतदुज्जितिविधिस्तु ता वा एता उज्जितयो व्याख्यायन्त इत्येतादृशः पूर्वमेवास्माभिर्व्याख्यातः सोऽयमत्रोत्कर्षणीयः ॥

अत्र विनियोगसंग्रहः—

“ अग्निः सप्तदशाऽऽम्नाता उज्जितीर्वाचयेदमूः ।
यजमानं रथेष्वेषु धावत्स्वध्वर्युरादरात् ॥ १ ॥ ” [इति ॥]

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे सप्तमप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

---

( अथ प्रथमाष्टके सप्तमप्रपाठके द्वादशोऽनुवाकः । )

---

उपयामगृहीतोऽसि नृषदं त्वा द्रुषदं भुवनसदमिन्द्राय जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वोपयामगृहीतोऽस्यप्सुषदं त्वा घृतसदं व्योमसदमिन्द्राय जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वोपयामगृहीतोऽसि पृथिविषदं त्वाऽ-

---

१ ख. मन्त्रः शा° । २ क. घ. ङ. वाऽग्नि° । २ क. घ. ङ. च. °त्तिशे° ।

न्तरिक्षसदं नाकसदमिन्द्राय जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा । ये ग्रहाः पञ्चजनीना येषां तिस्रः परमजाः । दैव्यः कोशः ( १ ) समुब्जितः । तेषां विशिप्रियाणामिषमूर्जं समग्रभीमेष ते योनिरिन्द्राय त्वा । अपां रसमुद्वयसं सूर्यरश्मिं समाभृतम् । अपां रसस्य यो रसस्तं वो गृह्णाम्युत्तममेष ते योनिरिन्द्राय त्वा । अया विष्ठा जनयन्कर्वराणि स हि घृणिरुरुर्वराय गातुः । स प्रत्युदैद्धरुणो मध्वो अग्रं स्वायां यत्तनुवां तनूमैरयत । उपयामगृहीतोऽसि प्रजापतये त्वा जुष्टं गृह्णाम्येष ते योनिः प्रजापतये त्वा (२)॥

( कोशस्तनुवां त्रयोदश च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके सप्तमप्रपाठके द्वादशोऽनुवाकः ॥ १२ ॥

---

( अथ प्रथमाष्टके सप्तमप्रपाठके द्वादशोऽनुवाकः । )

---

उपयामगृहीत इत्युपयाम—गृहीतः । असि । नृषदमिति नृ—सदम् । त्वा । द्रुषदमिति द्रु—सदम् । भुवनसदमिति भुवन—सदम् । इन्द्राय । जुष्टम् ।

( वाजपेयोपयुक्तातिग्राह्यमन्त्राभिधानम् )

गृह्णामि । एषः । ते । योनिः । इन्द्राय । त्वा । उपयामगृहीत इत्युपयाम—गृहीतः । असि । अप्सुषदमित्यप्सु—सदम् । त्वा । घृतसदमिति घृत—सदम् । व्योमसदमिति व्योम—सदम् । इन्द्राय । जुष्टम् । गृह्णामि । एषः । ते । योनिः । इन्द्राय । त्वा । उपयामगृहीत इत्युपयाम—गृहीतः । असि । पृथिविषदमिति पृथिवि—सदम् । त्वा । अन्तरिक्षसदमित्यन्तरिक्ष—सदम् । नाकसदमिति नाक—सदम् । इन्द्राय । जुष्टम् । गृह्णामि । एषः । ते । योनिः । इन्द्राय । त्वा । ये । ग्रहाः । पञ्चजनीना इति पञ्च—जनीनाः । येषाम् । तिस्रः । परमजा इति परम—जाः । दैव्यः । कोशः ( १ ) । समुब्जित इति सम्—उब्जितः । तेषाम् । विशिप्रियाणामिति वि—शिप्रियाणाम् । इषम् । ऊर्जम् । सम् । अग्रभीम् । एषः । ते । योनिः । इन्द्राय । त्वा । अपाम् । रसम् । उद्वयसमित्युत्—वयसम् । सूर्यरश्मिमिति सूर्य—रश्मिम् । समाभृतमिति सम्—आभृतम् । अपाम् । रसस्य । यः । रसः । तम् । वः । गृह्णामि । उत्तममित्युत्—तमम् । एषः । ते । योनिः । इन्द्राय । त्वा । अया । विष्ठा इति वि—

स्थाः । जनयन् । कर्वराणि । सः । हि । घृणिः । उरुः । वराय । गातुः । सः । प्रति । उदिति । एव । धरुणः । मध्वः । अग्रम् । स्वायाम् । यत् । तनुवाम् । तनूम् । ऐरयत । उपयामगृहीत इत्युपयाम—गृहीतः । असि । प्रजापतय इति प्रजा—पतये । त्वा । जुष्टम् । गृह्णामि । एषः । ते । योनिः । प्रजापतय इति प्रजा—पतये । त्वा ( २ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टके सप्तमप्रपाठके द्वादशोऽनुवाकः ॥ १२ ॥

---

( अथ प्रथमकाण्डे सप्तमप्रपाठके द्वादशोऽनुवाकः । )

---

एकादश उज्जितिमन्त्रा उक्ताः । द्वादशेऽतिग्राह्यमन्त्रा उच्यन्ते ।

कल्पः—" आग्रयणं गृहीत्वा पञ्चैन्द्रानतिग्राह्यान्गृह्णात्युपयामगृहीतोऽसि नृषदं त्वा द्रुषदमित्येताभिः पञ्चभिः " इति ।

तत्र प्रथममन्त्रपाठस्तु—

उपयामगृहीतोऽसि नृषदं त्वा द्रुषदं भुवनसदमिन्द्राय जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा, इति ।

हे प्रथमातिग्राह्य त्वमुपयामेन पृथिव्यात्मकेन पात्रेण गृहीतोऽसि । इयं वा उपयाम इति पूर्वमुदाहृतम् । मनुष्येषु वनस्पतिषु भुवनेषु स्वामित्वेनावस्थितमिन्द्राय प्रियं त्वां गृह्णामि । एष खरप्रदेशस्ते स्थानं तस्मादिन्द्राय त्वामत्र सादयामि । एष इत्यादिः सादनमन्त्रः ॥

नृषदमित्यादिपदाभिप्रायमाह—

" नृषदं त्वेत्याह । प्रजा वै नृन् । प्रजास्वेवैतेन सूयते । द्रुषदमित्याह ।

वनस्पतयो वै द्रुं। वनस्पतीनामेवैतेन सूयते। भुवनसदमित्याह। यदा वै वसीयान्भवति। भुवनमगन्निति वै तमाहुः। भुवनमेवैतेन गच्छति (१)।" [ब्रा० का० १ प्र० ३ अ० ९] इति।

नृभरस्तेषु सीदतीति नृषत्तं नृषदम्। एतेन यजुष्पाठेन प्रजानां मध्ये सूयते स्वामित्वेनाभिषिच्यते। यदा लोके वसीयान्धनाढ्यो भवति तदा तं पुरुषं स्वामित्वेन कृत्स्नं भुवनमगन्प्राप्तवानिति जना आहुः॥

अथ द्वितीयग्रहणमन्त्रः—

उपयामगृहीतोऽस्यप्सुषदं त्वा घृतसदं व्योमसदमिन्द्राय जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा, इति।

पूर्ववद्व्याख्येयम्॥

एतदेवाभिप्रेत्य तथैव व्याचष्टे—

"अप्सुषदं त्वा घृतसदमित्याह। अपामेवैतेन घृतस्य सूयते। व्योमसदमित्याह। यदा वै वसीयान्भवति। व्योमागन्निति वै तमाहुः। व्योमैवैतेन गच्छति।" [ब्रा० का० १ प्र० ३ अ० ९] इति।

अप्स्वित्यादिपाठेन तत्स्वामित्वेनाभिषेकः। धनाढ्यस्य व्योमगामित्वं नाम गजाश्वारोहणम्॥

अथ तृतीयग्रहणमन्त्रः—

उपयामगृहीतोऽसि पृथिविषदं त्वाऽन्तरिक्षसदं नाकसदमिन्द्राय जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा।, इति।

पूर्ववद्व्याचष्टे—

"पृथिविषदं त्वाऽन्तरिक्षसदमित्याह। एषामेवैतेन लोकाना॰ सूयते। तस्माद्वाजपेययाजी न कंचन प्रत्यवरोहति। अपीव हि देवताना॰ सूयते। नाकसदमित्याह। यदा वै वसीयान्भवति। नाकमगन्निति वै तमाहुः। नाकमेवैतेन गच्छति।" [ब्रा० का० १ प्र० ३ अ० ९] इति।

तस्मादयं वाजपेययागेनाग्न्यादिदेवतानामपि मध्येऽभिषिक्त इव भवति। अग्नेस्त्वा साम्राज्येनाभिषिञ्चामीत्यादिमन्त्रेष्वग्न्यादीनां यत्तत्साम्राज्यं तेन

१ क. घ. ङ. च. 'क्तश्च भ'।

निमित्तेनाभिषेकस्योक्तत्वान्न प्रत्यवरोहति। अपि तस्माद्देवतानां मध्येऽभिषिक्तत्वाद्देववदेव कमपि मनुष्यं प्रति गजादिवाहनान्नावरोहति नावरोहेदिति विधिः। अत एवाऽऽपस्तम्ब आह—"यावज्जीवं न कंचन प्रत्यवरोहेद्बृहस्पतिसवेन वा प्रत्यवरोहणीयेन यजेत" इति ॥

अथ चतुर्थग्रहणमन्त्रः—

ये ग्रहाः पञ्चजनीना येषां तिस्रः परमजाः। दैव्यः कोशः समुब्जितः। तेषां विशिप्रियाणामिषमूर्जꣳ समग्रभीमेष ते योनिरिन्द्राय त्वा।, इति।

येऽतिग्राह्यरूपा ग्रहाः पञ्चजनीनाः पञ्चजनेभ्यो देवमनुष्यासुररक्षोगन्धर्वेभ्यो निषादपञ्चमेभ्यो वर्णेभ्यो वा हिताः। येषामतिग्राह्याणां तिस्र आग्नेयैन्द्रसौर्याख्यातिग्राह्यरूपाः परमजाः प्रकृतयः। किं च येषां प्रभावेन दैव्यो दिवि भवः कोशो मेघः समुब्जितः सम्यङ्न्युब्जीकृतो वर्षाभिमुखः कृत इत्यर्थः। विविधानि शिप्राणि हनुस्थानीयानि पात्राग्राणि तैरुपेता विशिप्रियास्तादृशानां तेषामतिग्राह्याणां पूरणायेषमन्नसदृशमूर्जं बलप्रदं सोमरसं समग्रभीं सम्यग्गृह्णामि ॥

पञ्चजनीनशब्दाभिप्रायं दर्शयति—

"ये ग्रहाः पञ्चजनीना इत्याह। पञ्चजनानामेवैतेन सूयते।" [ब्रा० का० १ प्र० ३ अ० ९] इति।

एतेन मन्त्रपाठेन निषादपञ्चमानां वर्णानां स्वामित्वेनाभिषिच्यते ॥

अथ पञ्चमग्रहणमन्त्रः—

अपाꣳ रसमुद्वयसꣳ सूर्यरश्मिꣳ समाभृतम्। अपाꣳ रसस्य यो रसस्तं वो गृह्णाम्युत्तममेष ते योनिरिन्द्राय त्वा।,इति।

हेऽतिग्राह्या वो युष्माकं मध्य उत्तमं चरमं ग्रहं तं तथाविधं गृह्णामि। किंविधम्। अपां रसम्। उदकस्यैव सोमरसत्वेन परिणामात्। उद्भूतं वयोऽन्नं जीवनं वा यस्य तमुद्वयसम्। सोमरसो ह्यन्नभूतो जीवनहेतुश्च। अपाम सोममृता अभूमेत्युक्तत्वात्। सूर्य ( र्यो? ) रश्मिः परिपाकहेतुर्यस्य तं सूर्यरश्मिम्। वृष्टिक्लिन्ना ओषधय आतपेन पच्यन्तेऽन्यथा वृष्ट्याधिक्येन पूयेयुः। समाभृतं गायत्र्या द्युलोकात्सम्यगानीतम्। किं चापां रसः सोमवल्लिरूपेण परिणतस्तस्यापि यो रसः सारस्तादृशमुदकरसम् ॥

(काम्ययाज्यापुरोनुवाक्याभिधानम्)

स्वामित्वं तेजोयुक्तत्वं च भागद्वयपाठेन भवतीति दर्शयति—

"अपाꣳ रसमुद्वयसमित्याह। अपामेवैतेन रसस्य सूयते। सूर्यरश्मिꣳ समाभृतमित्याह सशुक्रत्वाय (२)।" [ब्रा० का० १ प्र०३अ० ९] इति।

कल्पः—"अया विष्ठा जनयन्कर्वराणीति सप्तदश प्राजापत्यान्सोमग्रहान्गृह्णाति" इति।

पाठस्तु—

अया विष्ठा जनयन्कर्वराणि स हि घृणि-
रुरुर्वराय गातुः। स प्रत्युदैद्धरुणो मध्वो
अग्रꣳ स्वायां यत्तनुवां तनूमैरयत।
उपयामगृहीतोऽसि प्रजापतये त्वा जुष्टं
गृह्णाम्येष ते योनिः प्रजापतये त्वा॥, इति॥

अयाऽयं प्रजापतिर्विष्ठा विशेषेणात्र स्थितः कर्वराण्येतानि कर्माणि जनयन्संपादयन्वर्तते। यस्मात्स प्रजापतिर्घृणिर्दीप्तिमान्प्रकाशको भूत्वा वराय श्रेष्ठाय कर्मफलायोरुर्गातुर्विस्तीर्णो मार्गो भवति तस्मात्स प्रजापतिर्मध्वो मधुनः कर्मफलस्य धरुणो धारयिता सन्नग्रं प्रत्यस्मत्समीपं प्रति उदैदुत्कर्षेण प्राप्नोतु। यद्यस्मात्स्वायां तनुवां स्वकीये शरीरे तनूमस्मच्छरीरमैरयत प्रापयति, तस्माद्वयं फलं प्राप्स्याम इति शेषः। एकयर्चा गृह्णातीत्येतस्य विधिः, स च पूर्वमेव व्याख्यातः॥

अत्र विनियोगसंग्रहः—

"उपेत्यतिग्राह्यमैन्द्रं गृहीत्वैषेति सादयेत्।
उत्तरेषु चतुर्ष्वेवमया सप्तदश ग्रहान्॥
प्राजापत्यान्प्रगृह्णाति मन्त्रा द्वादश वर्णिताः॥ १॥" इति॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे सप्तमप्रपाठके द्वादशोऽनुवाकः॥ १२॥

---

(अथ प्रथमाष्टके सप्तमप्रपाठके त्रयोदशोऽनुवाकः।)

---

अन्वह मासा अन्विद्वनान्यन्वोषधीरनु पर्व-

---

१ ख. 'णावस्थि'।

तासः । अन्विन्द्रꣳ रोदसी वावशाने अन्वापो अजिहत जायमानम् । अनु ते दायि मह इन्द्रियाय सत्रा ते विश्वमनु वृत्रहत्ये । अनु क्षत्रमनु सहो यजत्रेन्द्र देवेभिरनु ते नृषह्ये । इन्द्राणीमासु नारिषु सुपत्नीमहमश्रवम् । न ह्यस्या अपरं चन जरसा ( १ ) मरते पतिः । नाहमिन्द्राणि रारण सख्युर्वृषाकपेर्ऋते । यस्येदमप्यꣳ हविः प्रियं देवेषु गच्छति । यो जात एव प्रथमो मनस्वान्देवो देवान्क्रतुना पर्यभूषत् । यस्य शुष्माद्रोदसी अभ्यसेतां नृम्णस्य मह्ना स जनास इन्द्रः । आ ते मह इन्द्रोत्युग्र समन्यवो यत्समरन्त सेनाः । पताति दिद्युन्नर्यस्य बाहुवोर्मा ते ( २ ) मनो विष्वद्रियग्वि चारीत् । मा नो मर्धीरा भरा दद्धि तन्नः प्र दाशुषे दातवे भूरि यत्ते । नव्ये देष्णे शस्ते अस्मिन्त उक्थे प्र ब्रवाम वयमिन्द्र स्तुवन्तः । आ तू भर माकिरेतत्परि ष्ठाद्विद्मा हि त्वा वसुपतिं वसूनाम् । इन्द्र यत्ते माहिनं दत्रमस्त्यस्मभ्यं तद्धर्यश्व ( ३ ) प्र यन्धि । प्रदातारꣳ हवामह इन्द्रमा हविषा वयम् । उभा

हि हस्ता वसुना पृणस्वाऽऽ प्र यच्छ दक्षिणादोत सव्यात् । प्रदाता वज्री वृषभस्तुराषाट्छुष्मी राजा वृत्रहा सोमपावा । अस्मिन्यज्ञे बर्हिष्या निषद्याथा भव यजमानाय शं योः । इन्द्रः सुत्रामा स्ववाꣳ अवोभिः सुमृडीको भवतु विश्ववेदाः । बाधतां द्वेषो अभयं कृणोतु सुवीर्यस्य (४) पतयः स्याम । तस्य वयꣳ सुमतौ यज्ञियस्यापि भद्रे सौमनसे स्याम । स सुत्रामा स्ववाꣳ इन्द्रो अस्मे आराच्चिद्द्वेषः सनुतर्युयोतु । रेवतीर्नः सधमाद इन्द्रे सन्तु तुविवाजाः । क्षुमन्तो याभिर्मदेम । प्रो ष्वस्मै पुरोरथमिन्द्राय शूषमर्चत । अभीके चिदु लोककृत्सङ्गे समत्सु वृत्रहा । अस्माकं बोधि चोदिता नभन्तामन्यकेषाम् । ज्याका अधि धन्वसु (५) ॥

(जरसा मा ते हर्यश्व सुवीर्यस्याध्येकं च ।)

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके सप्तमप्रपाठके त्रयोदशोऽनुवाकः ॥ १३ ॥

(पाकयज्ञꣳ सꣳ श्रवाः परोक्षं बर्हिषो ध्रुवामगन्मेत्याह देवं सवितर्देवस्याहं क्षत्रस्योल्बं वाजस्याग्निरेकाक्षरेणोपयामगृहीतोऽसि नृषदमन्वह त्रयोदश ॥ १३ ॥)

( काम्ययाज्यापुरोनुवाक्याभिधानम् )

( पाकयज्ञं परोक्षं ध्रुवां वि सृजते च नः सर्ववीरां पर्तयः स्यामैकंप आशत् ॥ ९१ ॥ )

हरिः ॐ ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टके सप्तमः प्रपाठकः ॥ ७ ॥

---

( अथ प्रथमाष्टके सप्तमप्रपाठके त्रयोदशोऽनुवाकः । )

---

अन्विति । अहं । मासाः । अन्विति । इत् । वनानि । अन्विति । ओषधीः । अन्विति । पर्वतासः । अन्विति । इन्द्रम् । रोदसी इति । वावशाने इति । अन्विति । आपः । अजिहत । जायमानम् । अन्विति । ते । दायि । महे । इन्द्रियाय । सत्रा । ते । विश्वम् । अन्विति । वृत्रहत्य इति वृत्र—हत्ये । अन्विति । क्षत्रम् । अन्विति । सहः । यजत्र । इन्द्र । देवेभिः । अन्विति । ते । नृषह्य इति नृ—सह्ये । इन्द्राणीम् । आसु । नारिषु । सुपत्नीमिति सु—पत्नीम् । अहम् । अश्रवम् । न । हि । अस्याः । अपरम् । चन । जरसा ( १ ) । मरते । पतिः । न । अहम् । इन्द्राणि । रारण । सख्युः । वृषाकपेरिति वृषा—कपेः । ऋते । यस्य । इदम् । अप्यम् । हविः । प्रियम् । देवेषु । गच्छति । यः । जातः । एव ।

(काम्ययाज्यापुरोनुवाक्याभिधानम्)

प्रथमः। मनस्वान्। देवः। देवान्। क्रतुना। पर्यभूषदिति परि—अभूषत्। यस्य। शुष्मात्। रोदसी इति। अभ्यसेताम्। नृम्णस्य। मह्ना। सः। जनासः। इन्द्रः। एति। ते। महः। इन्द्र। ऊती। उग्र। समन्यव इति स—मन्यवः। यत्। समरन्तेति सम्—अरन्त। सेनाः। पताति। दिद्युत्। नर्यस्य। बाहुवोः। मा। ते (२)। मनः। विष्वद्रियगिति विष्व—द्रियक्। वीति। चारीत्। मा। नः। मर्धीः। एति। भर। दद्धि। तत्। नः। प्रेति। दाशुषे। दातवे। भूरि। यत्। ते। नव्ये। देष्णे। शस्ते। अस्मिन्। ते। उक्थे। प्रेति। ब्रवाम। वयम्। इन्द्र। स्तुवन्तः। एति। तु। भर। माकिः। एतत्। परीति। स्थात्। विद्म। हि। त्वा। वसुपतिमिति वसु—पतिम्। वसूनाम्। इन्द्र। यत्। ते। माहिनम्। दत्रम्। अस्ति। अस्मभ्यमित्यस्म—भ्यम्। तत्। हर्यश्वेति हरि—अश्व (३)। प्रेति। यन्धि। प्रदातारमिति प्र—दातारम्। हवामहे। इन्द्रम्। एति। हविषा। वयम्। उभा। हि। हस्ता। वसुना। पृणस्व। आ। प्रेति। यच्छ। दक्षिणात्। एति। उत। सव्यात्। प्रदातेति प्र—दाता। वज्री।

वृषभः । तुराषाट् । शुष्मी । राजा । वृत्रहेति वृत्र—हा । सोमपावेति सोम—पावा । अस्मिन् । यज्ञे । बर्हिषि । एति । निषद्येति नि—सद्य । अथ । भव । यजमानाय । शम् । योः । इन्द्रः । सुत्रामेति सु—त्रामा । स्ववानिति स्व—वान् । अवोभिरित्यवः—भिः । सुमृडीक इति सु—मृडीकः । भवतु । विश्ववेदा इति विश्व—वेदाः । बाधताम् । द्वेषः । अभयम् । कृणोतु । सुवीर्यस्येति सु—वीर्यस्य (४) । पतयः । स्याम । तस्य । वयम् । सुमताविति सु—मतौ । यज्ञियस्य । अपीति । भद्रे । सौमनसे । स्याम । सः । सुत्रामेति सु—त्रामा । स्ववानिति स्व—वान् । इन्द्रः । अस्मे इति । आरात् । चित् । द्वेषः । सनुतः । युयोतु । रेवतीः । नः । सधमाद इति सध—मादः । इन्द्रे । सन्तु । तुविवाजा इति तुवि—वाजाः । क्षुमन्तः । याभिः । मदेम । प्रो इति । स्विति । अस्मै । पुरोरथमिति पुरः—रथम् । इन्द्राय । शूषम् । अर्चत । अभीके । चित् । उ । लोककृदिति लोक—कृत् । सङ्गे । समत्स्विति समत्—सु । वृत्रहेति वृत्र—हा । अस्माकम् । बोधि । चोदिता ।

( काम्ययाज्यापुरोनुवाक्याभिधानम् )

नभंन्ताम् । अन्यकेषाम् । ज्याकाः । अधीति । धन्व-स्विति धन्वं—सु ( ५ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टके सप्तमप्रपाठके त्रयोदशोऽनुवाकः ॥ १३ ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टके सप्तमः प्रपाठकः ॥ ७ ॥

---

( अथ प्रथमकाण्डे सप्तमप्रपाठके त्रयोदशोऽनुवाकः । )

---

द्वादशे वाजपेयमन्त्राः समापिताः । त्रयोदशे काम्ययाज्या [पुरोनुवाक्या] उच्यन्ते ।

काम्येष्टिकाण्डे काचिदिष्टिरेवमाम्नायते—

" इन्द्रायान्वृजवे पुरोडाशमेकादशकपालं निर्वपेद्ग्रामकाम इन्द्रमेवान्वृजꣳ स्वेन भागधेयेनोप धावति स एवास्मै सजातानननुकान्करोति ग्राम्येव भवति " [ सं० का० २ प्र० २ अ० ८ ] इति ।

अनुकूलश्चासावृजुश्चेत्यन्वृजुः, साहाय्यकरणमानुकूल्यं, विरोधानाचारणमृजुत्वं तादृशम् । इन्द्रोऽस्मै यजमानाय सजाताञ्ज्ञातिप्रभृतिबन्धूननुकानेतस्मिन्ननुकूलान्करोति । ततोऽयं ग्रामस्वामी भवत्येव ॥

तत्र पुरोनुवाक्यामाह—

अन्वह मासा अन्विद्वनान्यन्वोषधीरनु पर्वतासः । अन्विन्द्रꣳ रोदसी वावशाने अन्वापो अजिहत जायमानम् ।, इति ।

अहशब्द इच्छब्दश्च समुच्चये । चैत्रादयो मासास्ते च जायमानमिन्द्रमनुसृत्याजिहतास्माननुग्रहीतुं प्राप्तवन्तः । एवं वनान्योषधयः पर्वता वावशाने अस्मान्कामयमाने रोदसी द्यावापृथिव्यावापश्चाजिहतेति योजना । षोढा वाक्यानि भेत्तुं षडनुशब्दाः । स च भेद आदरार्थः ॥

---

१ ख. 'जुत्वम् । स तादृश इ' । २ ङ. च. 'श इ' ।

अथ याज्यामाह—

अनु ते दायि मह इन्द्रियाय सत्रा ते
विश्वमनु वृत्रहत्ये । अनु क्षत्रमनु सहो
यजत्रेन्द्र देवेभिरनु ते नृषह्ये ।, इति ।

यजत्र यष्टव्य हे इन्द्र महे महते सर्वेभ्यो देवेभ्योऽधिकाय ते तुभ्यं सत्रा सत्रेषु विश्वं सर्वं हविर्देवेभिरग्न्यादिभिरनुयायि अनुक्रमेण दीयते । किमर्थम् । वृत्रहत्ये वृत्रवधमनु ते तवेन्द्रियाय बलसिद्ध्यर्थम् । न केवलं वृत्रवधमनुसृत्य क्षत्रमनु त्वदीयं क्षत्रियत्वजात्यभिमानं चानुसृत्य, सहोऽनु त्वदीयमेव बलमनुसृत्य, नृषह्ये वैरिमनुष्यतिरस्कारशीलमनुसृत्य, त्वयि यथोक्तान्गुणानवेक्ष्य ते तुभ्यं पुनः पुनर्दीयत इति शेषः ॥

इष्ट्यन्तरं विधत्ते—

" इन्द्राण्यै चरुं निर्वपेद्यस्य सेनाऽसꣳशितेव स्यादिन्द्राणी वै सेनायै देवतेन्द्राणीमेव स्वेन भागधेयेनोप धावति सैवास्य सेनाꣳ सꣳ श्यति " [ सं० का० २ प्र० २ अ० ८ ] इति ।

असंशिता तीक्ष्णा न भवति ( वेत् ) स्वकार्यक्षमा नैव भवेदित्यर्थः ॥

तस्यामिष्टौ कंचिदङ्गविशेषं विधत्ते—

" बल्बजानपीध्मे सं नह्येद्गौर्यत्राधिष्कन्ना न्यमेहत्ततो बल्बजा उदतिष्ठन्गवामेवैनं न्यायमपिनीय गा वेदयति " [ सं० का० २ प्र० २ अ० ८ ] इति ।

बल्बजास्तृणविशेषाः । तानपि चोदकप्राप्त[3] इध्मे सम्यग्बध्नीयात् । अधिष्कन्नाऽधिकं पुरीषं प्राप्ता गौर्यत्र देशे न्यमेहन्नितरां मूत्रं करोति, ततो देशाद्बल्बजा उत्पद्यन्ते । तेषां च बल्बजानां बन्धत्वेन यजमानं गवामेव न्यायमपिनीय प्रापय्य गा वेदयति लम्भयति । गवां न्यायः स्वाधीनतया शिक्षितत्वम् । यथा धेनवः शिक्षिताः प्रतिदिनमरण्ये गत्वा यत्र क्वापि पलायनलक्षणं चापलं परित्यज्य काले स्वगृहमेवाऽऽयान्त्यनायासेन दुह्यन्ते यथा वा बलीवर्दाः शिक्षिताः सन्तो रथादीन्स्वामिन इच्छानुसारेण वहन्ति, तथा सेनायाः स्ववशत्वेन कार्यकारित्वं गोन्यायः । गा वेदयति गोवद्धितां स्वाधीनां कार्यकारित्वेन प्रापयतीत्यर्थः ॥

---

१ क. घ. ङ. च. °वधेऽनु । २ ख. भवतीत्य° । ३ क. घ. ङ. च. °न्निरन्तरं मू° ।

( काम्ययाज्यापुरोनुवाक्याभिधानम् )

तत्र पुरोनुवाक्यामाह—

इन्द्राणीमासु नारिषु सुपत्नीमहमश्रवम् । न ह्यस्या अपरं चन जरसा मरते पतिः ।, इति ।

आसु नारिषु देवस्त्रीषु मध्ये सेनास्वामिभूतामिन्द्राणीं सुपत्नीं पतिव्रतामहमश्रवम् । अपरं चनान्यदप्येकमस्ति, अस्या इन्द्राण्याः पतिर्जरसा नहि मरते नैव म्रियते ॥

तत्रैव याज्यामाह—

नाहमिन्द्राणि रारण सख्युर्वृषाकपेर्ऋते । यस्येदमप्यꣳ हविः प्रियं देवेषु गच्छति ।, इति ।

हे इन्द्राणि अहं सख्युर्वृषाकपेर्ऋते त्वत्प्रियमिन्द्रं विना यं कमप्यन्यं देवं न रारण नैव कीर्तयामि । यस्य ममाप्यमप्सु भवमिदं हविः सोमपुरोडाशादिकं प्रियमिष्टं भूत्वा देवेषु गच्छति सर्वान्देवान्प्राप्नोति, तादृशोऽहमिति पूर्वत्रान्वयः ॥

इष्ट्यन्तरं विधत्ते—

"इन्द्राय मन्युमते मनस्वते पुरोडाशमेकादशकपालं निर्वपेत्सङ्ग्रामे संयत्त इन्द्रियेण वै मन्युना मनसा सङ्ग्रामं जयतीन्द्रमेव मन्युमन्तं मनस्वन्तꣳ स्वेन भागधेयेनोप धावति स एवास्मिन्निन्द्रियं मन्युं मनो दधाति जयति तꣳ सङ्ग्रामम्" [ सं० का० २ प्र० २ अ० ८ ] इति ।

मनस्वते धैर्योपेताय, सङ्ग्रामे युद्धे संयत्ते सम्यक्प्रवृत्ते सति, इन्द्रियेण पाणिपादादीन्द्रियपाटवेन, मन्युना वैरिविषयकोपाधिक्येन, मनसा पलायनभीत्यादिवर्जनरूपेण धैर्येण ॥

तत्र पुरोनुवाक्यामाह—

यो जात एव प्रथमो मनस्वान्देवो देवान्क्रतुना पर्यभूषत् । यस्य शुष्माद्रोदसी अभ्यसेतां नृम्णस्य मह्ना स जनास इन्द्रः ।, इति ।

यो देव इन्द्रो जात एवोत्पन्नमात्र एव प्रथमो देवानां मध्ये मुख्यो मनस्वान्धैर्यवांश्च भूत्वा क्रतुना वृत्रवधादिकर्मणा देवानन्यानग्न्यादीन्पर्यभूषदतिक्रान्तवान्, यस्येन्द्रस्य शुष्माद्बलाद्रोदसी द्यावापृथिव्यावभ्यसेतामबिभीताम्, भ्यस भय इति धातुः, जनासो हे जनाः स इन्द्रो नृम्णस्य स्वकीयबलस्य मह्ना महिम्ना युष्मानवत्विति शेषः ॥

याज्यामाह—

आ ते मह इन्द्रोत्युग्र समन्यवो यत्समरन्त सेनाः । पताति दिद्युन्नर्यस्य बाहुवोर्मा ते मनो विष्वद्रियग्वि चारीत्।, इति ।

उग्र हे इन्द्राऽऽ समन्तात्ते तवोती रक्षणं महोऽधिकम् । यद्यस्माद्रक्षणादस्मदीयाः सेनाः समन्यवो वैरिविषयकोपयुक्ताः सत्यः समरन्त सम्यगरमन्त क्रीडा अकुर्वन्परबलं नैवागणयन्नित्यर्थः । स (किं) च नर्यस्य मनुष्यहितस्य ते तव बाहुवोर्दिद्युत्खड्गादिदीप्तिः पताति सर्वत्र प्रसरति । ते मनो विष्वद्रियग्बहुमुखं सन्मा विचारीन्मा विचरतु ॥

पूर्वोक्तामेवेष्टिं फलान्तराय विधत्ते—

" एतामेव निर्वपेद्यो हतमनाः स्वयंपाप इव स्यादेतानि हि वा एतस्मादपक्रान्तान्यथैष हतमनाः स्वयंपाप इन्द्रमेव मन्युमन्तं मनस्वन्तꣳ स्वेन भागधेयेनोप धावति स एवास्मिन्निन्द्रियं मन्युं मनो दधाति न हतमनाः स्वयंपापो भवति " [ सं० का० २ प्र० २ अ० ८ ] इति ।

यः पुरुषो रोगेण द्रव्यहान्यादिना वा हतमना नष्टचित्तः सन्स्वयंपाप इव भ्रान्त इव स्यात्, एतस्मात्पुरुषादेतानीन्द्रियमन्युधैर्याणि अपक्रान्तानि । अथेदानीमेष पुरुषो नष्टचित्तः स्वयं भ्रान्तो भवति तादृश एतामेव निर्वपेदिति पूर्वत्रान्वयः । एतस्यामपीष्टौ पूर्वोक्ते एव याज्यानुवाक्ये ॥

इष्ट्यन्तरं विधत्ते—

" इन्द्राय दात्रे पुरोडाशमेकादशकपालं निर्वपेद्यः कामयेत दानकामा मे प्रजाः स्युरितीन्द्रमेव दातारꣳ स्वेन भागधेयेनोप धावति स एवास्मै दानकामाः प्रजाः करोति दानकामा अस्मै प्रजा भवन्ति " [ सं० का० २ प्र० २ अ० ८ ] इति ॥

तत्र पुरोनुवाक्यामाह—

मा नो मर्धीरा भरा दद्धि तन्नः प्र दाशुषे दातवे भूरि यत्ते । नव्ये देष्णे शस्ते अस्मिन्त उक्थे प्र ब्रवाम वयमिन्द्र स्तुवन्तः ।, इति ।

हे इन्द्र नोऽस्मानस्मदीयाः प्रजाश्च मा मर्धीः कलहार्थिनीर्मा कार्षीः । किं

---

१ ख. क्रीडामकु° । २ ख. °र्थः । न° ।

तु प्रकर्षेण दाशुषे हव्यं दत्तवते यजमानाय दातवे दातुं ते त्वदीयं यद्भूरि धनं संचितमस्ति तदाभर तदाहर। आहृत्य च नोऽस्मभ्यं दद्धि देहि। हे इन्द्र नव्ये नूतने देष्णे त्वद्दानसाधने शस्ते प्रशस्तेऽस्मिन्कर्मणि त उक्थे त्वदीये शस्त्रे स्तुवन्तो वयं प्रब्रवाम प्रकर्षेण प्रार्थयामहे ॥

तत्रैव याज्यामाह—

आ तू भर माकिरेतत्परि ष्ठाद्विद्मा हि त्वा वसुपतिं वसूनाम्। इन्द्र यत्ते माहिनं दत्र-मस्त्यस्मभ्यं तद्धर्यश्व प्र यन्धि।, इति।

हे इन्द्र त्वमा तू भर धनमाहरैव। एतत्त्वदाहृतं धनं माकिर्मैव परिष्ठात्परत्र मा तिष्ठतु। यस्मात्त्वां वसूनां वसुपतिरिति विद्म। कस्यचिदेव धनस्य पतिर्न भवसि, किं तु सर्वेषामिति विवक्षया वसूनां वसुपतिमित्युक्तम्। यस्मादेवं विद्म तस्मादाहरेत्यन्वयः। हे इन्द्र त्वदीयं माहिनं महनीयं दत्रं दातव्यं यद्धनमस्ति हे हर्यश्व हरिनामकाभ्यामश्वाभ्यामुपेतेन्द्र तद्धनमस्मभ्यं प्रयन्धि प्रयच्छ ॥

इष्ट्यन्तरं विधत्ते—

"इन्द्राय प्रदात्रे पुरोडाशमेकादशकपालं निर्वपेद्यस्मै प्रत्तमिव सन्न प्रदीये-तेन्द्रमेव प्रदातारꣳ स्वेन भागधेयेनोप धावति स एवास्मै प्र दापयति" [ सं० का० २ प्र० २ अ० ८ ] इति।

प्रदात्रे प्रदापयित्रे वाक्यस्यान्ते प्रदापयतीति श्रवणात्। यस्मा उत्तमर्णाय प्रतिग्रहीत्रे दायादाय वाऽधमर्णादिः पुरैव प्रकर्षेण दत्तमित्येवं दातव्यं धनम-पलपति तद्धनं स्वत्वेन व्यवह्रियते, वस्तुतस्तु नैव प्रत्तं, तादृश उत्तमर्णादि-र्निर्वपेत् ॥

तत्र पुरोनुवाक्यामाह—

प्रदातारꣳ हवामह इन्द्रमा हविषा वयम्। उभा हि हस्ता वसुना पृणस्वाऽऽप्र यच्छ दक्षिणादोत सव्यात्।, इति।

प्रकर्षेण दातारं दापयितारमिन्द्रं हविषा युक्ता वयमाहवामह आह्वयामः। हे इन्द्र, उभावपि हस्तौ धनेन पृणस्व पूरय, ततो ममाऽऽभिमुख्येन दक्षिणा-द्धस्तात्प्रयच्छ, सव्यादप्याभिमुख्येन प्रयच्छ ॥

तत्र याज्यामाह—

प्रदाता वज्री वृषभस्तुराषाट्छुष्मी राजा
वृत्रहा सोमपावा । अस्मिन्यज्ञे बर्हिष्या
निषद्याथा भव यजमानाय शं योः ।, इति ।

प्रदाता प्रकर्षेण दाता। वज्री वज्रवान्। वृषभोऽभिमतानां धनानां वर्षिता। तुराषाट्शत्रूणां शीघ्रमभिभविता। शुष्मी बलवान्। राजा दीप्यमानः। वृत्रहा वृत्रं हतवान्। सोमपावा सोमस्य पाता। ईदृशस्त्वमस्मिन्यज्ञे बर्हिषि वेद्यां स्तीर्णदर्भे आनिषद्याऽऽगत्योपविश्याथानन्तरं शं सुखकरो योरनिष्टवियोजयिता भव ॥

इष्ट्यन्तरं विधत्ते—

" इन्द्राय सुत्राम्णे पुरोडाशमेकादशकपालं निर्वपेदपरुद्धो वाऽपरुध्यमानो वेन्द्रमेव सुत्रामाणꣳ स्वेन भागधेयेनोप धावति स एवैनं त्रायतेऽनपरुध्यो भवति " [ सं० का० २ प्र० २ अ० ८ ] इति ।

सुत्राम्णे सुष्ठु त्रात्रे। अपरुद्धश्चिरं राज्याद्भ्रष्टः। अपरुध्यमान इदानीमेव भ्रश्यमानः। अनपरुध्यो भ्रंशाविषयः ॥

तत्र पुरोनुवाक्यामाह—

इन्द्रः सुत्रामा स्ववाꣳ अवोभिः सुमृडीको
भवतु विश्ववेदाः। बाधतां द्वेषो अभयं
कृणोतु सुवीर्यस्य पतयः स्याम ।, इति ।

अयमिन्द्रः सुत्रामा सुष्ठु त्राता स्ववान्धनवानवोभी रक्षणैः सुमृडीकः सुखकरो विश्ववेदा अस्मदनुष्ठितकृत्स्नपरिचर्याभिज्ञो भवतु । बाधतामस्मान्बाधमानानां वैरिणां द्वेषो विद्वेषी स इन्द्रोऽस्माकमभयं कृणोतु करोतु। तत्प्रसादाद्वयं सुवीर्यस्य वैर्यभिभवसामर्थ्यस्य पतयः स्याम स्वामिनो भवेम ॥

याज्यामाह—

तस्य वयꣳ सुमतौ यज्ञियस्यापि भद्रे
सौमनसे स्याम । स सुत्रामा स्ववाꣳ
इन्द्रो अस्मे आराच्चिद्द्वेषः सनुतर्युयोतु ।, इति ।

(काम्ययाज्यापुरोनुवाक्याभिधानम्)

वयं यज्ञियस्य यज्ञसंबन्धिनस्तस्येन्द्रस्य सुमतावनुग्रहयुक्ते चित्ते स्थिता भवेम। अपि च भद्रे परममङ्गले सौमनसे मनःसमाधानेऽवस्थिताः स्याम । सुत्रामा सुष्ठु त्राता स्ववान्धनवान्स इन्द्रोऽस्मे अस्माकं द्वेषो द्वेष्यानाराच्चिद्दूरादेव युयोतु पृथक्करोतु । कीदृशानामस्माकं सनुतः संनुतां हविर्दातॄणाम् ॥

इष्ट्यन्तरं विधत्ते—

"इन्द्रो वै सदृङ्देवताभिरासीत्स न व्यावृतमगच्छत्स प्रजापतिमुपाधावत्तस्मा एतमैन्द्रमेकादशकपालं निरवपत्तेनैवास्मिन्निन्द्रियमदधाच्छक्करी याज्यानुवाक्ये अकरोद्वज्रो वै शक्करी स एनं वज्रो भूत्या ऐन्ध सोऽभवत्सोऽबिभेद्भूनः प्र मा धक्ष्यतीति स प्रजापतिं पुनरुपाधावत्स प्रजापतिः शक्कर्या अधि रेवतीं निरमिमीत शान्त्या अप्रदाहाय" [सं० का० २ प्र० २ अ० ८] इति ।

पुरा कदाचिदिन्द्रो देवताभिरितराभिर्हि सदृश आसीत्तदाधिपत्यलक्षणां व्यावृत्तिं न प्राप्तवान् । कश्चिदपि देव एतदीयं भृत्यत्वं नाङ्गी चकार । स इन्द्रः खिन्नः प्रजापतिमुपाजगाम । स प्रजापतिर्व्यावृत्तिकामाय तस्मा इन्द्रायानीनसृष्टिगतेन्द्रदेवताकमेकादशकपालं पुरोडाशं निरवपत् । स प्रजापतिः स्वयमिन्द्रस्य यजमानस्य याग आध्वर्यवमकरोत् । तेनैव यागेनास्मिन्व्यावृत्तिकाम इन्द्रे सामर्थ्यं स्थापितवान् । तत्सिद्ध्यर्थं शक्करीछन्दसा युक्ते द्वे ऋचौ याज्यानुवाक्ये अकरोत् । यद्यप्यत्र प्रो ष्वस्मा इत्येकैव शक्करी तथाऽप्यावृत्ता सती सैव शक्करी याज्या पुरोनुवाक्या च भविष्यतीति । सा शक्करी वज्ररूपा। स वज्र एनं व्यावृत्तिकामिनमिन्द्रं भूत्या आधिपत्यलक्षणायैश्वर्यायैन्ध प्रकाशितवान् । स चेन्द्रोऽधिपतिरभवत् । भूत ऐश्वर्यं प्राप्तः स इन्द्रः पुनरबिभेदियमत्युग्रा शक्करी मां प्रधक्ष्यतीति विचार्य, तच्छान्तये स इन्द्रः प्रजापतिं पुनरुपाधावत् । स प्रजापतिः शक्कर्या अधि अधिकत्वेन रेवतीं रेवतीर्नः सधमाद इत्येतामृचं निर्मितवान् । किमर्थम् । शक्कर्या उग्रत्वशान्त्या इन्द्रस्याप्रदाहाय च ॥

ऐश्वर्ययोग्यराजकुमारादेरैश्वर्याप्राप्तावैश्वर्यप्राप्त्यर्थमिष्टिमिदानीं विधत्ते—

"योऽलं[१] श्रियै सन्त्सदृङ्समानैः स्यात्तस्मा एतमैन्द्रमेकादशकपालं निर्वपेदिन्द्रमेव स्वेन भागधेयेनोप धावति स एवास्मिन्निन्द्रियं दधाति" [सं० का० २ प्र० २ अ० ८] इति ।

---

१ ख. सनूनां ।

यः पुमान्राजकुमारादिः श्रिया ऐश्वर्यायालं सन्समर्थः सन्नपि तदैश्वर्यमप्राप्य समानैः साधारणैरैश्वर्यरहितैः प्राणिभिः सदृशः स्यात्तस्मै तदर्थमियमिष्टिः ॥

तामेतामिष्टिं विधाय याज्यानुवाक्ये विधत्ते—

" रेवती पुरोनुवाक्या भवति शान्त्या अप्रदाहाय शक्करी याज्या वज्रो वै शक्करी स एनं वज्रो भूत्या इन्धे भवत्येव ॥ " [ सं० का० २ प्र० २ अ० ८ इति ॥

रेवत्याः पाठस्तु—

रेवतीर्नः सधमाद इन्द्रे सन्तु तुवि-
वाजाः । क्षुमन्तो याभिर्मदेम ।, इति ।

रेवतीर्धनवत्यः सधमादोऽस्माभिः सह मादयन्त्यो हर्षयुक्तास्तुविवाजा बहन्नोपेताः शक्करीमापितदाहशान्तिप्रदा आपो नोऽस्माकं स्वामिनीन्द्रे सन्त्वस्मत्सुखाय तिष्ठन्तु । याभिरद्भिः सह वयं क्षुमन्तः शब्दायन्त इन्द्रं स्तुवन्तो मदेम हृष्यास्म ॥

शक्कर्याः पाठस्तु—

प्रो ष्वस्मै पुरोरथमिन्द्राय शूषमर्चत ।
अभीके चिदु लोककृत्सङ्गे समत्सु वृत्र-
हा । अस्माकं बोधि चोदिता नभन्तामन्यकेषाम् । ज्याका अधि धन्वसु ।, इति ।

अस्मा इन्द्रायास्येन्द्रस्य पुरोरथं रथस्य पुरोभागे शूषं बलं प्रोष्वर्चत प्रकर्षेण सुष्ठु पूजयत । कथं बलस्य पूजेत्युच्यते । अयमिन्द्रो वृत्रहा वैरिघाती समत्सु सङ्ग्रामेषु सङ्गे योद्धृभिर्वैरिभटैः सङ्गे सति संयोगे सति अभीके चिदु हन्तुं कामयमानेऽपि वैरिणि लोककृत्स्थितिं करोत्येव न तु पलायते, इत्थं बलस्य पूजा । तथा पूजित इन्द्रोऽस्माकमितरव्यावृत्तये चोदिता प्रेरयिता सन्बोधि बुध्यतां सावधानो भवतु । अन्यकेषां कुत्सितानां वैरिणां धन्वसु अधिश्रित्य वर्तमाना ज्याकाः कुत्सिता ज्या नभन्तां नश्यन्तु त्रुट्यन्त्वित्यर्थः॥

अत्र विनियोगसंग्रहः—

" अन्वहान्त्वनुमत्यैन्द्र इन्द्राणीति तु ( मिति ) तच्चरौ ।
यो जातो मन्युमत्यैन्द्रे मा नो दातृमदैन्द्रके ॥ १ ॥

(राजसूयविषयानुमतादियागाष्टकस्य राजसूयविषयनैर्ऋतमन्त्राणां चाभिधानम्)

प्रदा प्रदातृमत्यैन्द्र इन्द्रः सुत्रामसंयुते।
रेवतीः श्रीमदैन्द्रे स्यादत्र मन्त्राश्चतुर्दश ॥ २ ॥" इति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे सप्तमप्रपाठके त्रयोदशोऽनुवाकः ॥ १३ ॥

---

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इति श्रीमद्विद्यातीर्थमहेश्वरापरावतारस्य श्रीमद्राजाधिराजपरमेश्वरस्य श्रीवीरबुक्कमहाराजस्याऽऽज्ञापरिपालकेन माधवाचार्येण विरचिते वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे सप्तमः प्रपाठकः ॥ ७ ॥

---

(अथ प्रथमाष्टकेऽष्टमः प्रपाठकः)

---

(तत्र प्रथमोऽनुवाकः)

हरिः ॐ।

अनुमत्यै पुरोडाशमष्टाकपालं निर्वपति धेनुर्दक्षिणा ये प्रत्यञ्चः शम्यांया अवशीयन्ते तं नैर्ऋतमेककपालं कृष्णं वासः कृष्णतूषं दक्षिणा वीहि स्वाहाऽऽहुतिं जुषाण एष ते निर्ऋते भागो भूते हविष्मत्यसि मुञ्चेममंहंसः स्वाहा नमो य इदं चकाराऽऽदित्यं चरुं निर्वपति वरो दक्षिणाऽऽग्नावैष्णवमेकादशकपालं वामनो वही दक्षिणाऽग्नीषोमीयम् (१)

एकादशकपालꣳ हिरण्यं दक्षिणैन्द्रमेकादशक-
पालमृषभो वही दक्षिणाऽऽग्नेयमष्टाकपालमैन्द्रं
दध्यृषभो वही दक्षिणैन्द्राग्नं द्वादशकपालं
वैश्वदेवं चरुं प्रथमजो वत्सो दक्षिणा सौम्यꣳ
श्यामाकं चरुं वासो दक्षिणा सरस्वत्यै चरुꣳ
सरस्वते चरुं मिथुनौ गावौ दक्षिणा ( २ ) ॥

( अग्नीषोमीयं चतुस्त्रिꣳशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टकेऽ-
ष्टमप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

( अथ प्रथमाष्टकेऽष्टमः प्रपाठकः । )

---

( तत्र प्रथमोऽनुवाकः । )

अनुमत्या इत्यनु—मत्यै । पुरोडाशम् । अष्टाक-
पालमित्यष्टा—कपालम् । निरिति । वपति । धेनुः ।
दक्षिणा । ये । प्रत्यञ्चः । शम्यायाः । अवशीयन्त
इत्यव—शीयन्ते । तम् । नैर्ऋतमिति नैः—ऋतम् ।
एककपालमित्येक—कपालम् । कृष्णम् । वासः ।
कृष्णतूषमिति कृष्ण—तूषम् । दक्षिणा । वीति ।
इहि । स्वाहा । आहुतिमित्या—हुतिम् । जुषाणः ।
एषः । ते । निर्ऋत इति निः—ऋते । भागः । भूते ।
हविष्मती । असि । मुञ्च । इमम् । अꣳहसः । स्वा-

हा । नमः । यः । इदम् । चकार । आदित्यम् । चरुम् । निरिति । वपति । वरः । दक्षिणा । आग्ना-वैष्णवमित्याग्ना—वैष्णवम् । एकादशकपालमित्येका-दश—कपालम् । वामनः । वही । दक्षिणा । अग्नी-षोमीयमित्यग्नी—सोमीयम् ( १ ) । एकादशकपाल-मित्येकादश—कपालम् । हिरण्यम् । दक्षिणा । ऐन्द्रम् । एकादशकपालमित्येकादश—कपालम् । ऋषभः । वही । दक्षिणा । आग्नेयम् । अष्टाकपालमित्य-ष्टा—कपालम् । ऐन्द्रम् । दधि । ऋषभः । वही । दक्षि-णा । ऐन्द्राग्नमित्यैन्द्र—अग्नम् । द्वादशकपालमिति द्वादश—कपालम् । वैश्वदेवमिति वैश्व—देवम् । चरुम् । प्रथमज इति प्रथम—जः । वत्सः । दक्षि-णा । सौम्यम् । श्यामाकम् । चरुम् । वासः । दक्षिणा। सरस्वत्यै । चरुम् । सरस्वते । चरुम् । मिथुनौ । गावौ । दक्षिणा ( २ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टकेऽ-ष्टमप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

( अथ प्रथमकाण्डेऽष्टमः प्रपाठकः । )

---

( तत्र प्रथमोऽनुवाकः । )

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

( राजसूयविषयानुमतादिवाग्नाष्टकस्य राजसूयविषयनैर्ऋतमन्त्राणां चाभिधानम् )

प्रपाठकेऽथाष्टमेऽस्मिन्राजसूयो निगद्यते ।
द्वाविंशत्यनुवाकेषु विंशत्या राजसूयके ॥
अनेकानि प्रधानानि कर्माणि विहितान्यथ ।
द्वाभ्यां सौत्रामणीमन्त्राः काम्या याज्याश्च वर्णिताः ॥
अष्टमे मन्त्रकाण्डस्थे कर्मणां बहुलत्वतः ।
तत्तत्संनिधये प्रोक्ता मन्त्रा विधिपुरःसराः ॥
अनूद्य तान्विधीनर्थवादो ब्राह्मण ईरितः ।
संप्रदायविदोऽतोऽत्र ब्राह्मणद्वयमूचिरे ॥
ब्राह्मणं मन्त्रकाण्डस्थविधिजातमितीरितम् ।
अनुब्राह्मणमन्यत्तु कथितं सार्थवादकम् ॥

तत्र प्रथमानुवाके प्रथमं तावद्ब्राह्मणेन कर्मद्वयं विधीयते—

अनुमत्यै पुरोडाशमष्टाकपालं निर्वपति धेनुर्दक्षिणा ये प्रत्यञ्चः शम्याया अवशीयन्ते तं नैर्ऋतमेककपालं कृष्णं वासः कृष्णतूषं दक्षिणा, इति ।

चतुर्दशीमिश्रितायाः पौर्णमास्या अभिमानिदेवताऽनुमतिः । "अमावास्या सिनीवाली पौर्णमास्यनुमतिः" इति श्रुतेः । "कलाहीने साऽनुमतिः पूर्णे राका निशाकरे" इत्यभिधानात् । सा चानुमतिरत्र देवता, पुरोडाशो द्रव्यमित्येतदेकं कर्म, दक्षिणाभिधानेन वक्ष्यमाणेभ्यः कर्मभ्यो भिन्नाधिकारावगमात् । अस्मिन्कर्मणि पुरोडाशार्थं तण्डुलेषु पिष्यमाणेषु पश्चिमायां दिशि दृषदमभ्याधातुमधः स्थापितायाः शम्यायाः पश्चाद्ये तण्डुलपिष्टलेशा अवशीयन्तेऽधः पतन्ति तल्लेशजातं द्रव्यं निर्ऋतिदेवताकं, तदिदमपरं कर्म, पृथग्दक्षिणाभिधानात् । कृष्णं वासोऽत्र दक्षिणा, तच्च कृष्णतूषं कृष्णदशान्तम् । केषांचिद्वस्त्राणां वैचित्र्याय दशाभागमुपेक्ष्य मध्यमभाग एव काषायहरिद्रादिभी रञ्जितो भवति तद्वन्मा भूदिति कृष्णतूषत्वेन विशेष्यते । एतस्मिन्मुख्ये ब्राह्मणे प्रधानं कर्म विहितम् । अनुब्राह्मणं तु ग्रन्थान्तरे प्रथमकाण्डे षष्ठसप्तमाष्टमप्रपाठकरूपम् ॥

तत्र[१] षष्ठप्रपाठकस्याऽऽदौ पूर्वोदाहृतं कर्मविधिमनूद्य प्रशंसति—

" अनुमत्यै पुरोडाशमष्टाकपालं निर्वपति । ये प्रत्यञ्चः शम्याया अवशी-

१ ख. घ. ङ. च. तन्मा । २ क. घ. ङ. च 'त्र प्र' ।

( राजसूयविषयानुमतादियागाष्टकस्य राजसूयविषयनैर्ऋतमन्त्राणां चाभिधानम् )

यन्ते। तं नैर्ऋतमेककपालम्। इयं वा अनुमतिः। इयं निर्ऋतिः।" [ब्रा० का० १ प्र० ६ अ० १] इति।

भूमिर्द्विविधा शालिगोधूमादिसर्वसस्याढ्या तदयोग्या वा। तत्राऽऽद्यभूमिरूपाऽनुमतिर्द्वितीयभूमिरूपा निर्ऋतिः॥

पश्चान्निरुप्तस्य नैर्ऋतस्याऽऽनुमतादुत्तरकाले न्यायप्राप्तं प्रधानयागप्रचारं बाधितुं पूर्वकालं विधत्ते—

"नैर्ऋतेन पूर्वेण प्रचरति। पाप्मानमेव निर्ऋतिं पूर्वां निरवदयते।" [ब्रा० का० १ प्र० ६ अ० १] इति।

लोके रुग्णानां पुरुषाणामनिष्टं रोगं प्रथमं निवार्य पश्चादिष्टा शरीरपुष्टिः संपाद्यते तद्वदत्रापि पाप्मानं प्रतिकूलां निर्ऋतिं प्रथमतो भागदानेन निवारयति॥

विधिवाक्यगतं कपालैक्यमनूद्य प्रशंसति—

"एककपालो भवति। एकधैव निर्ऋतिं निरवदयते।" [ब्रा० का० १ प्र० ६ अ० १] इति।

एकधैवैकेनैव प्रयत्नेन, कपालबाहुल्ये हि प्रयत्नबाहुल्यं प्रसज्येतेति। तत्त्विदमानुमतनैर्ऋतादिकमन्वारम्भणीयास्थानीयात्पवित्राख्यादग्निष्टोमादूर्ध्वमनुष्ठेयम्॥

तथाऽत्राऽऽपस्तम्ब आह—"राजा स्वर्गकामो राजसूयेन यजेत गवां शतसहस्रं दक्षिणाऽग्निष्टोमः पश्चापवर्गः प्रथममहः पञ्च सहस्राणि पवित्रे ददाति त्रिंशतमभिषेचनीये त्रिंशतं दशपेये दश केशवपनीये विंशतिं व्युष्टिद्विरात्रे पञ्च क्षत्रस्य धृतावपि वा चत्वार्यभिषेचनीये प्रतिसहस्राणीतराण्यहानि षष्टिं शतानि सहस्राणि ददातीति बह्वृचब्राह्मणं भवति तथा दक्षिणा अतिनयेद्यथाऽस्याहानि समकालानि स्युः शेषमनुदिशति श्वोभूत आनुमतादिभिरष्टाभिरन्वहं यजेत पिंषन्नानुमतं पश्चादुत्तरतश्च व्यवशातयति ये प्रत्यञ्चः शम्याया अवशीयन्ते तं नैर्ऋतमेककपालमिति अत्र चाऽऽनुमतमासाद्य नैर्ऋतेन प्रचरति" इति।

बौधायनोऽप्येतदेव विशदयति—"राजसूयेन यक्ष्यमाणो भवति पुरस्तात्फाल्गुन्यै पौर्णमास्यै चैत्र्यै वा पौर्णमास्या अमावास्येन हविषेष्ट्वा दीक्षते तस्य तिस्रो दीक्षास्तिस्र उपसदः सप्तम्यां प्रसूतः संतिष्ठत एष प्रायणीयोऽग्निष्टोमश्चतुष्टोमः सहस्रदक्षिण उदवसानीयान्तोऽथाष्टमेऽह्न्यानुमतं निर्वपति

---

१ क. घ. ङ. °वर्गाः प्र°। २ क. च. °तिसाह°। घ. ङ. °तिषाह°। ३ ख. घ. ङ. च. °वसनी°।

हविः पेष्यै प्रयच्छन्नाह प्राचश्च प्रतीचश्च व्यवशातयेति " इति, " ये प्राञ्चः शम्याया अवशीयन्ते तानध्वर्युः समोप्य संयुत्याऽऽनुमतं श्रपयति, अथ ये प्रत्यञ्चः शम्याया अवशीयन्ते तान्प्रतिप्रस्थाता समोप्य संयुत्य नैर्ऋतं श्रपयति " इति च ॥

वीहि स्वाहाऽऽहुतिं जुषाण एष ते निर्ऋते
भागो भूते हविष्मत्यसि मुञ्चेममꣳहसः
स्वाहा नमो य इदं चकार—

प्रधानकर्ममात्राभिधायकेन मुख्यब्राह्मणेनोपेते प्रकृते मन्त्रकाण्डे नैर्ऋतयागविधिसंनिधौ वीहीत्यादयस्त्रयो मन्त्रा आम्नातास्तेषां विनियोगं बौधायन आह—

" गार्हपत्ये स्रुवाहुतिं जुहोति वीहि स्वाहाऽऽहुतिं जुषाण इति, अथ दक्षिणया द्वारोपनिष्क्रम्य तां दिशं यन्ति यत्रास्य स्वकृतमिरिणं स्पष्टं भवति प्रदरो वा तदेतदेकोल्मुकमुपसमाधायाङ्गुष्ठाभ्यां परिगृह्य नैर्ऋतं जुहोति एष ते निर्ऋते भागो भूते हविष्मत्यसि मुञ्चेममꣳहसः स्वाहेति अत्र कृष्णं वासः कृष्णतूषं निदधाति अथापो व्यतिषिच्य परास्य पात्रं निदधात्यनवेक्षमाणा आयन्त्यथ हस्तपादान्प्रक्षाल्यैतेनैव पथा यथेतमेत्य गार्हपत्ये स्रुवाहुतिं जुहोति स्वाहा नमो य इदं चकारेति अथाऽऽनुमतेन सꣳस्थां करोति धेनुं ददाति " इति ।

हे गार्हपत्य स्वाहा तुभ्यं दत्तामाहुतिं जुषाणः सेवमानो वीहि दक्षिणां दिशं जिगमिषुभिरस्माभिर्विगतो भव माऽस्माननूत्थाय बाधिष्ठाः ॥

कृत्स्नाङ्गविधायके सार्थवादेऽनुब्राह्मणे यथोक्ताहुतिविधिरन्वयव्यतिरेकाभ्यामुन्नीयते—

" यदहुत्वा गार्हपत्य ईयुः (१)। रुद्रो भूत्वाऽग्निरनूत्थाय । अध्वर्युं च यजमानं च हन्यात् । वीहि स्वाहाऽऽहुतिं जुषाण इत्याह । आहुत्यैवैनꣳ शमयति । नाऽऽर्तिमार्छत्यध्वर्युर्न यजमानः ।" [ब्रा० का० १ प्र० ६ अ० १] इति ।

यद्यपि रुद्रः क्रूरदेवः । " रुद्रो वै क्रूरः " इति श्रुतेः । अध्वर्युयजमानयोरार्तिनिवारणाय जुहुयादित्यर्थः ॥

दक्षिणाग्नेरुल्मुकनयनं विधत्ते—

" एकोल्मुकेन यन्ति । तद्धि निर्ऋत्यै भागधेयम् ।" [ब्रा० का० १ प्र० ६ अ० १] इति ।

उल्मुकेन युक्ता इत्यध्याहारः । निर्ऋतेरेकोल्मुकप्रियत्वमर्थवादान्तरगतं हिशब्देन सूच्यते ॥

दक्षिणपश्चिमयोरवान्तरदेशमङ्गुलिनिर्देशेन विधत्ते—

"इमां दिशं यन्ति। एषा वै निर्ऋत्यै दिक्। स्वायामेव दिशि निर्ऋतिं निरवदयते (२)।" [ब्रा० का० १ प्र० ६ अ० १] इति।

नीतस्योल्मुकस्य स्थापनाय देशविशेषं विधत्ते—

"स्वकृत इरिणे जुहोति प्रदरे वा । एतद्वै निर्ऋत्या आयतनम् । स्व एवाऽऽयतने निर्ऋतिं निरवदयते।" [ब्रा० का० १ प्र० ६ अ० १ इति]।

इरिणमूषरक्षेत्रं, तच्च स्वकृतं स्वतःसिद्धं न तु यतः कुतश्चिदादायोषाः प्रक्षिप्ताः। प्रदरः स्वतःसिद्धं भूछिद्रम्।

द्वितीयमन्त्रस्यायमर्थः—हे निर्ऋते पाप्मदेवते, एष एककपालपुरोडाश-स्तव भागः। हे भूते स्वकीयभागे परितोषेणास्मदीयैश्वर्यहेतो त्वमिदानीं हवि-ष्मत्यसि। अत इमं यजमानमंहसो दारिद्र्यप्रदात्पापान्मुञ्च। अत्र स्वाहाकारो बौधायनेनाध्याहृतः॥

निर्ऋतिमुद्दिश्य प्रत्यक्षमेव भागं समर्पयितुमेतच्छब्द इत्यभिप्रेत्य व्याचष्टे—

"एष ते निर्ऋते भाग इत्याह । निर्दिशत्येवैनाम्।" [ब्रा० का० १ प्र० ६ अ० १] इति॥

भूतिशब्देन निर्ऋतिपरामर्शस्याभिप्रायमाह—

"भूते हविष्मत्यसीत्याह। भूतिमेवोपावर्तते।" [ब्रा० का० १ प्र० ६ अ० १] इति।

प्राप्नोतीत्यर्थः॥

मन्त्रसामर्थ्यात्सर्वथा मुञ्चतीत्यमुमभिप्रायं दर्शयति—

"मुञ्चेममꣳहस इत्याह। अꣳहस एवैनं मुञ्चति।" [ब्रा० का० १ प्र० ६ अ० १] इति॥

चोदकप्राप्तं जुह्वा होममपवदितुं विधत्ते—

"अङ्गुष्ठाभ्यां जुहोति (३)। अन्तत एव निर्ऋतिं निरवदयते।" [ब्रा० का० १ प्र० ६ अ० १] इति।

अन्तत एव हस्ताग्रेणैव निर्ऋतिमपसारितवान्भवति॥

मुख्यब्राह्मणे विहितां दक्षिणां प्रशंसति—

"कृष्णं वासः कृष्णतूषं दक्षिणा। एतद्वै निर्ऋत्यै रूपम्। रूपेणैव निर्ऋतिं निरवदयते।" [ब्रा० का० १ प्र० ६ अ० १] इति।

राक्षसजातेः पापरूपाया निर्ऋतेर्देहः कृष्णवर्णः ॥

पृष्ठभागदर्शनरहितं प्रत्यागमनं विधत्ते—

" अप्रतीक्षमायन्ति । निर्ऋत्या अन्तर्हित्यै । " [ ब्रा० का० १ प्र० ६ अ० १ ] इति ।

अदर्शनायेत्यर्थः ।

तृतीयमन्त्रस्यायमर्थः—यो गार्हपत्य इदमस्माभिर्वीहीति शब्देन प्रार्थितमनुष्ठानं तथैव चकार, तस्मै स्वाहा हविर्दत्तं नमस्कारश्च कृतः ॥

विधत्ते—

" स्वाहा नमो य इदं चकारेति पुनरेत्य गार्हपत्ये जुहोति । आहुत्यैव नमस्यन्तो गार्हपत्यमुपावर्तन्ते । " [ ब्रा० का० १ प्र० ६ अ० १ ] इति ॥

नैर्ऋतप्रचारादूर्ध्वं लब्धावसरस्याऽऽनुमतहविषः प्रचारं विधत्ते—

" आनुमतेन प्रचरति । इयं वा अनुमतिः ( ४ ) । इयमेवास्मै राज्यमनुमन्यते । " [ ब्रा० का० १ प्र० ६ अ० १ ] इति ।

सर्वसस्याढ्यायां भूमावयमनुमतिशब्दोऽन्वर्थ इत्यभिप्रायः ॥

नवसूतिकाया गोर्दानं प्रशंसति—

" धेनुर्दक्षिणा । इमामेव धेनुं कुरुते । " [ ब्रा० का० १ प्र० ६ अ० १ ] इति ।

इमामेवानुमतिरूपां भूमिमेव ॥

आनुमतादिभिरष्टाभिरिति यदुदाहृतं तत्रैकस्मिन्दिनेऽनुष्ठितादानुमतादन्यान्क्रमेण दिनान्तरेष्वनुष्ठेयानादित्यादीन्सप्त मुख्यान्यागान्विधत्ते—

आदित्यं चरुं निर्वपति वरो दक्षिणाऽऽग्नावैष्णवमेकादशकपालं वामनो वही दक्षिणाऽग्नीषोमीयमेकादशकपालꣳ हिरण्यं दक्षिणैन्द्रमेकादशकपालमृषभो वही दक्षिणाऽऽग्नेयमष्टाकपालमैन्द्रं दध्यृषभो वही दक्षिणैन्द्राग्नं द्वादशकपालं वैश्वदेवं चरुं प्रथमजो वत्सो दक्षिणा सौम्यꣳ श्यामाकं चरुं वासो दक्षिणा सरस्वत्यै चरुꣳ सरस्वते चरुं मिथुनौ गावौ दक्षिणा ॥, इति ॥

गौर्वै वर इति सूत्रकारेणोदाहृतत्वाद्वरो गौः। वही भारवाही बलीवर्दः। ऋषभः सेचनसमर्थः सांण्डः। आग्नेयैन्द्राभ्यां हविर्भ्यामुपेत एको यागः। ऐन्द्राग्नवैश्वदेवसौम्यैस्त्रिभिर्हविर्भिर्युक्त आग्रयणरूप एक एव यागः। सरस्वतीसरस्वद्देवताभ्यां हविर्भ्यां युक्तो याग एकः। तदेवमादित्यादयः सप्त संपद्यन्ते ॥

अदितिदेवताकं कर्म प्रशंसति—

" आदित्यं चरुं निर्वपति। उभयीष्वेव प्रजास्वभिषिच्यते। दैवीषु च मानुषीषु च।" [ ब्रा० का० १ प्र० ६ अ० १ ] इति।

अनुमतिर्मानुषभूमिः। अत एव राज्यमनुमन्यत इत्युक्तं भवति। अदितिर्देवभूमिरित्यभिप्रेत्य दैवीषु प्रजास्वभिषेकं दर्शयति। अतः पूर्वराज्येन सह समुच्चित्योभयीष्वित्युच्यते ॥

श्रेष्ठस्य गोर्दानं प्रशंसति—

" वरो दक्षिणा। वरो हि राज्यꣳ समृद्ध्यै।" [ ब्रा० का० १ प्र० ६ अ० १ ] इति।

वरः श्रेष्ठो गौस्तस्य राजगृहार्हत्वाद्राज्यत्वम् ॥

अग्निं विष्णुं च पृथक्प्रशंसति—

" आग्नावैष्णवमेकादशकपालं निर्वपति। अग्निः सर्वा देवताः। ( ५ ) विष्णुर्यज्ञः। देवताश्चैव यज्ञं चावरुन्धे।" [ब्रा० का० १ प्र० ६ अ० १] इति।

अग्नेः सर्वदेवतारूपत्वमन्यत्रोपपादितं " ते देवा अग्नौ तनूः संन्यदधत। तस्मादाहुः। अग्निः सर्वा देवताः" इति। पुनरप्यन्यत्राऽऽम्नातम्—" ते देवा बिभ्यतोऽग्निं प्राविशन्तस्मादाहुरग्निः सर्वा देवताः" इति।

फलव्यापित्वाद्यज्ञस्य विष्णुत्वम् ॥

अग्नेर्विष्णोश्च प्रीतिकरं वहित्वं वामनत्वं च दर्शयति—

" वामनो वही दक्षिणा। यद्वही। तेनाऽऽग्नेयः। यद्वामनः। तेन वैष्णवः समृद्ध्यै।" [ ब्रा० का० १ प्र० ६ अ० १ ] इति ॥

अग्नीषोमीयस्य वैरिघातित्वं याजमानमन्त्रब्राह्मणयोर्वृत्रवधब्राह्मणे च प्रसिद्धमित्यभिप्रेत्याऽऽह—

" अग्नीषोमीयमेकादशकपालं निर्वपति। अग्नीषोमाभ्यां वा इन्द्रो वृत्रमहन्निति। यदग्नीषोमीयमेकादशकपालं निर्वपति ( ६ )। वार्त्रघ्नमेव विजित्यै।" [ ब्रा० का० १ प्र० ६ अ० १ ] इति।

---

१ ख. षण्ढः।

तत्कर्म शत्रुघ्नमेव भूत्वा विजयाय पर्याप्तं भवति ॥

हिरण्यस्य समृद्धिहेतुत्वं लोकप्रसिद्धमेव दर्शयति—

" हिरण्यं दक्षिणा समृद्ध्यै । " [ ब्रा० का० १ प्र० ६ अ० १ ] इति॥

मुख्यब्राह्मणगतेनेन्द्रेण सह विकल्पितमैन्द्राग्नं प्रस्तौति—

" इन्द्रो वृत्रꣳ हत्वा । देवताभिश्चेन्द्रियेण च व्यार्ध्यत । स एतमैन्द्राग्नमेकादशकपालमपश्यत् । तं निरवपत् । तेन वै स देवताश्चेन्द्रियं चावारुन्ध । " [ ब्रा० का० १ प्र० ६ अ० १ ] इति ।

व्यार्ध्यत व्यृद्धो वियुक्तोऽभूत् ॥

विधत्ते—

" यदैन्द्राग्नमेकादशकपालं निर्वपति । देवताश्चैव तेनेन्द्रियं च यजमानोऽवरुन्धे । " [ ब्रा० का० १ प्र० ६ अ० १ ] इति ॥

देवद्वयप्रीत्यर्थं गुणद्वयमित्येतद्दर्शयति—

"ऋषभो वही दक्षिणा ( ७ ) । यद्वही । तेनाऽऽग्नेयः । यदृषभः । तेनैन्द्रः समृद्ध्यै । " [ ब्रा० का० १ प्र० ६ अ० १ ] इति ॥

एकस्मिन्यागे विहितं हविर्द्वयं गोगतं गुणद्वयं च पृथक्प्रशंसति—

" आग्नेयमष्टाकपालं निर्वपति । ऐन्द्रं दधि । यदाग्नेयो भवति । अग्निर्वै यज्ञमुखम् । यज्ञमुखमेवर्द्धिं पुरस्ताद्धत्ते । यदैन्द्रं दधि (८) । इन्द्रियमेवावरुन्धे । ऋषभो वही दक्षिणा । यद्वही । तेनाऽऽग्नेयः । यदृषभः । तेनैन्द्रः समृद्ध्यै ।" [ ब्रा० का० १ प्र० ६ अ० १ ] इति ।

अग्निमन्तरेण यज्ञस्याप्रवृत्तेरग्नेर्यज्ञमुखत्वं, तादृशाग्नेः प्रथमहविःप्रदानेन यागस्याऽऽदावेव समृद्धिं धृतवान्भवति ॥

हविर्द्व(त्र)ये दक्षिणाद्वये श्रूयमाणेऽपि कर्मैकत्वसिध्द्यर्थमाग्रयणतां संघरूपां विधातुं प्रस्तौति—

" यावतीर्वै प्रजा ओषधीनामहुतानामाश्नन् । ताः पराभवन् । " [ ब्रा० का० १ प्र० ६ अ० १ ] इति ।

यावत्य ओषधीनां संबन्धिन्य इति शेषः ॥

विधत्ते—

"आग्रयणं भवति हुताद्याय । यजमानस्यापराभावाय ( ९ ) । " [ ब्रा० का० १ प्र० ६ अ० १ ] इति ।

१ ख. च. ॰णवतीं सं॰ ।

( राजसूयविषयानुमतादियागाष्टकस्य राजसूयविषयनैर्ऋतमन्त्राणां चाभिधानम् )

तस्मिन्संघे स्थितस्यैन्द्राग्नस्योपाख्यानेन जयहेतुत्वं दर्शयति—

" देवा वा ओषधीष्वाजिमयुः। ता इन्द्राग्नी उदजयताम्। तावेतमैन्द्राग्नं द्वादशकपालं निरवृणाताम्। यदैन्द्राग्नो भवत्युज्जित्यै। " [ ब्रा० का० १ प्र० ६ अ० १ ] इति ॥

माससामान्येन कपालसंख्यां प्रशंसति—

" द्वादशकपालो भवति। द्वादश मासाः संवत्सरः। संवत्सरेणैवास्मा अन्नमवरुन्धे। " [ ब्रा० का० १ प्र० ६ अ० १ ] इति ॥

वैश्वदेवमन्नं रुचिहेतुरित्येतद्दर्शयति—

" वैश्वदेवश्चरुर्भवति। वैश्वदेवं वा अन्नम्। अन्नमेवास्मै स्वदयति (१०)। " [ ब्रा० का० १ प्र० ६ अ० १ ] इति॥

प्रथमजस्य जनिष्यमाणवत्सापेक्षया समृद्धिहेतुत्वमित्याह—

" प्रथमजो वत्सो दक्षिणा समृद्ध्यै। " [ ब्रा० का० १ प्र० ६ अ० १ ] इति ॥

तृतीयहविषः सोमदेवतायाः स्वीकारे कारणमाह—

"सौम्यꣳ श्यामाकं चरुं निर्वपति। सोमो वा अकृष्टपच्यस्य राजा। अकृष्टपच्यमेवास्मै स्वदयति। " [ ब्रा० का० १ प्र० ६ अ० १ ] इति ॥

प्रतिग्रहमन्त्रे सोमाय वास इति श्रुतिमभिसंधाय दक्षिणां प्रशंसति—

" वासो दक्षिणा। सौम्यꣳ हि देवतया वासः समृद्ध्यै। " [ ब्रा० का० १ प्र० ६ अ० १ ] इति ॥

( + समृद्धिहेतुत्वेन सरस्वतीसरस्वतो चरुमिथुनदक्षिणां च प्रशंसति—

" सरस्वत्यै चरुं निर्वपति। सरस्वते चरुम्। मिथुनमेवावरुन्धे। मिथुनौ गावौ दक्षिणा समृद्ध्यै। " [ ब्रा० का० १ प्र० ६ अ० १ ] इति ॥ )

अत्र द्रव्यदेवतासंबन्धानामष्टभ्योऽधिकत्वाद्यागेष्वप्याधिक्यशङ्काभ्रमवारणायाष्टसंख्यां विधातुं प्रस्तौति—

" एति वा एष यज्ञमुखादृद्ध्याः। योऽग्नेर्देवताया एति। " [ ब्रा० का० १ प्र० ६ अ० १ ] इति।

एति पृथग्भवति अपगच्छतीत्यर्थः। वक्ष्यमाणप्रकारेणाग्नेरष्टत्वसंख्यात्मकत्वात्तत्संख्याया अपगम एवाग्निसकाशादपगमः। योऽग्नेरपगच्छति स यज्ञमुखाद्यज्ञप्रारम्भादृद्ध्या यज्ञसमाप्तेश्चापगच्छति ॥

---

+ धनुश्चिह्नान्तर्गतं ख. पुस्तक एव। इयमवतरणिकाऽशुद्धाऽसमीचीनार्था च।

---

१ ख. घ. ङ. च. °मनुसं°।

विधत्ते—

" अष्टावेतानि हवीꣳषि भवन्ति । अष्टाक्षरा गायत्री । गायत्रोऽग्निः । तेनैव यज्ञमुखादृद्ध्या अग्नेर्देवतायै नैति ( ११ ) ॥ " [ ब्रा० का० १ प्र० ६ अ० १ ] इति ।

गायत्र्या अग्नेश्च मुखजत्वेन सहोत्पन्नत्वलक्षणः संबन्धः । तेनैव तेषां हविःशब्दवाच्यानां कर्मणामष्टत्वेन यज्ञमारम्भसमाप्तिभ्यामग्निदेवतायाश्च नापगच्छति ॥

तत्र विधिविवेकसहितो विनियोगसंग्रहः—

" आदावानुमतं तस्य मध्ये नैर्ऋतमत्र च ।
व्रीहीत्याद्यास्त्रयो मन्त्रा विनियोगस्तु वर्ण्यते ॥ १ ॥
व्रीह्येष नम इत्यग्निमदराग्निषु हूयते ।
सहैवाऽऽनुमतेनाष्टौ यागाः प्रथम ईरिताः ॥ २ ॥ " इति ॥

अथ मीमांसा ।

चतुर्थाध्यायस्य चतुर्थपादे चिन्तितम्—

" राजसूयेऽनुमत्यादि देवनादि च ते उभे ।
मुख्ये उतैकमुख्यत्वं स्यादाद्यः प्रक्रियैक्यतः ॥
यागानां राजसूयत्वादङ्गित्वं फलवत्त्वतः ।
देवनाद्यफलं यत्तदङ्गं फलवतो यजेः ॥ "

राजसूयप्रकरणे यागरूपा अनुमत्यादयो बहवः श्रुताः—" अनुमत्यै पुरोडाशमष्टाकपालं निर्वपति " " नैर्ऋतमेककपालम् " " आदित्यं चरुं निर्वपति " " आग्नावैष्णवमेकादशकपालम् " इत्यादयः ( इति )। यथैता इष्टयस्तथा पशवोऽपि श्रुताः—" आदित्यां मल्हां गर्भिणीमालभते मारुतीं पृश्निं पष्ठौहीम् " इति । मल्हा मणिला गले स्तनयुक्तेत्यर्थः । तस्या अदितिर्देवता । पृश्निरल्पतनुस्तस्या मरुतो देवता । यावता वयसा वर्षत्रयरूपेण पृष्ठे भारं वोढुं शक्तिर्भवति तावद्वयस्का पष्ठौही । एवमभिषेचनीयादयः सोमयागाः श्रुताः । तथा वल्मीकवपायां होम इत्यादयो दर्विहोमाः श्रुताः । यथैत इष्टिपशुसोमदर्विहोमाश्चतुर्विधा यागरूपा एवमयागरूपा अपि द्यूतादयः श्रुताः " पष्ठौही दीव्यति, अक्षैर्दीव्यति, राजन्यं जिनाति, शौनःशेपमाख्यापयते " इत्येवमादयः । तत्र यागा यथा मुख्यास्तथा देवनादीनामपि मुख्यत्वं युक्तं,

---

१ ख. बहव इष्टयः श्रु° ।

प्रकरणपाठस्योभयत्र समानत्वादिति प्राप्ते ब्रूमः—राजा स्वाराज्यकामो राजसूयेन यजेतेत्यत्राऽऽख्यातवाच्यायां भावनायां धातुवाच्यो यागः करणम्। राजसूयशब्दश्चाप्रसिद्धार्थत्वाद्यागसामानाधिकरण्येन तन्नामधेयं भवति। तथा सति राजसूयेन यागेन स्वाराज्यं भावयेदिति वाक्यार्थपर्यवसानात्। अनुमत्यादीनां यागानामेव फलवत्त्वादङ्गित्वं, तत्संनिधौ श्रूयमाणमफलं देवनादिकं यागाङ्गम्॥

दशमाध्यायस्य प्रथमपादे चिन्तितम्—

"सा किमस्त्यनुमत्यादौ न वाऽस्त्यङ्गिन्युपक्रमात्।
संघस्योपक्रमो नेष्टो द्वारलोपान्न सा भवेत्॥"

अनुमत्यै पुरोडाशमष्टाकपालं निर्वपतीत्यादिना राजसूये दर्शपूर्णमासेष्टिविकृतयो बह्व्यो विहितास्तास्वारम्भणीयाऽस्ति न वेति संदेहः। दीक्षणीयादिवदनुमत्यादीनामन्याङ्गत्वाभावात्सोमयागवत्सर्वासामङ्गित्वेनोपक्रमसंभवात्तद्द्वारेणाऽऽरम्भणीयाऽस्तीति पूर्वः पक्षः। यद्यप्यङ्गिभूता अनुमत्यादयस्तथाऽप्येकैकस्या इष्टेः पृथगारम्भो नास्ति। अन्यथा प्रधानेष्वाग्नेयादिष्वन्वारम्भणीयायाः षट्कृत्वोऽनुष्ठानं प्रसज्येत। अथोच्यते प्रधानानां षण्णामाग्नेयादीनां संघस्य दर्शपूर्णमासेष्टित्वात्तस्यैक आरम्भ इति, तर्ह्यत्रापीष्टिपशुसोमदर्विहोमरूपाणामनेकेषां प्रधानानां संघस्य राजसूयत्वात्संघस्योपक्रमोऽस्तु, न चासौ संघो दर्शपूर्णमासविकृतिर्येन तत्राऽऽरम्भणीयाऽऽशङ्क्येत। अस्ति चात्रापरः सर्वारम्भार्थो यागः। अग्निष्टोममग्रे ज्योतिष्टोममाहरतीति ज्योतिष्टोमावान्तरसंस्थाभेदरूपस्याग्निष्टोमस्याऽऽम्नातत्वात्। तस्मादनुमत्यादिष्विष्टिष्वारम्भद्वारलोपात्साऽऽरम्भणीया न भवेत्॥

तत्रैव तृतीयपादेऽन्यच्चिन्तितम्—

"वासो वत्सं समुच्चेयमन्वाहार्येण वा न वा।
अविरोधात्समुच्चेयं न कार्यैक्याद्विरोधतः॥"

आग्रयणे श्रूयते—"वासो दक्षिणा, वत्सः प्रथमजो दक्षिणा" इति। तदेतत्प्राकृतेनान्वाहार्येण सह विरोधाभावात्समुच्चीयत इति मन्दः पूर्वपक्षः। एककार्यत्वेन विरोधित्वान्न समुच्चयः किं तु बाध इति राद्धान्तः॥

अत्रैवान्यच्चिन्तितम्—

"अन्वाहार्यस्य धर्मोऽत्र न कार्यः क्रियतेऽथवा।
न तद्धर्मत्वतो मैवं साधनत्वप्रयुक्तितः॥"

सन्त्यन्वाहार्यधर्मास्तान्कल्पसूत्रकार उदाजहार—"दक्षिणसद्य उपहर्तवा

इति संप्रेष्यति ये ब्राह्मणा उत्तरतस्तान्यजमान आह दक्षिणत एतेति तेभ्योऽन्वाहार्यं ददाति ब्राह्मणा अयं व ओदन इति प्रतिगृह्णीतोत्तरतः परीतेति संप्रेष्यति " इति। सोऽयं धर्मो वासोवत्से न कार्यस्तस्यान्वाहार्यनिमित्तत्वात्। मैवम्। अन्वाहार्यस्य दक्षिणारूपत्वेनानतिसाधनत्वप्रयुक्त्या तद्धर्माः क्रियन्ते। तत्साधनत्वं वासोवत्सेऽपि समानम्। तस्मादत्रापि सन्ति ते धर्माः।

अत्रैवान्यच्चिन्तितम्—

" पाकोऽस्ति नो वा वत्से स्यादन्वाहार्यस्य दर्शनात्।
न वत्सनाशादश्रौती दक्षिणा मांसदानतः॥ "

अन्वाहार्ये पाकोऽस्ति, पूर्वन्यायेन तद्धर्मातिदेशाद्वत्सेऽपि पाकः स्यादिति चेन्न, वत्सनाशप्रसङ्गात्। अस्त्विति चेन्न, तथा सति मांसदानेन श्रुतहान्यश्रुतकल्पने प्रसज्येयाताम्। तस्मान्नास्ति वत्सपाकः॥

तत्रैवान्यच्चिन्तितम्—

" वाससोऽस्ति न वा पाको विनाशाभावतोऽस्त्यसौ।
वैयर्थ्यादप्यशक्यत्वात्पाको वाससि नोचितः॥ "

वासस उष्णोदकभाण्डप्रक्षेपेण वत्सस्येव विनाशो नास्ति। तस्मादन्वाहार्यवत्पाकोऽस्तीति चेन्मैवम्। ओदनत्वार्थो हि पाकः। नहि वाससः सहस्रधा पच्यमानस्यौदनता संभवति। न च पाकः कर्तुं शक्यते। नह्युष्णोदकसंबन्धः पाकशब्दार्थः किं तु तण्डुलादीनां विक्लित्तिं जनयितुं कृतः पुरुषप्रयत्नः। न च विक्लित्तिर्वाससोऽस्ति। तस्मादतिदिष्टः पाको बाध्यते॥

तत्रैवान्यच्चिन्तितम्—

" अभिघारोऽस्ति नो वाऽत्र शक्यत्वाद्वत्सवाससोः।
अस्त्यन्वाहार्यवन्मैवं स्वादुताया असंभवात्॥ "

स्पष्टोऽर्थः॥

सप्तमाध्यायस्य तृतीयपादे चिन्तितम्—

" वासोनसी वानतक्षणातिदेशकरे न वा।
आद्यः क्रियानिमित्तत्वाज्जातिवाचित्वतोऽन्तिमः॥ "

वासो ददात्यनो ददातीति श्रूयते। तत्र यूपशब्दस्य यथा शास्त्रीयच्छेदनतक्षणादिक्रिया प्रवृत्तिनिमित्तं तथा वासःशब्दस्य लौकिकी कुविन्दकर्तृका तन्तुवानक्रिया। अनःशब्दस्य वर्धकिकर्तृका दारुतक्षणादिक्रिया। तस्माद्वासोनःशब्दयोः क्रियातिदेशकत्वाद्वानतक्षणे कारयित्वा तदुभयं दातव्यमिति चेन्न। गवाश्वादिशब्दवज्जातिवाचित्वात्। पाचकादिशब्दानां क्रियामुपलक्ष्य

प्रयुज्यमानत्वात्क्रियैव प्रवृत्तिनिमित्तम्। वामःशकटादिषु क्रियामनुपलक्ष्यापि जातिमुपलक्ष्य शब्दं प्रयुञ्जते। तस्माद्वामोनःशब्दौ न क्रियामतिदिशतः॥

द्वादशाध्यायस्य द्वितीयपादे चिन्तितम्—

"बर्हिराग्रयणे किंचित्प्रसूनं बहुलत्वतः।
प्राथम्याद्वाग्रिमो मैवमलोपात्कांस्यभोजिवत्॥"

ऐन्द्राग्नवैश्वदेवद्यावापृथिव्ययागा आग्रयणेष्टौ सह प्रयुज्यन्ते। तत्रैन्द्राग्नवैश्वदेवयोर्बर्हिर्मात्रं चोदकप्राप्तं तत्प्रकृतौ बर्हिर्विशेषस्यानुक्तत्वात्। द्यावापृथिव्ये तु स्वप्रकृत्यनुसारेण प्रसूनं बर्हिरतिदिश्यते। प्रसूनं पुष्पितं लूनशेषान्मूलात्पुनरुत्पन्नं वा। तत्राऽऽग्रयणे यत्किंचिद्बर्हिर्मात्रमाहर्तव्यम्। ऐन्द्राग्नवैश्वदेवयोरनेकत्वेन प्रथमत्वेन च तदानुगुण्यस्य न्याय्यत्वादिति प्राप्ते ब्रूमः—बर्हिरन्तरस्वीकारे द्यावापृथिव्ये प्रमाणप्राप्तः प्रसूननियमो लुप्येत। प्रसूनस्वीकारे त्वैन्द्राग्नवैश्वदेवयोर्न किंचिल्लुप्यते। तस्मादलोपाय कांस्यभोजिन्यायेन प्रसूनमेव क(वाऽऽह)र्तव्यम्। शिष्यस्य कांस्यभोजनव्रतमस्ति, गुरोस्तु तन्नास्ति, तयोस्तु सहभोजने यथोपसर्जनमपि शिष्यमनुसृत्य व्रतमलोपयितुं कांस्यमाद्रियते तथाऽत्रापि द्रष्टव्यम्॥

तत्रैवान्यच्चिन्तितम्—

"द्यावापृथिव्यस्तन्त्री स्यात्सर्वे वा तन्त्रिणोऽग्रिमः।
प्रैषन्यायात्प्रसूनस्य तन्त्रित्वापादकत्वतः॥
प्रसूनत्वं नोपदिष्टमविरोधात्समाश्रितम्।
तन्त्रित्वं(त्व)नियतौ शक्तं नातः सर्वेऽत्र तन्त्रिणः॥"

यथा मैत्रावरुणप्रैषमन्त्रविकारः पशुसंबन्धात्पशोस्तन्त्रित्वमापादयति तथा प्रसूनं(नत्वं) द्यावापृथिव्यसंबन्धित्वाद्द्यावापृथिव्यस्य तन्त्रित्वमापादयतीति प्राप्ते ब्रूमः—उक्तप्रैषमन्त्रविकारः प्रत्यक्षश्रुतः। इह तु प्रसूनत्वमतिदिष्टत्वान्न तन्त्रित्वमापादयितुं क्षमम्। न च प्राबल्याभावे कथं तदाश्रयणमिति वाच्यम्। ऐन्द्राग्नादिना सह विरोधाभावमात्रेण तदाश्रयणात्। तस्मादेकस्य तन्त्रित्वनियमाभाव आग्नेयादिवत्सर्वेऽप्यत्र तन्त्रिणः॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डेऽष्टमप्रपाठके
प्रथमोऽनुवाकः॥ १॥

---

( अथ प्रथमाष्टकेऽष्टमप्रपाठके द्वितीयोऽनुवाकः । )

---

आग्नेयमष्टाकपालं निर्वपति सौम्यं चरुꣳ सावित्रं द्वादशकपालꣳ सारस्वतं चरुं पौष्णं चरुं मारुतꣳ सप्तकपालं वैश्वदेवीमामिक्षां द्यावापृथिव्यमेककपालम् ( १ ) ॥

( आग्नेयꣳ सौम्यं मारुतमष्टादश । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टकेऽष्टमप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

( अथ प्रथमाष्टकेऽष्टमप्रपाठके द्वितीयोऽनुवाकः । )

---

आग्नेयम् । अष्टाकपालमित्यष्टा—कपालम् । निरिति । वपति । सौम्यम् । चरुम् । सावित्रम् । द्वादशकपालमिति द्वादश—कपालम् । सारस्वतम् । चरुम् । पौष्णम् । चरुम् । मारुतम् । सप्तकपालमिति सप्त—कपालम् । वैश्वदेवीमिति वैश्व—देवीम् । आमिक्षाम् । द्यावापृथिव्यमिति द्यावा—पृथिव्यम् । एककपालमित्येक—कपालम् ( १ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टकेऽष्टमप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

( राजसूयविषयस्य चातुर्मास्यगतप्रथमपर्वरूपहविरष्टकस्य विधिः )

( अथ प्रथमकाण्डेऽष्टमप्रपाठके द्वितीयोऽनुवाकः )

---

प्रथमानुवाके प्रायणीयादह्न उत्तरभाविन आनुमतादयोऽष्टौ यागा नर्ऋतमध्याश्चोक्ताः। द्वितीये चातुर्मास्येषु प्रथमपर्वरूपं हविरष्टकं विधत्ते—

आग्नेयमष्टाकपालं निर्वपति सौम्यं चरुꣳ सावित्रं द्वादशकपालꣳ सारस्वतं चरुं पौष्णं चरुं मारुतꣳ सप्तकपालं वैश्वदेवीमामिक्षां द्यावापृथिव्यमेककपालम् ॥, इति ॥

स्पष्टोऽर्थः। एतेषां वैश्वदेवादीनां चातुर्मास्यानामानुमताद्यनन्तरंभावित्वं पाठप्राप्तमापस्तम्बो विशदयति—"एताभिरन्वहमिष्ट्वा चातुर्मास्यान्यारभते तैः संवत्सरं यजते" इति। तेषु चातुर्मास्येषु प्रथमपर्वणो वैश्वदेवस्य देशकालौ स एवाऽऽह—"प्राचीनप्रवणे वैश्वदेवेन यजते" इति। "फाल्गुन्यां पौर्णमास्यां चैत्र्यां वा वैश्वदेवेन यजते" इति [च] ॥

तस्मिन्वैश्वदेवकर्मणि प्रथमभावीन्याग्नेयादीनि पञ्च हवींष्युपाख्यानेन प्रशंसति—

"वैश्वदेवेन वै प्रजापतिः प्रजा असृजत। ताः सृष्टा न प्राजायन्त। सोऽग्निरकामयत। अहमिमाः प्रजनयेयमिति। स प्रजापतये शुचमदधात्। सोऽशोचत्प्रजामिच्छमानः। तस्माद्यं च प्रजा भुनक्ति यं च न। तावुभौ शोचतः प्रजामिच्छमानौ। तास्वग्निमप्यसृजत्। ता अग्निरध्यैत् (१)। सोमो रेतोऽदधात्। सविता प्राजनयत्। सरस्वती वाचमदधात्। पूषाऽपोषयत्। ते वा एते त्रिः संवत्सरस्य प्रयुज्यन्ते। ये देवाः पुष्टिपतयः। संवत्सरो वै प्रजापतिः। संवत्सरेणैवास्मै प्रजाः प्राजनयत्।" [ब्रा० का० १ प्र० ६ अ० २ इति।

पुरा कदाचित्प्रजापतिः प्रजाकामः संस्तत्साधनत्वेनेदं वैश्वदेवाख्यं कर्मानुष्ठाय तेनैव प्रजा असृजत। ताश्च सृष्टाः प्रजा न प्राजायन्त स्वकीयान्यपत्यानि न लेभिरे। तदानीं प्रजापतिसृष्टाववस्थितः सोऽग्निर्मनस्येवमकामयत किमित्यपत्यरहिता इमाः प्रजा अहं प्रजनयेयमपत्योत्पादिकाः करिष्यामीति। एवं कामयमानः सोऽग्निः प्रजाः सृष्टवते प्रजापतये शोकमुत्पादितवान्। प्रजापतिसृष्टानां प्रजानामपत्याभावस्यापत्योत्पादनकामिना वह्निना स्मारितत्वात्स

जापतौ वह्निः शोकोत्पादक उच्यते। सोऽग्निः प्रजापतेः शोकमुत्पाद्य स्वस्याप्यपत्याभावेन प्रजामपत्यरूपामिच्छमानोऽशोचत् । यस्मात्पुत्रवान्प्रजापतिः पौत्रमिच्छन्नशोचत्, यस्मात्पुत्राभावादग्निरशोचत्तस्माल्लोकेऽपि यं पितरमुत्पन्ना पुत्ररूपा प्रजा भुनक्ति पालयति, यं चापत्यरहितमनुत्पन्ना प्रजा न पालयति तावुभावपि पौत्ररूपां पुत्ररूपां च प्रजामिच्छन्तौ तदलाभाच्छोचतः। प्रजापतिस्तासु प्रजासु प्रजामपत्यमुत्पादयितुमग्निमप्यसृजदभ्यनुज्ञातवान् । अनुज्ञातः सोऽग्निस्ताः प्रजा अध्यैत्प्राप्तवान्मिथुनभावेन संगतवानित्यर्थः । ततः सोम आग्नेयं रेतस्तासु प्रजासु गर्भभावेन धारितवान् । ततः सविता प्रसवकाले प्राजनयत्प्रजाः। तेष्वपत्येषु सरस्वती वाचमदधात्संभाषितुमभ्यासं कारयामास। ततः संभाषमाणान्बालान्पूषाऽभ्यवर्धयत् । ये देवा अग्निसोमादयोऽपत्यपोषा अपत्यपालकास्त एतेऽग्न्यादयः पूषान्ताः पञ्च देवाः पुष्टिकरत्वेन संवत्सरस्य मध्ये चातुर्मास्येषु त्रिः प्रयुज्यन्ते । वैश्वदेववरुणप्रघाससाकमेधाख्येषु पर्वसु पञ्चानामेतेषामाग्नेयादीनां संचारित्वात् । सोऽयं प्रयोगत्रयकालः संवत्सर एव प्रजापतिस्वरूपः। अतः प्रजापतिरूपेण प्रयोगत्रययुक्तेन संवत्सरेणैवास्मा अनुष्ठात्रे प्रजा उत्पादितवान्भवति ॥

पञ्च यागान्प्रशस्य षष्ठं प्रशंसति—

" ताः प्रजा जाता मरुतोऽघ्नन् । अस्मानपि न प्रायुक्षतेति ( २ )। स एतं प्रजापतिर्मारुतꣳ सप्तकपालमपश्यत्। तं निरवपत् । ततो वै प्रजाभ्योऽकल्पत। यन्मारुतो निरुप्यते। यज्ञस्य क्लृप्त्यै। प्रजानामघाताय। " [ ब्रा० का० १ प्र० ६ अ० २ ] इति ।

एकोनपञ्चाशन्मरुत उत्पन्नास्ताः प्रजा हतवन्तः। केनाभिप्रायेण, अस्मानप्येतस्मिन्वैश्वदेवकर्मण्येताः प्रजा न प्रयुक्तवत्य इति । प्रजाभ्योऽकल्पत तासां प्रजानां रक्षणाय समर्थोऽभूत् । अतोऽयं षष्ठो यागो यज्ञस्य संपूर्त्यै प्रजानामहिंसायै च संपद्यते ॥

कपालसंख्यां प्रशंसति—

" सप्तकपालो भवति। सप्त गणा वै मरुतः। गणश एवास्मै विशं कल्पयति। " [ ब्रा० का० १ प्र० ६अ० २ ] इति।

सप्तानां समूह एकैको गणः। तादृशाश्च गणाः सप्तसंख्याकाः। तथा सप्तसंख्ययाऽस्मै यजमानाय बहुगु ( ग ) णरूपां प्रजां संपादयति ॥

सप्तमयागे द्रव्यं प्रशंसति—

" स प्रजापतिरशोचत् ( ३ )। याः पूर्वाः प्रजा असृक्षि। मरुतस्ता अव-

षिषुः। कथमपराः सृजेयेति। तस्य शुष्म आण्डं भूतं निरवर्तत। तद्व्युदहरत्। तदपोषयत्। तत्प्राजायत। आण्डस्य वा एतद्रूपम्। यदामिक्षा। यद्व्युद्धरति (४)। प्रजा एव तद्यजमानः पोषयति।" [ ब्रा० का० १ प्र० ६ अ० २ ] इति।

तस्य प्रजापतेः शुष्मो बलमाण्डं भूतमाण्डवत्पिण्डाकारं प्राप्य निर्गतं पिण्डीभूतं व्युदहरद्विभज्योद्धृतवान्। उद्धृत्य च तत्पोषयित्वा प्रजारूपेणोदपादयत्। क्षीरपिण्डरूपाया आमिक्षाया अण्डरूपत्वात्तद्व्युद्धरणेन प्रजापतिवद्यजमानः प्रजाः पोषयति पोषितवान्भवति। अनेनार्थवादेनापूर्वार्थत्वाद्व्युद्धरेदिति विधिरुन्नेतव्यः॥

तदीयां देवतां प्रशंसति—

"वैश्वदेव्यामिक्षा भवति। वैश्वदेव्यो वै प्रजाः। प्रजा एवास्मै प्रजनयति।" [ ब्रा० का० १ प्र० ६ अ० २ ] इति।

बहुभिर्देवैरग्न्यादिभिरुक्तप्रकारेणोत्पादितत्वात्प्रजानां वैश्वदेवत्वम्॥

विभज्योद्धृतयोरामिक्षाभागयोर्वाजिनसेचनं विधत्ते—

"वाजिनमानयति। प्रजास्वेव प्रजातासु रेतो दधाति।" [ब्रा० का० १ प्र० ६ अ० २ ] इति।

दध्यानयनेन घनीभूतामिक्षाशब्दवाच्यस्य क्षीरपिण्डस्य प्रजारूपेणाऽऽविर्भावः पूर्वार्थवादे निरूपितः। अतस्तस्मिन्पिण्डे वाजिनाख्येन क्षीरगतनीरेण सेचने सति प्रजातासु प्रजासु रेतो धारितं भवति॥

अष्टमयागदेवतां प्रशंसति—

"द्यावापृथिव्य एककपालो भवति। प्रजा एव प्रजाता द्यावापृथिवीभ्यामुभयतः परिगृह्णाति।" [ ब्रा० का० १ प्र० ६ अ० २ ] इति॥

अत्राऽऽदावुक्तानां पञ्चानां पाठे प्राप्तं क्रमं प्रशंसति—

"देवासुराः संयत्ता आसन्। सोऽग्निरब्रवीत् (५)। मामग्रे यजत। मया मुखेनासुराञ्जेष्यथेति। मां द्वितीयमिति सोमोऽब्रवीत्। मया राज्ञा जेष्यथेति। मां तृतीयामिति सविता। मया प्रसूता जेष्यथेति। मां चतुर्थीमिति सरस्वती। इन्द्रियं वोऽहं धास्यामीति। मां पञ्चममिति पूषा। मया प्रतिष्ठया जेष्यथेति (६)। तेऽग्निना मुखेनासुरानजयन्। सोमेन राज्ञा। सवित्रा प्रसूताः। सरस्वतीन्द्रियमदधात्। पूषा प्रतिष्ठाऽऽ-

---

१ ख. घ. 'तृ। पि'।

सीत् । ततो वै देवा व्यजयन्त । यदेतानि हवी९षि निरुप्यन्ते विजित्यै । ” [ ब्रा० का० १ प्र० ६ अ० २ ] इति ।

लोके युद्धार्थमुद्यतायां सेनायां केचन शूरा भटा मुखतो योद्धुं गच्छन्ति । तेषां युद्धं द्रष्टुं कश्चिद्राजा स्वामित्वेन संनिधत्ते । केचन दण्डहस्ताः पृष्ठतः स्थित्वा योद्धृनपरावृत्तये बलात्प्रेरयन्ति । अन्ये केचन दुन्दुभ्यादिजयघोषेण योद्धृणामुत्साहं जनयन्ति । अपरा कियत्यपि सेना पुरोगताया युध्यन्त्याः सेनायाः पृष्ठतः सहायत्वेनावतिष्ठते । तानेतान्पञ्चविधव्यापारानग्न्यादयः क्रमेण स्वीकृतवन्तः । ततो देवानां जयोऽभूत् । ततोऽत्रापि पञ्चहविषां निर्वापे जयो भवति ॥

शाखान्तरगतेनोपवपन्तीति वाक्येन वैश्वदेवादिषु चतुर्षु चातुर्मास्यपर्वसु साधारण्येनोत्तरवेद्युपवापः प्राप्तस्तमुपवापं वैश्वदेवपर्वणि प्रतिषेधति—

“ नोत्तरवेदिमुपवपति । पशवो वा उत्तरवेदिः । अजाता इव ह्येतर्हि पशवः ( ७ ) । ” [ ब्रा० का० १ प्र० ६ अ० २ ] इति ।

उत्तरवेदिसमीपे तदाभिमुख्येन पशूनां बन्धनादुत्तरवेदेः पशुत्वम् । पूर्वोक्तरीत्या वैश्वदेवस्य प्रजापतिसृष्टिसाधनत्वात्स्रष्टव्यासु प्रजास्वन्तर्भूतानां पशूनां वैश्वदेवादूर्ध्वमुत्पत्तिकालो न त्विदानीमतः पशुरूपोत्तरवेदिर्नात्रोपवपनीया ॥

तदेवमनुब्राह्मणगतेन वैश्वदेवेन वै प्रजापतिरित्यनुवाकेन वैश्वदेवपर्वगतान्याग्नेयादीन्यष्ट हवींषि प्रशस्तानि । अथानुवाकान्तरेण वैश्वदेवपर्वगतानि विशेषाङ्गानि विधीयन्ते । तत्र चोदकप्राप्तस्य बर्हिषस्त्रैगुण्यं विधत्ते—

“त्रिवृद्बर्हिर्भवति । माता पिता पुत्रः । तदेव तन्मिथुनम् । उल्बं गर्भो जरायु । तदेव तन्मिथुनम् । ” [ ब्रा० का० १ प्र० ६ अ० ३ ] इति ।

मात्रादित्रयं यदस्ति तदेव पुत्रयुक्तत्वात्तन्मिथुनं सार्थकम् । गर्भस्यान्तर्वेष्टनमुल्बं बहिर्वेष्टनं जरायु । गर्भादित्रयं यदस्ति तदेव सारभूतेन गर्भेणोपेतत्वात्तन्मिथुनं सफलम् । उल्बजराय्वोर्द्वित्वसामान्येन मिथुनत्वम् । बर्हिषस्त्रैगुण्ये सति यथोक्तमिथुनद्वयसाम्यं संपद्यते ॥

विधत्ते—

“ त्रेधा बर्हिः संनद्धं भवति । त्रय इमे लोकाः । एष्वेव लोकेषु प्रतितिष्ठति । ” [ ब्रा० का० १ प्र० ६ अ० ३ ] इति ।

प्रकृतौ दर्भमुष्टीनां पृथग्बन्धनं न विहितं सूत्रकारेण “ अदित्यै रास्नाऽसीत्युदगग्रं वितत्य सुसंभृता त्वा संभरामीति तस्मिन्निधनानि संभृत्य ” इति

(राजसूयविषयस्य चातुर्मास्यगतप्रथमपर्वरूपहविरष्टकस्य विधिः)

प्रसारिते शुल्वे मुष्टीनां संभरणमात्रस्यैवाभिधानात्। इह तु मुष्टित्रयस्य पृथग्बन्धनं विशेषः॥

विधत्ते—

"एकधा पुनः संनद्धं भवति। एक इव ह्ययं लोकः (१)। अस्मिन्नेव तेन लोके प्रतितिष्ठति।" [ब्रा० का० १ प्र० ६ अ० ३] इति।

पृथग्बद्धानां त्रयाणां मुष्टीनां पुनर्मिलित्वा बन्धनं कार्यम्। चोदकप्राप्तस्य बन्धनस्य त्रेधाबन्धनेन बाधप्राप्तौ प्रतिप्रसवरूपोऽयं विधिः॥

चोदकेन सामान्यतः प्राप्तानां दर्भाणां पुष्पितत्वरूपं विशेषमत्र विधत्ते—

"प्रसुवो भवन्ति। प्रथमजामेव पुष्टिमवरुन्धे।" [ब्रा० का० १ प्र० ६ अ० ३] इति।

प्रसूनोपेता दर्भाः प्रसुवः॥

विधत्ते—

"प्रथमजो वत्सो दक्षिणा समृद्ध्यै।" [ब्रा०का०१प्र०६अ०३] इति॥

अनुयाजार्थस्य द्रव्यस्य ग्रहणं विधत्ते—

"पृषदाज्यं गृह्णाति। पशवो वै पृषदाज्यम्। पशूनेवावरुन्धे।" [ब्रा० का० १ प्र० ६ अ० ३] इति।

दधिमिश्रमाज्यं पृषदाज्यम्॥

ग्रहणे संख्यां विधत्ते—

"पञ्चगृहीतं भवति। पाङ्क्ता हि पशवः।"[ब्रा०का०१प्र०६अ०३] इति।

सपुच्छपादैः पञ्चभिर्युक्तत्वात्पङ्क्तिच्छन्दःसाध्यत्वाद्वा पशूनां पाङ्क्तत्वम्॥

मिश्रणं प्रशंसति—

"बहुरूपं भवति (२)। बहुरूपा हि पशवः समृद्ध्यै।" [ब्रा० का० १ प्र० ६ अ० ३] इति।

दधिबिन्दूनामाज्यबिन्दूनामनेकरूपत्वाद्बहुरूपत्वम्। गोमहिषादिरूपेण पशवो बहुरूपाः॥

हविरासादनादूर्ध्वं सामिधेनीभ्यः पुरा मन्थनं विधत्ते—

"अग्निं मन्थन्ति। अग्निमुखा वै प्रजापतिः प्रजा असृजत। यदग्निं मन्थन्ति। अग्निमुखा एव तत्प्रजा यजमानः सृजते।" [ब्रा० का० १ प्र० ६ अ० ३] इति।

हविःसादनादूर्ध्वभावित्वमापस्तम्बो दर्शयति—"पञ्च होत्रा यजमानः सर्वाणि हवीꣳष्यासन्नान्यभिमृशति पशुवन्निर्मन्थ्यः सामिधेन्यश्च" इति।

होतृमन्त्रब्राह्मणे श्रूयते—“ तन्तूर्योऽतप्यत । तस्मात्तेपानादग्निरजायत ” इति, “ स प्रजननादेव प्रजा असृजत ” इति च ।

तत्राग्नेः प्रथमसृष्टत्वात्प्रजानामग्निमुखत्वम् ॥

शाखान्तराभिहितां प्रयाजानूयाजसंख्यां हृदि कृत्वा साङ्गं कर्म प्रशंसति—

“ नव प्रयाजा इज्यन्ते । नवानूयाजाः । अष्टौ हवी॰षि । द्वावाघारौ । द्वावाज्यभागौ ( ३ ) । त्रि॰शत्संपद्यन्ते । त्रि॰शदक्षरा विराट् । अन्नं विराट् । विराजैवान्नाद्यमवरुन्धे । ” [ ब्रा० का० १ प्र० ६ अ० ३ ] इति ।

दशाक्षरपादैस्त्रिभिर्युक्तस्य विराट्छन्दसस्त्रिंशदक्षरत्वम् ॥

अलंकरणकाल आज्येनैककपालमभिपूरयतीत्यापस्तम्बेन यदुक्तं तदिदं द्वेधा प्रशस्य विधत्ते—

“ यजमानो वा एककपालः । तेज आज्यम् । यदेककपाल आज्यमानयति । यजमानमेव तेजसा समर्धयति । यजमानो वा एककपालः । पशव आज्यम् ( ४ ) । यदेककपाल आज्यमानयति । यजमानमेव पशुभिः समर्धयति । ” [ ब्रा० का० १ प्र० ६ अ० ३ ] इति ॥

विशेषान्तरं विधातुं प्रस्तौति—

“ यदल्पमानयेत् । अल्पा एनं पशवोऽभुञ्जन्त उपतिष्ठेरन् । यद्बह्वानयेत् । बहव एनं पशवो भुञ्जन्त उपतिष्ठेरन् । ” [ब्रा०का० १ प्र० ६ अ० ३] इति ।

भुञ्जन्तः क्षीरदानादिना पालयन्तोऽभुञ्जन्त इति तद्विपर्ययः । पशूनामल्पत्वमपालयितृत्वं चेत्युभौ दोषौ । बहुत्वं पालयितृत्वं चेत्युभौ गुणौ ॥

तत्र गुणसंपादनेन प्रशंसन्विधत्ते—

“ बह्वानीयाऽऽविःपृष्ठं कुर्यात् । बहव एवैनं पशवो भुञ्जन्त उपतिष्ठन्ते । ” [ ब्रा० का० १ प्र० ६ अ० ३ ] इति ।

बह्वाज्ये पुरोडाशस्य पृष्ठमनिमज्ज्य यथा दृश्यते तथा बह्वाज्यमानयेत् । तथा सत्याज्यस्य बहुत्वात्पशूनामल्पत्वदोषो न भविष्यति । पुरोडाशपृष्ठस्याऽऽविर्भूतत्वादपालयितृत्वमपि न भवति ॥

कृत्स्नस्यापि पुरोडाशस्य होमं विधातुं प्रस्तौति—

“ यजमानो वा एककपालः । यदेककपालस्यावद्येत् ( ५ ) । यजमानस्यावद्येत् । उद्वा माद्येद्यजमानः । प्र वा मीयेत । ” [ब्रा० का० १ प्र० ६ अ० ३] इति ।

इतरपुरोडाशेषु भक्षणाद्यर्थमवशेष्य किंचिदेवावदीयते तद्वदत्राप्यवदानेन यजमानस्यावयवश्छिद्येत, अथ वोन्मत्तो भवेत्, यद्वा प्रमीयेत ॥

---

१ ख. च. 'त्वा यागं प्र' । घ. ङ. 'त्वा यागक' । २ ख. ङ. च. 'था तावद्बह्वा' ।

( राजसूयविषयस्य चातुर्मास्यगतप्रथमपर्वरूपहविरिष्टकस्य विधिः )

कृत्स्नहोमं विधत्ते—

"सकृदेव होतव्यः। सकृदिव हि सुवर्गो लोकः।" [ ब्रा० का० १ प्र० ६ अ० ३ ] इति।

सकृदेव कृत्स्न एव। स्वर्गलोकस्य सकृत्त्वमखण्डितत्वम् ॥

एककपाले पूर्वमानीतस्य बह्वाज्यस्य होमं विधत्ते—

"हुत्वाऽभिजुहोति। यजमानमेव सुवर्गं लोकं गमयित्वा। तेजसा समर्धयति।" [ ब्रा० का० १ प्र० ६ अ० ३ ] इति।

आदौ पुरोडाशं हुत्वा तस्योपर्याज्यं जुहुयादित्यर्थः ॥

चोदकप्राप्तेनाऽऽहवनीयहोमेनैककपालं प्रशंसति—

" यजमानो वा एककपालः। सुवर्गो लोक आहवनीयः। यदेककपालमाहवनीये जुहोति। यजमानमेव सुवर्गं लोकं गमयति।" [ ब्रा० का० १ प्र० ६ अ० ३ ] इति ॥

कयाचिदुपपत्त्या पुरोडाशस्य चोदकप्राप्तं स्रुचा होममपोद्य हस्तेन होमः प्रसक्तस्तद्वा ( स्तं वा ) रयितुं स्रुचा होमस्य प्रतिप्रसवं विधत्ते—

" यद्धस्तेन जुहुयात्। सुवर्गाल्लोकाद्यजमानमवविध्येत्। स्रुचा जुहोति। सुवर्गस्य लोकस्य समष्ट्यै।" [ ब्रा० का० १ प्र० ६ अ० ३ ] इति।

अवविध्येत्प्रच्यावयेत्। पुरोडाशो येन संनिवेशेन पात्रेऽवस्थितस्तेनैव संनिवेशेनाग्नौ तस्य स्थितिः शाखान्तरे विहिता, स्रुचा हूयमानस्त्ववाङ्मुखो वह्नौ पतेदतस्तद्विधिविरोधं परिहर्तुं हस्तेन होतव्यमित्येषा मन्दानामुपपत्तिः ॥

हुतस्य पुरोडाशस्य नैश्चल्यं विधातुं प्रस्तौति—

" यत्प्राङ्पद्येत। देवलोकमभिजयेत्। यद्दक्षिणा पितृलोकम्। यत्प्रत्यक् ( ७ )। रक्षाꣳसि यज्ञꣳ हन्युः। यदुदङ्। मनुष्यलोकमभिजयेत्।"। [ब्रा० का० १ प्र० ६ अ० ३ ] इति।

यद्यपि लोकादिजयो न स्वरूपेण दोषस्तथाऽप्यधिकफलभावनायां सत्यां तावन्मात्रत्वं दोष एव ॥

विधत्ते—

" प्रतिष्ठितो होतव्यः। एककपालं वै प्रतितिष्ठन्तं द्यावापृथिवी अनु प्रतितिष्ठतः। द्यावापृथिवी ऋतवः। ऋतून्यज्ञः। यज्ञं यजमानः। यजमानं प्रजाः। तस्मात्प्रतिष्ठितो होतव्यः ( ८ )।" [ ब्रा० का० १ प्र० ६ अ० ३] इति।

१ ख. घ. ङ. च. °नीयेनै°। २ ख. च. °हितः स्रु°।

प्रागादिदिक्षु पतनपरिहारेण होमस्थान एव प्रतिष्ठितो निश्चलो यथा भवति तथा होतव्यः। ऋतव इत्यादिष्वनु प्रतितिष्ठन्तीत्यादिकं द्रष्टव्यम्। तस्मादिति पूर्वस्य विधेरुपसंहारः। तदेतदुक्तं कृत्स्नहोमादिकमापस्तम्बेन स्पष्टमुदाहृतम्—" उपांशु प्रचरति सर्वहुतमपर्यावर्तयन्नृजुं प्रतिष्ठितं न हस्तेन जुहुयात् " इति। स्रुचा होमेऽप्यपर्यावृत्तिं संप्रदायविद एवं संपादयन्ति—शिक्ये पुरोडाशमवस्थाप्य वामहस्तेन शिक्याग्रं धृत्वा दक्षिणहस्तेन स्रुचमधस्ताद्धारयित्वा तया स्रुचा होमं कुर्वन्वामहस्तेन शिक्यमीषदुद्धृत्य वह्नौ स्थापयेदिति ॥

वैश्वदेव्यामिक्षाया निःसृतं वाजिनशब्दाभिधेयं यन्नीरं तस्य वाजिसंज्ञकान्देवानुद्दिश्य यागं विधत्ते—

" वाजिनो यजति। अग्निर्वायुः सूर्यः। ते वै वाजिनः। तानेव तद्यजति। अथो खल्वाहुः। छन्दा१ँसि वै वाजिन इति। तान्येव तद्यजति। " [ ब्रा० का० १ प्र० ६ अ० ३ ] इति ॥

तस्य यागस्य कालं विधातुं प्रस्तौति—

" ऋक्सामे वा इन्द्रस्य हरी सोमपानौ। तयोः परिधय आधानम्। वाजिनं भागधेयम् (९)। यदप्रहृत्य परिधीञ्जुहुयात्। अन्तराधानाभ्यां घासं प्रयच्छेत्। " [ ब्रा० का० १ प्र० ६ अ० ३ ] इति।

हरी अश्वौ तयोर्वशीकरणाय मुखे प्रक्षिप्तो लोहविशेष आधानम्। अन्तर्मुखमध्येऽवस्थितमाधानं ययोस्तावन्तराधानौ। हस्तेन मुखे प्रक्षिप्यमाणः साज्यशर्करमुद्गादिपिण्डो घासस्तृणविशेषो वा। नत्वाधानेऽन्तरवस्थिते सति घासो भक्षयितुं शक्यः ॥

विधत्ते—

" प्रहृत्य परिधीञ्जुहोति। निराधानाभ्यामेव घासं प्रयच्छति। " [ ब्रा० का० १ प्र० ६ अ० ३ ] इति।

परिधीनामग्नौ प्रहारेणाऽऽधानस्यापनीतत्वाद्घासो भक्षयितुं शक्यते। सोऽयं काल आपस्तम्बेन स्पष्टीकृतः—" परिधीन्प्रहृत्य स१ँस्रावान्तं कृत्वा वाजिनपात्रे उपस्तीर्यान्तर्वेदि बर्हिरनुविषिञ्चन्वाजिनं गृह्णाति नाभिघारयति" इति॥

तत्र पात्रे ग्रहणकाले पात्रस्याभि[3]पूरणेनाधोवस्थितस्य बर्हिषो विशेषेण सेचनं विधत्ते—

१ ख. घ. ङ. तं ह। २ ख. घ. ङ. च. 'प्रमुप'। ३ ख. च. 'भिक्षर'।

( राजसूयविषयस्य चातुर्मास्यगतप्रथमपर्वरूपाष्टहविरष्टकस्य विधिः )

" बर्हिषि विषिञ्चन्वाजिनमानयति। प्रजा वै बर्हिः । रेतो वाजिनम् । प्रजास्वेव रेतो दधाति।" [ ब्रा० का० १ प्र० ६ अ० ३ ] इति॥

सोमवत्परस्परोपहवपूर्वकं भक्षणमप्राप्तत्वादिह विधत्ते—

" समुपहूय भक्षयन्ति। एतत्सोमपीथा ह्येते। अथो आत्मन्नेव रेतो दधते।" [ ब्रा० का० १ प्र० ६ अ० ३ ] इति।

वाजिनयागस्य सांनाय्यविकृतित्वेऽपि सांनाय्यवदिडाभक्षणं न कर्तव्यं किं तु सोमवद्भक्षयेत्। एतदेव वाजिनभक्षणं सोमपीथः सोमपानं येषामृत्विजां त एतत्सोमपीथाः॥

वाजिनभक्षणे यजमानस्य चरमभक्षणं विधत्ते—

" यजमान उत्तमो भक्षयति। पशवो वै वाजिनम्। यजमान एव पशून्प्रतिष्ठापयन्ति ( १० )।" [ ब्रा० का० १ प्र० ६ अ० ३ ] इति।

एतस्मिन्वैश्वदेवकर्मणि मन्त्रे विशेषाभावान्मन्त्रकाण्डे प्रधानविधय एवाऽऽम्नाता अतो नास्ति विनियोगसंग्रहः॥

अथ मीमांसा।

प्रथमाध्यायस्य चतुर्थपादे चिन्तितम्—

" चातुर्मास्याद्यपर्वप्रोक्ताग्नेयाद्यष्टकान्तिमे ( के )।
वैश्वदेवेतिशब्दोक्तो गुणः संघस्य नाम वा॥
नामत्वे रूपराहित्यादविधिर्गुणता ततः।
अग्न्यादिभिर्विकल्प्यन्ते विश्वे देवास्तु सप्तसु॥
अनूद्याष्टौ यजेतेति तत्संघे नाम वर्णितम्।
अविधित्वेऽप्यर्थवत्स्यान्नाम प्राक्प्रवणादिषु॥
इज्यन्तेऽत्र यजन्ते वा विश्वे देवा इतीदृशी।
निरुक्तिर्न विकल्पः स्यादुत्पन्नत्युत्पन्नशिष्टतः॥ "

चातुर्मास्ययागस्य चत्वारि पर्वाणि वैश्वदेवो वरुणप्रघासः साकमेधः शुनासीर्यश्चेति। तेषु प्रथमे पर्वणि अष्टौ यागा विहिताः—" आग्नेयमष्टाकपालं निर्वपति सौम्यं चरुꣳ सावित्रं द्वादशकपालꣳ सारस्वतं चरुं पौष्णं चरुं मारुतꣳ सप्तकपालं वैश्वदेवीमामिक्षां द्यावापृथिव्यमेककपालम्" इति। तेषामष्टानां संनिधाविदमाम्नायते—" वैश्वदेवेन यजेत" इति। तत्राऽऽग्नेयादीन्यजेतेत्यनूद्य वैश्वदेवशब्देन देवतारूपो गुणस्तेषु विधीयते। यद्यपि वैश्वदेव्यामिक्षायां विश्वे देवाः प्राप्तास्तथाऽप्याग्नेयादिषु सप्तसु यागेष्वप्राप्तत्वाद्विधीयन्ते। तेष्वप्यग्न्यादिदेवताः सन्तीति चेत्तर्हि गत्यभावात्तेषु देवता

विकल्प्यन्ताम् । नामधेयत्वे तु नाममात्रस्याविधेयत्वाद्द्रव्यदेवतयोरभावेन यागस्यात्र स्वरूपासंभवाच्छ्रूयमाणो विधिरनर्थकः स्यात्। तस्माद्गुणविधिरिति प्राप्ते ब्रूमः—उत्पत्तिवाक्यैर्विहिताग्नेयादीनष्टौ यागान्यजेतेत्यनूद्याष्टानां संघे वैश्वदेवशब्दो नामत्वेनोपवर्ण्यते । न च विधित्वाभावेऽपि नामोपदेशवैयर्थ्यं, प्राचीनप्रवणे वैश्वदेवेन यजेतेत्यादिषु वैश्वदेवशब्देनैकेनैवाष्टानां संघस्य व्यवहर्तव्यत्वात् । नामप्रवृत्तिनिमित्तभूता निरुक्तिर्द्वेधा—आमिक्षायागे विश्वेषां देवानामिज्यमानतया तत्सहचरितानां सर्वेषां छत्रिन्यायेन वैश्वदेवत्वम् । अथ वा विश्वे देवा अष्टानां कर्तार इति वैश्वदेवत्वम् । तथा च ब्राह्मणम्—"यद्विश्वे देवाः समयजन्त । तद्वैश्वदेवस्य वैश्वदेवत्वम्" इति।

देवताविकल्पस्तु समानबलत्वाभावान्न युज्यते । अग्न्यादय उत्पत्तिशिष्टत्वात्प्रबला विश्वे देवा अनुत्पन्नशिष्टत्वाद्दुर्बलाः । तस्माद्वैश्वदेवशब्दः कर्मनामधेयम् ।

अत्रैव गुरुमतमाह—

"गुणनामत्वसंदेहादप्रमा चोदनेति चेत् ।
नोक्तन्यायेन संघस्य नामधेयत्वनिर्णयात् ॥"

स्पष्टोऽर्थः ।

द्वितीयाध्यायस्य द्वितीयपादे चिन्तितम्—

"गुणः कर्मान्तरं वा स्याद्वाजिभ्यो वाजिनं त्विति ।
गुणो देवाननूद्योक्तः समुच्चयविकल्पतः ॥
आमिक्षोत्पत्तिशिष्टत्वात्प्रबला तत्र वाजिनम् ।
गुणोऽप्रविश्य कर्मान्यत्कल्पयेद्वाजिदेवकम् ॥"

"तप्ते पयसि दध्यानयति, सा वैश्वदेव्यामिक्षा, वाजिभ्यो वाजिनम्" इति श्रूयते । घनीभूतः पिण्ड आमिक्षा, वाजिनं जलम् । तत्राऽऽमिक्षाद्रव्यभाजो यागे विश्वे देवा उक्ताः । ते च वाजिभ्य इत्यनेनानूद्यन्ते । वाजोऽन्नमामिक्षारूपमेषामस्तीति तन्निष्पत्तेः ।ताननूद्य वाजिनद्रव्यरूपो गुणो विधीयते । तच्च द्रव्यमामिक्षाद्रव्येण सह समुच्चीयतां विकल्प्यतां वेति प्राप्ते ब्रूमः—उत्पत्तिशिष्टेनाऽऽमिक्षाद्रव्येणावरुद्धे वैश्वदेवयागे वाजिनद्रव्यस्योत्पत्तिशिष्टताया अवकाशाभावाद्वाजिनशब्दो वाजिशब्दार्थस्य देवतान्तरतामापादयति । ततो द्रव्यदेवतालक्षणस्य रूपस्य भिन्नत्वात्कर्मान्तरम् ।

१ क. 'त्रस्य वि' । २ ख. च. 'वाक्ये विहि'। ३ क. ख. घ. ङ. 'क्तिविशेषा आ' । ४ ख. ङ. च. 'त्पन्नशिष्टतयाऽव' ।

(राजसूयविषयस्य चातुर्मास्यगतप्रथमपर्वरूपहविरष्टकस्य विधिः)

चतुर्थाध्यायस्य प्रथमपादे चिन्तितम्—

"आमिक्षा वाजिनं च स्याद्दध्यानीतेः प्रयोजिका।
उताऽऽमिक्षैव सामर्थ्यं द्वयोस्तुल्यं ततोऽग्रिमः॥
आमिक्षा पय एवात्र तच्छब्दान्मन्त्रतो रसात्।
प्रयोजिकैका प्राधान्यादनुनिष्पादि वाजिनम्॥"

इदमाम्नायते—"तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनम्" इति।

तत्र पयसि दधिप्रक्षेपादामिक्षाद्रव्यं यथा निष्पद्यते तथा वाजिनद्रव्यमपीति दध्यानयनस्य जनकत्वसामर्थ्यमुभयद्रव्यविषयं तुल्यमेव। तस्मादुभयमपि प्रयोजकमिति प्राप्ते ब्रूमः—न द्रव्यान्तरमामिक्षा, किं तु पय एवेति तच्छब्दादिभिरवगम्यते। यस्मिन्पयसि दधिप्रक्षेपः साऽऽमिक्षेति तच्छब्देन पयः परामृश्यते। आमिक्षायागे पुरोनुवाक्यायामप्येवमाम्नातम्—"जुषन्तां युज्यं पयः" इति। पयो रसश्च मधुर आमिक्षायामनुवर्तते, न तु वाजिने। ततः प्राधान्येन पयसो घनीभावं कर्तुं दध्यानीतमित्यामिक्षैव प्रयोजिका। अनुनिष्पाद्येव वाजिनं न तु प्रयोजकम्।

अष्टमाध्यायस्य द्वितीयपादे चिन्तितम्—

"सुरावाजिनयोः सोमस्येष्टेर्वा सोमशब्दतः।
आद्यो मैवं हविःसाम्यात्सोमशब्दः प्रशस्तये॥"

सौत्रामण्यां सुराग्रहाः श्रुताः—सुराग्रहान्गृह्णातीत्यादिना। चातुर्मास्येषु वाजिनयागः श्रुतः—वाजिभ्यो वाजिनमिति। तत्रोभयत्र सोमस्य विध्यन्तः कार्यः। कुतः, "सोमो वै वाजिनं सुरा सोमः" इति वाजिने सुरायां च सोमशब्दप्रयोगात्। सोमशब्दश्चाग्निहोत्रशब्दवद्धर्मानतिदिशतीति चेन्मैवम्। ऐष्टिकहविःसाम्यात्। ओषधिविकृतं सुरा, सांनाय्यविकृतं वाजिनम्। तस्मादैष्टिको विध्यन्तः। सोमशब्दस्त्वर्थवादगतत्वान्नाग्निहोत्रादिनामवदतिदेशकः। यदि वाजिनस्य प्रतिपत्तिकर्मत्वान्नास्ति धर्मापेक्षा तर्ह्येतास्मिन्नंशे कृत्वाचिन्ताऽस्तु।

तत्रैवान्यच्चिन्तितम्—

"द्वयोर्दध्नोऽथ पयस आमिक्षायां द्विजत्वतः।
द्वयोर्दध्नो घनत्वेन प्राधान्यात्पयसो भवेत्॥"

"तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा" इति श्रुताया आमिक्षायाः सांनाय्ययागीययोर्दधिपयसोर्धर्माः कार्या आमिक्षाया उभयजन्य-

त्वादित्येकः पक्षः । घनत्वस्याऽऽधिक्याद्दधिधर्मा इति द्वितीयः पक्षः । पयस्यामिक्षामुत्पादयितुं सहकारित्वेन दध्यानीयते । ततः पयस एव मुख्यकारणत्वात्तद्धर्म एव न्याय्यः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये प्रथमकाण्डेऽष्टमप्रपाठके
द्वितीयोऽनुवाकः ॥ २ ॥

---

( अथ प्रथमाष्टकेऽष्टमप्रपाठके तृतीयोऽनुवाकः । )

---

ऐन्द्राग्नमेकादशकपालं मारुतीमामिक्षां वारुणीमामिक्षां कायमेककपालं प्रघास्यान्हवामहे मरुतो यज्ञवाहसः करम्भेण सजोषसः । मो षू ण इन्द्र पृत्सु देवास्तु स्म ते शुष्मिन्नवया । मही ह्यस्य मीढुषो यव्या । हविष्मतो मरुतो वन्दते गीः । यद्ग्रामे यदरण्ये यत्सभायां यदिन्द्रिये । यच्छूद्रे यदर्ये एनश्चकृमा वयम् । यदेकस्याधि धर्मणि तस्यावयजनमसि स्वाहा । अक्रन्कर्म कर्मकृतः सह वाचा मयोभुवा । देवेभ्यः कर्म कृत्वाऽस्तं प्रेत सुदानवः ( १ ) ॥

( वयं यद्द्वि९ शतिश्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टकेऽ-
ष्टमप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

( राजसूयविषयस्य चातुर्मास्यसंबन्धिवरुणप्रघासाख्यद्वितीयपर्वणोऽभिधानम् )

( अथ प्रथमाष्टकेऽष्टमप्रपाठके तृतीयोऽनुवाकः । )

---

ऐन्द्राग्नमित्यैन्द्र—अग्नम् । एकादशकपालमित्येकादश—कपालम् । मारुतीम् । आमिक्षाम् । वारुणीम् । आमिक्षाम् । कायम् । एककपालमित्येक—कपालम् । प्रघास्यानिति प्र—घास्यान् । हवामहे । मरुतः । यज्ञवाहस इति यज्ञ—वाहसः । करम्भेण । सजोषस इति स—जोषसः । मो इति । स्विति । नः । इन्द्र । पृत्स्विति पृत्—सु । देव । अस्तु । स्म । ते । शुष्मिन् । अवया । मही । हि । अस्य । मीढुषः । यव्या । हविष्मतः । मरुतः । वन्दते । गीः । यत् । ग्रामे । यत् । अरण्ये । यत् । सभायाम् । यत् । इन्द्रिये । यत् । शूद्रे । यत् । अर्ये । एनः । चकृम । वयम् । यत् । एकस्य । अधीति । धर्मणि । तस्य । अवयजनमित्यव—यजनम् । असि । स्वाहा । अक्रन् । कर्म । कर्मकृत इति कर्म—कृतः । सह । वाचा । मयोभुवेति मयः—भुवा । देवेभ्यः । कर्म । कृत्वा । अस्तम् । प्रेति । इत । सुदानव इति सु—दानवः ( १ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टकेऽष्टमप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

( राजसूयविषयस्य चातुर्मास्यसंबन्धिवरुणप्रघासाख्यद्वितीयपर्वणोऽभिधानम् )

( अथ प्रथमकाण्डेऽष्टमप्रपाठके तृतीयोऽनुवाकः । )

---

द्वितीये वैश्वदेवाख्यं प्रथमपर्वोक्तं , तृतीये वरुणप्रघासाख्यं द्वितीयं पर्वोच्यते । तत्र विशेषहवींषि चत्वारि विधत्ते—

**ऐन्द्राग्नमेकादशकपालं मारुतीमामिक्षां वारुणीमामिक्षां कायमेककपालम्,** इति ।

निर्वपतीति पूर्वानुवाकादनुवर्तते ॥

तानेतान्वरुणप्रघासान्विधातुं प्रस्तौति—

" प्रजापतिः सविता भूत्वा प्रजा असृजत । ता एनमत्यमन्यन्त । ता अस्मादपाक्रामन् । ता वरुणो भूत्वा प्रजा वरुणेनाग्राहयत् । ताः प्रजा वरुणगृहीताः । प्रजापतिं पुनरुपाधावन्नाथमिच्छमानाः । स एतान्प्रजापतिर्वरुणप्रघासानपश्यत् । तां निरवपत् । तैर्वै स प्रजा वरुणपाशादमुञ्चत् । " [ ब्रा० का० १ प्र० ६ अ० ४ ] इति ।

सविता भूत्वोत्पादको भूत्वा । अत्यमन्यन्तावज्ञां कृतवत्यः । वरुणो भूत्वा वरुणेन वरुणपाशरूपेण जलोदररोगेण । नाथं स्वामिनं रोगशान्तये, वरुणप्रघासानेतन्नामकान्यागविशेषान् ॥

इदानीं विधत्ते—

" यद्वरुणप्रघासा निरुप्यन्ते ( १ ) । प्रजानामवरुणग्राहाय । " [ ब्रा० का० १ प्र० ६ अ० ४ ] इति ।

अस्य पर्वणः कालमापस्तम्बो दर्शयति—" ततश्चतुर्षु मासेष्वाषाढ्यां श्रावण्यां वोदवसाय वरुणप्रघासैर्यजेत " इति । उदवसाय पूर्वदेशान्निर्गत्य ॥

अस्मिन्वरुणप्रघासपर्वणि द्वितीयां वेदिं विधातुं प्रस्तौति—

" तासां दक्षिणो बाहुर्न्यक्न आसीत् । सव्यः प्रसृतः । स एतां द्वितीयां दक्षिणतो वेदिमुदहन् । ततो वै स प्रजानां दक्षिणं बाहुं प्रासारयत् । " [ ब्रा० का० १ प्र० ६ अ० ४ ] इति ।

तासां प्रजानां, न्यक्नः शीतवातरोगेण नितरां संकुचितः, वेदिमुदहन्वेदेरुद्धननं कृतवान् ॥

विधत्ते—

" यद्द्वितीयां दक्षिणतो वेदिमुद्धन्ति । प्रजानामेव तद्यजमानो दक्षिणं

---

१ क. घ. ङ. 'श्चतुषु मा' । च. 'श्चतस्रषु मा' ।

( राजसूयविषयस्य चातुर्मास्यसंबन्धिवरुणप्रघासाख्यद्वितीयपर्वणोऽभिधानम् )

बाहुं प्रसारयति । तस्माच्चातुर्मास्ययाज्यमुष्मिँल्लोक उभयाबाहुः । यज्ञाभिजित५ ह्यस्य । " [ ब्रा० का० १ प्र० ६ अ० ४ ] इति ।

दक्षिणतश्चोदकप्राप्तया वेदेर्दक्षिणभागे । यस्माच्चातुर्मास्येषु वेदिद्वयमस्ति तस्मात्तद्याजी स्वर्गे बाहुद्वयोपेतो भवति । यद्यपि सर्वेषां बाहुद्वयमस्ति तथाऽप्येक एव बाहुस्तेषां सामर्थ्योपेतः । अत एवाऽऽम्नातम्—" तस्माद्दक्षिणोऽर्ध आत्मनो वीर्यावत्तरः " इति । अस्य बाहुद्वयमपि सामर्थ्यातिशयोपेतमिति विशेषः । तदेतदस्य यज्ञाभिजितमनेन यज्ञेन संपादितम् ॥

उभयोर्वेद्योर्मध्ये त्रयोदशाङ्गुलिपरिमितं व्यवधानं विधत्ते—

" पृथमात्राद्वेदी असंभिन्ने भवतः ( २ ) । तस्मात्पृथमात्रं व्यꣳसौ । " [ ब्रा० का० १ प्र० ६ अ० ४ ] इति ।

यस्माद्वेद्योरुक्तं व्यवधानं तस्माल्लोकेऽपि वामदक्षिणावंसौ पृथमात्रौ, यद्वा पृथमात्रं त्रयोदशाङ्गुलपरिमाणं यथा भवति तथा विभक्तौ दृश्येते ॥

विधत्ते—

" उत्तरस्यां वेद्यामुत्तरवेदिमुपवपति । पशवो वा उत्तरवेदिः । पशूनेवावरुन्धे । अथो यज्ञपरुषोऽनन्तरित्यै । " [ ब्रा० का० १ प्र० ६ अ० ४ ]

यज्ञपरुषो यज्ञावयवस्यान्तरित्या अन्तरायाभावार्थम् । उत्तरवेदेरभावे तद्रूपो यज्ञावयवोऽन्तरितः स्यात् ॥

वैश्वदेवपर्वण्युक्तानामाग्नेयमष्टाकपालमित्यादीनां पञ्चहविषां ब्राह्मणमनुब्राह्मणं चात्राप्यतिदिशति—

" एतद्ब्राह्मणान्येव पञ्च हवीꣳषि । " [ ब्रा० का० १ प्र० ६ अ० ४ ] इति ।

आग्नेयादीनां पञ्चानां विधायकं पूर्वस्मिन्पर्वणि यद्ब्राह्मणमेतदेवास्मिन्पर्वणि ब्राह्मणं विधायकं येषां पञ्चानां तान्येतद्ब्राह्मणानि । अत्रापि तथैवाऽऽदौ पञ्च हवींष्यनुतिष्ठेदित्यर्थः ॥

मुख्यब्राह्मणे विहितस्यैन्द्राग्नस्यातिदिष्टपञ्चहविरानन्तर्यं विधत्ते—

" अथैष ऐन्द्राग्नो भवति । " [ ब्रा० का० १ प्र० ६ अ० ४ ] इति ॥

तस्मिन्यागे श्रुतौ देवौ प्रशंसति—

"प्राणापानौ वा एतौ देवानाम् । यदिन्द्राग्नी । यदैन्द्राग्नो भवति ( ३ ) । प्राणापानावेवावरुन्धे । ओजो बलं वा एतौ देवानाम् । यदिन्द्राग्नी । यदैन्द्राग्नो भवति । ओजो बलमेवावरुन्धे । " [ ब्रा० का० १ प्र० ६ अ० ४ ] इति ।

ओजो मानस उत्साहो बलं शारीरमिति विशेषः ॥

मुख्यब्राह्मणविहितमामिक्षायागमनूद्य तद्देवताकावेव मेषीमेषौ यवमयौ विधत्ते—

" मारुत्यामिक्षा भवति । वारुण्यामिक्षा । मेषी च मेषश्च भवतः । मिथुना एव प्रजा वरुणपाशान्मुञ्चति । " [ब्रा० का० १ प्र० ६ अ० ४] इति ।

मारुत्यामिक्षा भवति मेषी च, वारुण्यामिक्षा भवति मेषश्चेति तत्तत्साहित्याभिधानार्थौ चकारौ । स्त्रीपुरुषरूपयोर्मेषीमेषयोरनुष्ठानेन मिथुनात्मिकाः प्रजा रोगान्मुक्ता भवन्ति ॥

मेषीमेषयोर्गुणविशेषं विधत्ते—

" लोमशौ भवतो मेध्यत्वाय ( ४ ) । " [ ब्रा० का० १ प्र० ६ अ० ४ ] इति ।

एतच्च सूत्रकारेण स्पष्टीकृतम् " ऊर्णाभिर्मेषप्रतिकृती लोमशौ कुरुतः" इति ।

तयोर्मेषीमेषयोः पुरतः शमीपर्णस्थापनं विधत्ते—

" शमीपर्णान्युपवपति । घासमेवाऽऽभ्यामपियच्छति ( १ ) । " [ ब्रा० का० १ प्र० ६ अ० ४ ] इति ।

घासमपीत्यन्वयः ॥

शमीपर्णानां शताधिकसंख्यां विधातुं प्रस्तौति—

" प्रजापतिमन्नाद्यं नोपानमत् । स एतेन शतेध्मेन हविषाऽन्नाद्यमवारुन्ध । यत्परःशतानि शमीपर्णानि भवन्ति । अन्नाद्यस्यावरुद्ध्यै । " [ ब्रा० का० १ प्र० ६ अ० ४ ] इति ।

अत्तुं योग्यं शाल्यादिजन्यं यदन्नं तत्प्रजापतिर्न प्राप्नोत् । स च प्रजापतिरेतेन शमीवृक्षजन्येन शतसंख्यायुक्तेन काष्ठसमूहेन दीपितेऽग्नौ हुतेन हविषा तदन्नाद्यं संपादितवान् । अतः परःशतानि शताधिकसंख्यानि पर्णान्युपवपेत् ॥

तत्र करीरोद्वापं विधातुं प्रस्तौति—

" सौम्यानि वै करीराणि । सौम्या खलु वा आहुतिर्दिवो वृष्टिं च्यावयति । " [ ब्रा० का० १ प्र० ६ अ० ४ ] इति ।

करीरनामकान्यङ्कुराणि सोमवल्लीसदृशत्वात्सौम्यानि । आहुतिरपि सोमसंबन्धिनी वृष्टिहेतुः ॥

विधत्ते—

" यत्करीराणि भवन्ति । सौम्ययैवाऽऽहुत्या दिवो वृष्टिमवरुन्धे । " [ ब्रा० का० १ प्र० ६ अ० ४ ] इति ।

( राजसूयविषयस्य चातुर्मास्यसंबन्धिवरुणप्रघासाख्यद्वितीयपर्वणोऽभिधानम् )

करीरशब्देन खर्जुरीफलान्युच्यन्त इति केचित् । तानि शमीपर्णवद्भक्ष्यत्वोपचारेण तयोः पुरत उपवपेत् । तथा च सूत्रकारः—“ अथाऽऽभ्यां शमीपर्णकरीराण्युपवपति परःशतानि परःसहस्राणि च ” इति ॥

नवमं यागं प्रशंसति—

“ काय एककपालो भवति । प्रजानां कंत्वाय । ( १ ) ” [ ब्रा० का० १ प्र० ६ अ० ४ ] इति ।

सुखित्वायेत्यर्थः । कायः प्रजापतिदेवताकः ॥

दीपपात्रसदृशानि यवपिष्टनिर्मितानि पात्राणि विधत्ते—

“ प्रतिपूरुषं करम्भपात्राणि भवन्ति । जाता एव प्रजा वरुणपाशान्मुञ्चति । एकमतिरिक्तम् । जनिष्यमाणा एव प्रजा वरुणपाशान्मुञ्चति ( ९ ) । ” [ब्रा० का० १ प्र० ६ अ० ४ ] इति ।

दधिसिक्ता यवसक्तवः करम्भः । यजमानस्य गृहे यावन्तः पुरुषा मनुष्यास्तत्संख्यया पात्राणि विधायैकं पात्रमधिकं कुर्यात् । अत एव सूत्रकार आह—“ आमपेषाणां[1] पत्नी करम्भपात्राणि करोति यावन्तो यजमानस्यामात्याः सस्त्रीकास्तावन्त्येकातिरिक्तानि ” इति ॥

तदेवमनुब्राह्मणगतेनानुवाकेन वरुणप्रघासादिविधयो देवताप्रशंसाश्चोक्ताः । अथानुवाकान्तरेण हविरासादनादिप्रयोगा[2] उच्यन्ते । तत्र वेदिद्वये हविःसादनव्यवस्थां विधत्ते—

“ उत्तरस्यां वेद्यामन्यानि हवी॑ंषि सादयति । दक्षिणायां मारुतीम् । अपधुरमेवैना युनक्ति । अथो ओज एवाऽऽसामवहरति । तस्माद्ब्राह्मणश्च क्षत्राच्च विशोऽन्यतोऽपक्रामिणीः । ” [ ब्रा० का० १ प्र० ६ अ० ५ ] इति ।

मारुत्या आमिक्षाया अन्यान्याग्नेयादीन्यष्टौ हवींषि । मरुतो देवानां मध्ये विशः । अतो मारुत्याः पृथग्वेदिसादनादेना विशोऽपधुरमेव युनक्ति अपक्रमणमेव प्रापयति । धुरो गमनमपधुरं, धूःशब्देन बहुविधहविर्वहनयोग्या भूमिरुच्यते । सा चोत्तरगता वेदिस्तस्या अपगमनं यथा भवति तथा मरुद्रूपा एना विशो वेद्यन्तरे योजितवान्भवति । किं चाऽऽसां विशामोजो बलमवहरत्येव न्यक्करोत्येव । यस्माद्विशां न्यक्कारस्तस्माद्ब्राह्मणात्क्षत्रियाच्चेमा विशोऽन्यतो ग्रामान्तरे वाटिकान्तरे[3] वाऽपक्रामन्ति ॥

---

१ घ. 'मशेषा' । २ क. घ. ङ. 'योग उच्यते । त' । ३ ख. घ. ङ. च. वा पीठिका' ।

प्रचारपौर्वापर्यं पाठेनैव प्राप्तं प्रशंसति—

“ मारुत्या पूर्वया प्रचरति । अनृतमेवावयजते । वारुण्योत्तरया । अन्तत एव वरुणमवयजते । ” [ ब्रा० का० १ प्र० ६ अ० ५ ] इति ।

मारुत्या आमिक्षायाः प्रथमप्रचारेणानृतमयथाशास्त्रार्थानुष्ठानेन दोषमवयजते विनाशयति । वारुण्यामिक्षाया उत्तरकालीनप्रचारेण वरुणं वरुणपाशरूपं जलोदररोगमन्तत एवावयजते सर्वथैव विनाशयति ॥

प्रचारात्प्राचीनेष्वङ्गेषु पूर्वोक्तपौर्वापर्यवैपरीत्यं विधत्ते—

“ यदेवाध्वर्युः करोति ( १ ) । तत्प्रतिप्रस्थाता करोति । तस्माद्यच्छ्रेयान्करोति । तत्पापीयान्करोति । ” [ ब्रा० का० १ प्र० ६ अ० ५ ] इति ।

अध्वर्युरुत्तरवेद्यवस्थिताया वारुण्यामिक्षाया अनुष्ठाता, प्रतिप्रस्थाता तु दक्षिणवेद्यां मारुतीमनुतिष्ठति । तत्र यद्यदन्वाधानादिकमेकैकमङ्गमध्वर्युरनुतिष्ठति तत्तदङ्गं प्रतिप्रस्थाता तदनन्तरमेवानुतिष्ठेत् । अत एव च लोकेऽपि संदिग्धेषु लौकिकवैदिकव्यवहारेषु श्रेयान्प्रामाणिकत्वेन संप्रतिपन्नः पुरुषो यदेव करोति तदेव पापीयान्मूढोऽपि करोति ॥

अत्र बौधायनेन यदिदमुक्तम्—“ अथ प्रतिप्रस्थाता पत्नीं पृच्छति पत्नि कस्ते जार इति, असाविति तं वरुणो गृह्णातु ” इति, तदिदं विधत्ते—

“ पत्नीं वाचयति । मेध्यामेवैनां करोति । अथो तप एवैनामुपनयति । ” [ ब्रा० का० १ प्र० ६ अ० ५ ] इति ।

पापं प्रख्यापयेत्पापीति स्मृतिकारैरुक्तत्वाद्विद्यमानं जारमुद्दिश्य पत्नीं वाचयेत् । तेन च प्रख्यापनेन पत्नीं यागयोग्यां करोति । किं च सभामध्ये मानहानिसहिष्णुत्वरूपं यत्तपस्तदप्येनां पत्नीं प्रतिप्रस्थाता प्रापयति ॥

तस्याश्च पत्न्या लज्जां मुक्त्वा जारनिर्देशं विधत्ते—

“ यज्जारꣳ सन्तं न प्रब्रूयात् । प्रियं ज्ञातिꣳ रुन्ध्यात् । असौ मे जार इति निर्दिशेत् । निर्दिश्यैवैनं वरुणपाशेन ग्राहयति ( २ ) । ” [ ब्रा०का० १ प्र० ६ अ० ५ ] इति ॥

मन्त्रकाण्डे प्रधानयागविधिभ्य ऊर्ध्वं प्रघास्यान्मो षू णो यद्ग्रामेऽकन्कर्मेत्येते चत्वारो मन्त्रा आम्नाताः । तत्र प्रथममन्त्रस्य विनियोगमापस्तम्ब आह— “ प्रघास्यान्हवामह इति प्रतिप्रस्थाता पत्नीमुदानयति ” इति ।

पाठस्तु—

प्रघास्यान्हवामहे मरुतो यज्ञवा-
हसः करम्भेण सजोषसः ।, इति ।

( राजसूयविषयस्य चातुर्मास्यसंबन्धिवरुणप्रघासाख्यद्वितीयपर्वणोऽभिधानम् )

वरुणपाशरूपं कर्म घ्नन्तीति वरुणप्रघासास्तानर्हन्तीति वरुणप्रघास्याः। यज्ञं वहन्तीति यज्ञवाहसः। दधिसर्पिर्मिश्रैः सक्तुभिर्निष्पादितं पात्रजातं करम्भशब्देनोच्यते। तेन करम्भेण दक्षिणवेदिस्थितेऽग्नौ दंपतिभ्यां हूयमानेन परस्परं समानप्रीतयः सजोषसः। तथाविधान्मरुतो हवामह आह्वयामः॥

विधत्ते—

"प्रघास्यान्हवामह इति पत्नीमुदानयति। अहुतैवैनाम्।" [ब्रा० का० १ प्र० ६ अ० ५] इति।

एनां पत्नीमनेन मन्त्रपाठेनाहुतैवाऽऽहूतवानेव भवति॥

अवशिष्टस्य मन्त्रत्रयस्य विनियोगमाहाऽऽपस्तम्बः—"अथान्तरा वेदी गत्वा यजमानः पत्नी चोत्तरेणोत्तरां वेदिमैषीके शूर्पे करम्भपात्राण्योप्य शीर्षन्नधि निधाय पुरस्तात्प्रत्यञ्चौ तिष्ठन्तौ दक्षिणेऽग्नौ शूर्पेण जुहुतो मो षू ण इन्द्रेति यजमानः पुरोनुवाक्यामन्वाह यद्ग्राम इत्युभौ याज्यामक्रन्कर्म कर्मकृत इति विपर्यन्तौ जपतः" इति।

तत्र प्रथममन्त्रपाठस्तु—

मो षू ण इन्द्र पृत्सु देवास्तु स्म ते शुष्मिन्नवया। मही ह्यस्य मीढुषो यव्या। हविष्मतो मरुतो वन्दते गीः।, इति।

हे इन्द्र देव नोऽस्मान्पृत्सु सङ्ग्रामेषु मो मैव प्रवर्तयेति शेषः। तदेतदप्रवर्तनं सु समीचीनं वैरिणामेवासंभवात्। हे शुष्मिन्बलवंस्ते तव प्रसादादवयाऽवयजनमनिष्टनाशनमस्तु स्म सर्वदा भवतु। यस्मात्कारणान्मीढुषो वृष्टिसेचनसमर्थस्य तव प्रसादादस्माकं मही भूमिर्यव्या यवादिकृत्स्नधान्ययोग्या तस्मादनिष्टनाशनमित्यन्वयः। गीरस्मदीया स्तुतिरूपा वाग्घविष्मतः करम्भपात्ररूपहविर्युक्तान्मरुतो वन्दते नमस्करोति स्तौतीत्यर्थः॥

द्वितीयमन्त्रपाठस्तु—

यद्ग्रामे यदरण्ये यत्सभायां यदिन्द्रिये। यच्छूद्रे यदर्य एनश्चकृमा वयम्। यदेकस्याधि धर्मणि तस्यावयजनमसि स्वाहा।, इति।

अत्र सप्त यच्छब्दाः सप्तधावाक्यभेदार्थाः। स चाऽऽदरार्थः। अर्ये स्वामिनि वैश्ये वा। एकस्य दंपत्योर्मध्ये कस्यचिद्धर्मणि शास्त्रीये धर्मे वयं

यजमानो दारा दासाश्च ग्रामविषये यत्पापमधिकं चकृम तस्य सर्वस्यावयजनं विनाशकं हे करम्भपात्रजात त्वमस्यतः स्वाहा त्वां ददामीत्यर्थः ॥

एतयोरुभयोर्याज्यापुरोनुवाक्ययोर्हौत्रत्वमपवदितुं विधत्ते—

" यत्पत्नी पुरोनुवाक्यामनुब्रूयात् । निर्वीर्यो यजमानः स्यात् । यजमानोऽन्वाह । आत्मन्नेव वीर्यं धत्ते । उभौ याज्या सवीर्यत्वाय । " [ ब्रा० का० १ प्र० ६ अ० ५ ] इति ।

याज्यादृष्टान्तेन पुरोनुवाक्यायामपि प्राप्तां पत्नीमर्थवादेन वारयति ॥

पापरूपेण प्रविश्य वरुणो यज्ञघातीति वरुणो याज्यायामेनःशब्देन विवक्षित इति दर्शयति—

" यद्ग्रामे यदरण्य इत्याह । यथोदितमेव वरुणमवयजते ।" [ ब्रा० का० १ प्र० ६ अ० ५ ] इति ॥

दक्षिणवेदिगतेऽग्नौ होमं विधातुं प्रस्तौति—

"यजमानदेवत्यो वा आहवनीयः (३)। भ्रातृव्यदेवत्यो दक्षिणः। यदाहवनीये जुहुयात् । यजमानं वरुणपाशेन ग्राहयेत् । " [ ब्रा० का० १ प्र० ६ अ० ५ ] इति ।

" उत्तरदिक्स्थायां वेद्यामुत्तरवेद्युपवापेन निष्पन्न आहवनीयः। इतरवेदिगतोऽग्निर्दक्षिणः ॥

विधत्ते—

" दक्षिणेऽग्नौ जुहोति । भ्रातृव्यमेव वरुणपाशेन ग्राहयति । "[ब्रा० का० १ प्र० ६ अ० ५ ] इति ॥

जुहूमपवदितुं विधत्ते—

" शूर्पेण जुहोति । अन्नमेव वरुणमवयजते । " [ ब्रा० का० १ प्र० ६ अ० ५ ] इति ।

अन्नसाधने शूर्पे भवमन्नं भोज्यद्रव्यविनाशिनमित्यर्थः[1] ॥

होमे[2] गुणद्वयं क्रमेण विधत्ते—

" शीर्षन्नधिनिधाय जुहोति । शीर्षत एव वरुणमवयजते । प्रत्यङ्तिष्ठञ्जुहोति ( ४ )। प्रत्यङ्ङेव वरुणपाशान्निर्मुच्यते । " [ ब्रा० का० १ प्र० ६ अ० ५ ] इति ।

---

१ क. भोक्तव्यद्रव्यानिष्टं विनाशयतीत्य॑ । घ. ङ. च. भोक्तव्यद्रव्यानिष्टवि॑ । २ ख. घ. ङ. च. होमगु॑ ।

( राजसूयविषयस्य चातुर्मास्यसंबन्धिवरुणप्रघासाख्यद्वितीयपर्वणोऽभिधानम् )

करम्भपात्रपूर्णं शूर्पं शिरसि सकृन्निधाय पश्चाज्जुहुयात्तेन शिरोरोगादिकं शाम्यति। पश्चिमाभिमुखेन होमेन प्रत्यङ्ङेव वरुणस्य प्रतिकूलत्वेन प्रबल एव सन्वरुणपाशान्निष्क्रष्टो मुच्यते ॥

तृतीयमन्त्रपाठस्तु—

अक्रन्कर्म कर्मकृतः सह वाचा मयोभुवा। देवे-
भ्यः कर्म कृत्वाऽस्तं प्रेत सुदानवः ॥, इति ॥

कर्मकृतोऽध्वर्युप्रमुखा यजमानपत्न्यन्ताः सर्वे, मयोभुवा मयः शिवं सुखम्। "यद्वै शिवम्। तन्मयः" इति श्रुतेः। तत्सुखं भावयित्र्या मन्त्रोच्चारणरूपया वाचा सह करम्भपात्रहोमान्तं कर्माक्रन्कृतवन्तः। हे सुदानवः सुष्ठु हविषः प्रदातारोऽध्वर्युप्रभृतयो देवार्थमिदं कर्म कृत्वाऽस्तं प्रेत स्वगृहं गच्छत ॥

अस्मिन्मन्त्र उत्तरार्धतात्पर्यं दर्शयति—

"अक्रन्कर्म कर्मकृत इत्याह। देवानृणं निरवदाय। अनृणा गृहानुपप्रेतेति वावैतदाह।" [ ब्रा० का० १ प्र० ६ अ० ५ ] इति।

देवान्प्रति प्रत्यर्पणीयं यद्दणं तन्निरवदाय निःशेषेण प्रत्यर्प्य ॥

अथावभृथद्रव्यं विधातुं प्रस्तौति—

"वरुणगृहीतं वा एतद्यज्ञस्य। यद्यजुषा गृहीतस्यातिरिच्यते। तुषाश्च निष्कासश्च।" [ ब्रा० का० १ प्र० ६ अ० ५ ] इति।

वारुणयागे मेषार्थेषु यवेषु ये तुषा यश्च निष्कासः पात्रलग्न आमिक्षांशले-पस्तदुभयं पूर्वं मन्त्रेण गृहीतस्य द्रव्यस्यातिरिक्तोंऽशः। अतो यज्ञसंबद्धमेतद्व-रुणगृहीतमेव ॥

विधत्ते—

"तुषैश्च निष्कासेन चावभृथमवैति। वरुणगृहीतेनैव वरुणमवयजते।" [ ब्रा० का० १ प्र० ६ अ० ५ ] इति।

अत्रावभृथशब्देन सौमिकावभृथधर्मोपेतं कर्मोच्यते ॥

तदेतत्प्रत्यभिज्ञापयितुं तत्रत्यविधीन्सार्थवादाननुवदति—

"अपोऽवभृथमवैति (५)। अप्सु वै वरुणः। साक्षादेव वरुणमवयजते। प्रति-युतो वरुणस्य पाश इत्याह। वरुणपाशादेव निर्मुच्यते। अप्रतीक्षमायन्ति। वरुणस्यान्तर्हित्यै। एधोऽस्येधिषीमहीत्याह। समिधैवाग्निं नमस्यन्त उपायन्ति। तेजोऽसि तेजो मयि धेहीत्याह। तेज एवाऽऽत्मन्धत्ते।" [ ब्रा० का० १ प्र० ६ अ० ५ ] इति।

अपः प्रत्यवभृथमनुतिष्ठेदप्सु कुर्यादित्यर्थः। अपामधिपतित्वादप्सु वरुणस्तिष्ठति। अतोऽत्र होमेन वरुणं साक्षादेव व्यवधानमन्तरेणैव विनाशयति। कर्मानुष्ठानादूर्ध्वमुदकसमीपं प्रतियुत इत्यनेन मन्त्रेण परित्यजेत्। उदकेषु स्थितो यो वरुणस्य पाशः स एष प्रतियुतः परित्यक्तः। परित्यज्य पृष्ठदेशमपश्यन्त एव प्रत्यागच्छेयुः। आगत्य "एधोऽसि, तेजोऽसि" इति द्वाभ्यामाहवनीये समिधावादध्यात्। हेऽग्न एधोऽसि अनया समिधाऽभिवृद्धोऽसि। अतस्त्वत्प्रसादाद्वयमप्येधिषीमहि समृद्धा भवेम। समिज्जन्यज्वालया तेजोऽसि अतो मयि तेजः स्थापय॥

अत्र विनियोगसंग्रहः—

"पत्न्याह्वानं प्रघास्येति प्रतिप्रस्थातृकर्म तत्।
स्वामी मो ष्वित्यनुब्रूयाद्यद्ग्राम इति दंपती॥
अक्रन्नित्यपि तावेव मन्त्राश्चत्वार ईरिताः॥ १॥" इति॥

अथ मीमांसा।

सप्तमाध्यायस्य प्रथमपादे चिन्तितम्—

"वैश्वदेवब्राह्मणस्यातिदेशो वादमात्रकः ( गः )।
सवादाङ्गविधिस्थो वा हविर्विध्यन्वयाद्भवेत्॥
अर्थवादैकनिष्ठोऽसौ मैवमङ्गविधेरपि।
समानः सोऽन्वयोऽङ्गानां विधिरप्यतिदिश्यताम्॥"

चातुर्मास्येषु वैश्वदेववरुणप्रघाससाकमेधशुनासीरीयनामकानि चत्वारि पर्वाणि। तत्र वैश्वदेवेऽष्टौ हवींषि विहितानि—"आग्नेयमष्टाकपालं निर्वपति सौम्यं चरुꣳ सावित्रं द्वादशकपालꣳ सारस्वतं चरुं पौष्णं चरुं मारुतꣳ सप्तकपालं वैश्वदेवीमामिक्षां द्यावापृथिव्यमेककपालम्" इति। तेषां हविषां ब्राह्मणेऽर्थवाद आम्नातः—"वार्त्रघ्नानि वा एतानि हवींषि" इति। अङ्गविधयोऽपि तत्राऽऽम्नाताः—"त्रेधा संनद्धं बर्हिर्भवति, त्रेधा संनद्ध इध्मः, नव प्रयाजा इज्यन्ते, नवानूयाजाः" इति। एवं स्थिते वरुणप्रघासेषु पूर्वोक्तान्याग्नेयादीनि पञ्च हवींषि विधाय तदीयं पूर्वोदाहृतं ब्राह्मणमेतेषु पञ्चस्वतिदिशति—"एतद्ब्राह्मणान्येव पञ्च हवींषि, यद्ब्राह्मणानीतराणि" इति। तत्रार्थवादमात्रस्यातिदेशो न्याय्यः, तस्य हविर्विधिभिः सह स्तुत्या(त्य)स्तावकरूपेणान्वयसंभवादङ्गविधिना च तदसंभवादिति चेन्मैवम्। उपकार्योपकारकभावेन हविषामङ्गानां चान्वयात्। तस्मादर्थवादसहितानामङ्गविधीनामतिदेशः॥

( राजसूयविषयस्य चातुर्मास्यसंबन्धिवरुणप्रघासाख्यद्वितीयपर्वणोऽभिधानम् )

तत्रैवान्यच्चिन्तितम्—

" श्रुतमेककपालस्य ब्राह्मणस्यातिदेशनम् ।
तत्पूर्ववत्तथैन्द्राग्न एतद्ब्राह्मण इत्यपि ॥ "

एककपालब्राह्मणं वैश्वदेववरुणप्रघासेषु पठितम् । ऐन्द्राग्नब्राह्मणं वरुणप्रघासेष्वाम्नातम् । एवं स्थिते साकमेधेषु विहितयोरेककपालैन्द्राग्नयोर्ब्राह्मणातिदेश आम्नायते—" एतद्ब्राह्मण ऐन्द्राग्न एतद्ब्राह्मण एककपालो यद्ब्राह्मण इतरश्चेतरश्च " इति । तत्रोभयत्र पूर्वन्यायेनार्थवादविधिसहिताङ्गकाण्डस्य सर्वत्रा(स्या)तिदेशः । पूर्वन्यायस्य विषयव्याप्तये वक्ष्यमाणोदाहरणस्मारणाय वा(बीज)कथनम् ।

एकादशाध्यायस्य द्वितीयपादे चिन्तितम्—

" मारुत्याः सार्धमष्टाभिरङ्गैस्तन्त्रं भिदाऽथ वा ।
प्रयोगैकत्वतस्तन्त्रं भेदो देशस्य भेदतः ॥ "

वरुणप्रघासेष्वाग्नेयादीनि नव हवींषि विहितानि । तेषु मारुतीमामिक्षां प्रतिप्रस्थाता दक्षिणे विहारेऽनुतिष्ठति । इतराणि त्वष्टावध्वर्युरुत्तरे विहारेऽनुतिष्ठति । तेषामष्टानां प्रयोगैक्यात्तन्त्रेणाङ्गान्युभयवादिसंमतानि । तथा तान्येव मारुत्या अपीत्यत्रापि तन्त्रं प्राप्तम् । कुतः । वरुणप्रघासान्तःपातित्वेन प्रयोगैक्यात् । नन्वत्र विहारभेद आम्नातः " पृथगग्नी प्रणयतः, पृथग्वेदी कुरुतः " इति । सोऽयं पृथगनुष्ठानाभावे व्यर्थः स्यान्नैवम् । हविरासादनमात्रे तद्भेदोपयोगात् । " अष्टावध्वर्युरुत्तरे विहारे हवीꣳष्यासादयति मारुतीमेव प्रतिप्रस्थाता दक्षिणस्मिन् " इति तद्विधानात् । तस्मात्तन्त्रमिति प्राप्ते ब्रूमः—देशभेदात्प्रयोगभेदे सत्यङ्गानुष्ठानमपि भिद्यते । न च तस्य हविरासादनमात्रार्थता युक्ता । तदासादनस्य दृष्टहोमार्थत्वे सति तत्परित्यागेनादृष्टार्थत्वकल्पनाप्रसङ्गात् । न च प्रयोगभेदेनैवाऽऽसादनभेदस्यापि सिद्धौ वचनमनर्थकं स्यादिति वाच्यम् । अव्यवस्थानात्प्रतिप्रयोगप्राप्तौ तद्व्यवस्थार्थत्वात् । तस्माद्भेदेनाङ्गानुष्ठानम् ।

तत्रैवान्यच्चिन्तितम्—

" कर्तृभेदो न वा तत्र भेदः स्यादङ्गभेदवत् ।
पञ्चर्त्विग्वचनान्नैवं द्वयोरुक्त्या व्यवस्थितिः ॥ "

तत्र पूर्वोक्तविषये प्रयोगभेदादाघाराद्यङ्गभेद इव होतृब्रह्मादीनां कर्तॄणामपि भेद इति चेन्नैवम् । वाचनिकपञ्चसंख्याविरोधात् । अध्वर्युप्रतिप्रस्थातृ-

१ ख. घ. ङ. च. °म्नीन्प्रण° ।

होतृब्रह्माग्नीध्राः पञ्चर्त्विजश्चातुर्मास्येषु विहिताः—“ चातुर्मास्यानां यज्ञक्रतूनां पञ्चर्त्विजः ” इति । यद्याग्नेयाद्यष्टके मारुत्यां च होत्रादिभेदः स्यात्तदा पञ्चसंख्या बाध्येत । ननु पञ्चसंख्यासिद्ध्यर्थमाग्नेयाद्यष्टके प्रतिप्रस्थाता प्राप्नुयात्, मारुत्यां चाध्वर्युः प्राप्त इति चेत् । सत्यम् । प्राप्तावेव तावुभावुभयत्र । व्यवस्था तु वचनाद्भविष्यति । तत्र वचनं पूर्वत्रोदाहृतम् । तस्मान्नास्ति कर्तृभेदः ।

तत्रैवान्यच्चिन्तितम्—

“ तत्रैव पत्नीसंयाजादौ तन्त्रं भिन्नताऽथ वा ।
तन्त्रमग्न्यैक्यतो मैवं कर्तृभेदानिवारणात् ॥ ”

तत्रैवाऽऽग्नेयाद्यष्टके मारुत्यां च गार्हपत्ये होतव्येषु पत्नीसंयाजादिषु तन्त्रं युक्तम् । कुतः । गार्हपत्यैकत्वात् । नह्याहवनीयवद्दक्षिणे विहारे गार्हपत्यः पृथगस्ति । तस्मात्तन्त्रमिति प्राप्ते ब्रूमः—न तावत्पूर्वोक्तः कर्तृभेदो निवारयितुं शक्यते । तथा सत्यध्वर्युणा हुताः पत्नीसंयाजाः प्रतिप्रस्थातृकर्तृकार्यां मारुत्यां कथमुपकुर्युः । तस्मादध्वर्युः प्रतिप्रस्थाता च गार्हपत्ये पृथक्पत्नीसंयाजाञ्जुहुयाताम् ।

द्वादशाध्यायस्य प्रथमपादे चिन्तितम्—

“ विहारभेदे निर्वापमन्त्रादेस्तन्त्रता न वा ।
तन्त्रं द्वयोः स्मृतेः सिद्धेरुत्तमोक्त्या पृथग्भवेत् ॥ ”

वरुणप्रघासेष्वध्वर्युप्रतिप्रस्थात्रोर्विहारभेदेऽपि मन्त्रेष्वेकेनैव पठ्यमानेषु तयोरर्थस्मृतिसिद्धौ तन्त्रमिति चेन्न । निर्वपामीत्युत्तमपुरुषार्थस्य पाठमन्तरेण स्मृत्यभावात् । तस्मादुभयोः पृथक्पाठः ।

सप्तमाध्यायस्य तृतीयपादे चिन्तितम्—

“ निष्कासेन तुषैश्चावभृथं यन्तीत्यनूद्यते ।
नीरोत्सेकः कर्मणो वा विधिः सौमिके[१]धर्मणः[२][३] ॥
यो दर्शपूर्णमासाभ्यां वारुण्यां चोदनोद्गतः ।
व्युत्सेकोऽनूद्यतामेष मैवं कर्माणि सौमिके ॥
मुख्योऽवभृथशब्दोऽतस्तत्सादृश्यविवक्षया ।
धर्माननतिदिशन्कर्म विधत्ते धर्मसंयुतम् ॥ ”

वरुणप्रघासेषु श्रूयते—“ वारुण्या निष्कासेन तुषैश्चावभृथमवयन्ति ” इति ।

१ ख. च. °र्थपा° । २ क. °कर्म° । ३ ख. घ. ङ. च. °धर्मिणः ।

( राजसूयविषयस्य चातुर्मास्यसंबन्धिवरुणप्रघासाख्यद्वितीयपर्वणोऽभिधानम् )

निष्कास आमिक्षाया लेपः। प्राच्यां दिशि देवा ऋत्विजो मार्जयन्तामित्यादिभिर्मन्त्रैर्दर्शपूर्णमासयोर्दिक्षु सर्वास्वापो विविधमुत्सिच्यन्ते। सोऽयं व्युत्सेको वारुण्यामिक्षायामेव चोदकप्राप्तोऽनूद्यते। अस्ति हि व्युत्सेकस्याप्यवभृथत्वम्। "एष वै दर्शपूर्णमासयोरवभृथः" इति श्रुतत्वादिति प्राप्ते ब्रूमः—सौमिके कर्मण्यवभृथशब्दो मुख्यः। तस्य शब्दस्योद्भिदादिवद्विधेयक्रियासामानाधिकरण्येन नामधेयत्वात्तत्रैव वैदिकप्रयोगबाहुल्याच्च। व्युत्सेके त्वप्संबन्धादुपचर्यते। नहि सौमिककर्मणीवापां व्युत्सेकेऽवभृथभावनामंशत्रयवर्तीं पश्यामः। येन तत्र मुख्यत्वमाशङ्क्येत। तस्मात्सौमिककर्मवाचिनमवभृथशब्दं वरुणप्रघासप्रकरणे प्रयुञ्जान आम्नायो मासाग्निहोत्रन्यायेन सौमिकधर्मानतिदिशन्कर्मान्तरं तद्धर्मसंयुक्तं विधत्ते। न च विपर्ययेणात्रैव मुख्योऽवभृथोऽस्त्विति शङ्कनीयम्। अपेक्षितस्य कर्मकलापस्यात्राभावात्। तस्मात्सौमिकधर्मोपेतकर्मान्तरविधिः।

तत्रैवान्यच्चिन्तितम्—

" तत्र द्रव्यं पुरोडाशस्तुषनिष्कासकावुत।
प्राप्तोऽवभृथशब्देन पुरोडाशोऽतिदेशतः॥
तुषनिष्कासयोरत्र साक्षात्कृतोपदेशतः।
अतिदेशप्रापितस्य पुरोडाशस्य बाधनम्॥ "

तत्र पूर्वोक्ते कर्मान्तरे धर्मातिदेशकेनावभृथशब्देन पुरोडाशोऽतिदिश्यते। अतिदेशश्चोपदेशाद्दुर्बलः। तस्मात्तुषनिष्कासाभ्यां पुरोडाशो बाध्यते।

एकादशाध्यायस्य द्वितीयपादे चिन्तितम्—

" निष्कासावभृथे विप्रकर्षोऽथ प्रतिपादनम्।
उतार्थकर्म पशुवदाद्योऽवभृथशब्दतः॥
कर्मान्तरं तदाऽपि स्यात्प्रतिपत्तिः प्रयाजवत्।
प्राधान्यायार्थकर्म स्यात्तच्चावभृथधर्मकम्॥ "

चातुर्मास्यगतेषु [ वरुणप्रघासेषु ] वारुणीमामिक्षां प्रकृत्येदमाम्नायते—"वारुण्या निष्कासेन तुषैश्चावभृथमवयन्ति" इति। अत्रायं प्रयोगप्रकारः—वरुणप्रघासेषु नव हवींषि। तेष्वष्टमं हविर्वारुण्यामिक्षा। नवमं हविः काय एककपालः। वारुण्या(णा)मिक्षायां यवपिष्टनिर्मितं मेषमवदधाति[1]। तत आमिक्षासंयुक्तं सर्वमवदाय हुत्वा तत एककपालेन प्रचर्य भाण्डलिप्तेन वारुण्या(णा)-

---

१ क. ख. घ. ङ. च. °दध्यादिति।

( राजसूयविषयस्य चातुर्मास्यसंबन्धिसाकमेधाख्यतृतीयपर्वणोऽभिधानम् )

मिक्षाया निष्कासेन तुषैश्चावभृथमनुतिष्ठन्तीति। तत्र संशयः। किं वारुण्या(णा)-मिक्षाया एकमंशं यवमयमेषसहितं पूर्वं प्रदाय पश्चादेककपालप्रचारादूर्ध्वं निष्कासरूपेणांशान्तरेण तुषैश्च प्रचरितव्यमित्येवं प्रचारस्य विप्रकर्षः, उत कर्मान्तरम्। तत्रापि किं प्रतिपत्तिकर्माऽऽहोस्विदर्थकर्मेति। तत्र विप्रकर्ष इति तावत्प्राप्तम्। कुतः। पशौ तथा दृष्टत्वात्। प्रातःसवने वपया प्रचर्य तृतीयसवने हृदयाद्यङ्गैः प्रचार इति सवनीयपशौ यथा प्रचारविप्रकर्षस्तद्वदत्रापीत्याद्यः पक्षः। तथा सत्यवभृथशब्दवैयर्थ्यप्रसङ्गात्कर्मान्तरमिति पक्षान्तरम्। तदाऽऽमिक्षाहविःशेषस्य निष्कासस्यान्यस्मिन्कर्मणि हविष्ट्वायोगात्प्रयाजशेष-न्यायेनेदं प्रतिपत्तिः स्यात्। यथा प्रयाजशेषेण हवींष्यभिघारयतीत्यत्र तच्छेषं संस्कर्तुमभिघारणमेवमत्रापि निष्कासः संस्क्रियत इति प्राप्ते ब्रूमः— तस्मिन्पक्षे निष्कासस्यैव संस्कार्यद्रव्यत्वेन प्राधान्यान्निष्कासमिति विभक्ति-व्यत्ययः स्यात्। अतोऽवभृथस्य प्राधान्यादर्थकर्मत्वमेव द्रष्टव्यम्। यदि चातुर्मास्येषु नावभृथस्तदा तद्धर्मातिदेशाय तन्नामनिर्देशोऽस्तु। तस्य तदीय-द्रव्यशेषस्यापि कर्मान्तरे विनियोगो वाचनिकः। तस्मादर्थकर्म॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-तैत्तिरीयसंहिताभाष्ये प्रथमकाण्डेऽष्टमप्रपाठके तृतीयोऽनुवाकः॥ ३॥

---

( अथ प्रथमाष्टकेऽष्टमप्रपाठके चतुर्थोऽनुवाकः। )

---

अग्नयेऽनीकवते पुरोडाशमष्टाकपालं निर्व-पति साकꣳ सूर्येणोद्यता मरुद्भ्यः सांतपनेभ्यो मध्यंदिने चरुं मरुद्भ्यो गृहमेधिभ्यः सर्वासां दुग्धे सायं चरुं पूर्णा दर्वि परा पत सुपूर्णा पुनरा पत। वस्नेव वि क्रीणावहा इषमूर्जꣳ शतक्रतो। देहि मे ददामि ते नि मे धेहि नि ते दधे। निहारमिन्नि मे हरा निहारम् (१)

नि हंरामि ते । मरुद्भ्यः क्रीडिभ्यः पुरोडाशꣳ सप्तकपालं निर्वंपति साकꣳ सूर्येणोद्यताऽऽग्नेयमष्टाकंपालं निर्वंपति सौम्यं चरुꣳ सावित्रं द्वादंशकपालꣳ सारस्वतं चरुं पौष्णं चरुमैन्द्राग्नमेकांदशकपालमैन्द्रं चरुं वैश्वकर्मणमेकंकपालम् ( २ ) ॥

( हरा निहारं त्रिꣳ शच्चं । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टकेऽष्टमप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

( अथ प्रथमाष्टकेऽष्टमप्रपाठके चतुर्थोऽनुवाकः । )

---

अग्नये । अनीकवत इत्यनीक—वते । पुरोडाशम् । अष्टाकंपालमित्यष्टा—कपालम् । निरिति । वपति । साकम् । सूर्येण । उद्यतेत्युत्—यता । मरुद्भ्य इति मरुत्—भ्यः । सांतपनेभ्य इति सां—तपनेभ्यः । मध्यंदिने । चरुम् । मरुद्भ्य इति मरुत्—भ्यः । गृहमेधिभ्य इति गृहमेधि—भ्यः । सर्वासाम् । दुग्धे । सायम् । चरुम् । पूर्णा । दर्विं । परेति । पत । सुपूर्णेति सु—पूर्णा । पुनः । एति । पत । वस्नेव । इव । वीति । क्रीणावहै । इषम् । ऊर्जम् । शतक्रतो इति शत—क्रतो । देहि । मे । ददामि ।

ते । नीति॑ । मे । धे॒हि॒ । नीति॑ । ते॒ । द॒धे॒ । नि॒हा॒रमिति॑ नि—हा॒रम् । इ॒व॒ । नीति॑ । मे॒ । ह॒र॒ । नि॒हा॒रमिति॑ नि—हा॒रम् (१) । नीति॑ । ह॒रा॒मि॒ । ते॒ । म॒रुद्भ्य॒ इति॑ म॒रुत्—भ्यः॒ । क्री॒डिभ्य॒ इति॑ क्री॒डि—भ्यः॒ । पु॒रो॒डाश॑म् । स॒प्तक॑पाल॒मिति॑ स॒प्त—क॒पा॒ल॒म् । निरिति॑ । व॒प॒ति॒ । सा॒कम् । सूर्ये॑ण । उ॒द्यते॒त्युं॑त्—य॒ता । आ॒ग्ने॒यम् । अ॒ष्टाक॑पाल॒मित्य॒ष्टा—क॒पा॒ल॒म् । निरिति॑ । व॒प॒ति॒ । सौ॒म्यम् । च॒रुम् । सा॒वि॒त्रम् । द्वाद॑श॒कपाल॒मिति॒ द्वाद॑श—क॒पा॒ल॒म् । सा॒र॒स्व॒तम् । च॒रुम् । पौ॒ष्णम् । च॒रुम् । ऐ॒न्द्रा॒ग्नमित्यै॑न्द्र—अ॒ग्नम् । एका॑द॒शक॒पा॒ल॒मित्येका॑दश—क॒पा॒ल॒म् । ऐ॒न्द्रम् । च॒रुम् । वै॒श्व॒क॒र्म॒णमिति॑ वै॒श्व—क॒र्म॒णम् । एक॑कपाल॒मित्येक॑—क॒पा॒ल॒म् (२) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टकेऽष्टमप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

( अथ प्रथमकाण्डेऽष्टमप्रपाठके चतुर्थोऽनुवाकः । )

---

तृतीये वरुणप्रघासाख्यं द्वितीयं चातुर्मास्यपर्वोक्तम् । चतुर्थपञ्चमषष्ठेषु साकमेधाख्यं तृतीयं पर्वोच्यते । तच्च पर्व दिनद्वयेऽनुष्ठेयम् । तदाहाऽऽपस्तम्बः—ततश्चतुर्षु मासेषु पूर्वस्मिन्पर्वण्युपक्रम्य द्व्यहं साकमेधैर्यजत इति ।

---

१ क. घ. ङ. 'श्चतृषु मा' । च. 'श्चतसृषु मा' ।

( राजसूयविषयस्य चातुर्मास्यसंबन्धिसाकमेधाख्यतृतीयपर्वणोऽभिधानम् )

तत्र प्रथमदिने कर्तव्यानि त्रीणि हवींषि विधत्ते—

अग्नयेऽनीकवते पुरोडाशमष्टाकपालं निर्व-
पति साकꣳ सूर्येणोद्यता मरुद्भ्यः सांतप-
नेभ्यो मध्यंदिने चरुं मरुद्भ्यो गृहमेधिभ्यः
सर्वासां दुग्धे सायं चरुम्, इति।

अनीकवते सैन्यवते। उद्यता सूर्येण साकमित्युदयकालविधिः। सम्यक्तपनं संतपनं तत्संबन्धिनः सांतपना अनिष्टविनाशिन इत्यर्थः। मेधो यज्ञः, गृहं च मेधश्च तदुभयवन्तो गृहमेधिन उभयपालका इत्यर्थः। सर्वासां यजमानस्य यावत्यो गावः सन्ति तावतीनाम् ॥

विहितास्विष्टिषु प्रथमेष्टिदेवतागुणं प्रशंसति—

"देवासुराः संयत्ता आसन्। सोऽग्निरब्रवीत्। ममेयमनीकवती तनूः। तां प्रीणीत। अथासुरानभिभविष्यथेति। ते देवा अग्नयेऽनीकवते पुरोडाशमष्टाकपालं निरवपन्। सोऽग्निरनीकवान्त्स्वेन भागधेयेन प्रीतः। चतुर्धाऽनीकान्यजनयत। ततो देवा अभवन्। पराऽसुराः (१)। यदग्नयेऽनीकवते पुरोडाशमष्टाकपालं निर्वपति। अग्निमेवानीकवन्तꣳ स्वेन भागधेयेन प्रीणाति। सोऽग्निरनीकवान्त्स्वेन भागधेयेन प्रीतः। चतुर्धाऽनीकानि जनयते।" [ब्रा० का० १ प्र० ६ अ० ६] इति।

चतसृष्वपि दिक्ष्वसुरानवरोद्धुं चतुर्विधानि सैन्यानि ॥

सूर्योदयकालं प्रशंसति—

"असौ वा आदित्योऽग्निरनीकवान्। तस्य रश्मयोऽनीकानि। साकꣳ सूर्येणोद्यता निर्वपति। साक्षादेवास्मा अनीकानि जनयति।" [ब्रा० का० १ प्र० ६ अ० ६] इति।

उष्णत्वादादित्यस्याग्नित्वम्। उत्साहोपेतयोद्धृवत्सर्वतस्त्वरया प्रसराद्रश्मीनामनीकत्वम् ॥

द्वितीयाया इष्टेर्देवताया गुणं प्रशंसति—

"तेऽसुराः पराजिता यन्तः। द्यावापृथिवी उपाश्रयन् (२)। ते देवा मरुद्भ्यः सांतपनेभ्यश्चरुं निरवपन्। तान्द्यावापृथिवीभ्यामेवोभयतः समतपन्। यन्मरुद्भ्यः सांतपनेभ्यश्चरुं निर्वपति। द्यावापृथिवीभ्यामेव तदुभयतो यजमानो भ्रातृव्यान्त्संतपति।" [ब्रा० का० १ प्र० ६ अ० ६] इति।

तानसुरान्द्यावापृथिवीभ्यामेव कृत्स्नयोरपि द्यावापृथिव्योरुभयतोऽसुराणामधस्ताच्चोपरिष्टाच्च समतपन्महाराद्युपद्रवेण संतापितवन्तः ॥

कालं प्रशंसति—

"मध्यंदिने निर्वपति। तर्हि हि तेक्ष्णिष्ठं तपति।" [ ब्रा० का० १ प्र० ६ अ० ६ ] इति।

तर्हि मध्याह्नकाले तेक्ष्णिष्ठमतिशयेन तीक्ष्णं यथा भवति तथा सूर्यस्तपति, हि प्रसिद्धमेतत् ॥

चरुं प्रशंसति—

"चरुर्भवति। सर्वत एवैनान्त्संतपति।" [ब्रा०का०१ प्र०६अ०६]इति।

चरुपाकभाण्डस्य सर्वतस्तप्यमानत्वाच्छत्रूणामपि सर्वतः संतापः ॥

तृतीयेष्टेर्देवताविशेषणं प्रशंसति—

"ते देवाः श्वो विजयिनः सन्तः। सर्वासां दुग्धे गृहमेधीयं चरुं निरवपन् (३)। आशिता एवाद्योपवसाम। कस्य वा हेदम्। कस्य वा श्वो भवितेति। स शृतोऽभवत्। तस्याहुतस्य नाऽऽश्नन्। नहि देवा अहुतस्याश्नन्ति। तेऽब्रुवन्। कस्मा इमꣳ होष्याम इति। मरुद्भ्यो गृहमेधिभ्य इत्यब्रुवन्। तं मरुद्भ्यो गृहमेधिभ्योऽजुहवुः ( ४ )। ततो देवा अभवन्। पराऽसुराः। यस्यैवं विदुषो मरुद्भ्यो गृहमेधिभ्यो गृहे जुह्वति। भवत्यात्मना। पराऽस्य भ्रातृव्यो भवति।" [ ब्रा० का० १ प्र० ६ अ० ६ ] इति।

ते देवा अस्मिन्दिने प्रथमेष्ट्या सैन्यानि संपाद्य द्वितीयेष्ट्या विरोधिनोऽसुरान्सर्वतः संतप्य पुनः परेद्युरपि जेष्याम इत्यभिमेत्य गृहमेधीयं निरुप्येत्थं विचारितवन्तः—इदं हविरद्य कस्य वा भवति कस्य वा श्वो भविष्यतीति न ज्ञायते, तस्माद्वयं सह भुक्तवन्त एवाग्निसमीपे वसामेति। एतावति विचारकाले चरुः पक्वोऽभूत्। तदानीं देवा अहुतत्वात्तं चरुं नैवाशितवन्तः। यस्माद्देवाः क्वाप्यहुतं नाश्नन्ति तस्माद्युक्तमेवैतत्। ततस्ते देवाः परस्परं विचारितवन्तः। किमिति, कस्मै देवायेमं चरुं होष्याम इति। ततो निश्चित्य गृहमेधिभ्यो हुत्वा विजयं प्राप्ता असुराश्च पराभूताः ॥

अस्मिन्कर्मण्याज्यभागौ यजतीत्यादिना कानिचिदङ्गानि विधास्यन्ते। तत्र यावदुक्ताङ्गोपेतमपूर्वमिदं कर्म न तु दर्शपूर्णमासविकृतिरिति जैमिनिर्विचारितवान्। ततोऽर्थप्राप्तः सामिधेन्याद्यभावः। तमिमं विस्पष्टयितुमनुवदति—

"यद्वै यज्ञस्य पाकत्रा क्रियते। पशव्यं तत्। पाकत्रा वा एतत्क्रियते। यन्नेध्माबर्हिर्भवति। न सामिधेनीरन्वाह (५)। न प्रयाजा इज्यन्ते। नानूयाजाः। य एवं वेद। पशुमान्भवति।" [ ब्रा० का० १ प्र० ६ अ० ६ ] इति।

यज्ञस्य संबन्धि यदनुष्ठानं पाकत्रा पाकेषु पाकयज्ञवदित्यर्थः। तस्य पशव्यत्वं युक्तम्। "पाकयज्ञं वा अन्वाहिताग्नेः पशव उपतिष्ठन्ते" इति श्रुतत्वात्। यस्मादत्रेध्माबर्हिरादयो न सन्ति तस्मादेतत्कर्म पाकयज्ञवदेव क्रियते॥

प्राच्यमङ्गं विधत्ते—

"आज्यभागौ यजति। यज्ञस्यैव चक्षुषी नान्तरेति।" [ब्रा० का० १ प्र० ६ अ० ६ ] इति॥

यागवेलायामुद्देश्यां देवतां प्रशंसति—

"मरुतो गृहमेधिनो यजति। भागधेयेनैवैनान्त्समर्धयति।" [ ब्रा० का० १ प्र० ६ अ० ६ ] इति।

उदीच्यमङ्गं विधत्ते—

"अग्निꣳ स्विष्टकृतं यजति प्रतिष्ठित्यै।" [ ब्रा० का० १ प्र० ६ अ० ६ ] इति॥

अङ्गान्तरं विधत्ते—

"इडान्तो भवति। पशवो वा इडा। पशुष्वेवोपरिष्टात्प्रतितिष्ठति (६)।" [ ब्रा० का० १ प्र० ६ अ० ६ ] इति।

अर्थसिद्धं चतुर्धाकरणाद्युदीच्याङ्गान्तराभावं द्योतयितुमन्तशब्दः॥

तदेवमनुब्राह्मणगतेनैकेनानुवाकेन पूर्वदिनेऽनुष्ठेया मुख्यब्राह्मणविहितास्तिस्र इष्टयो व्याख्याताः। अनुवाकान्तरेण द्वितीयदिने कर्तव्यत्वेन विहिता इष्टयो व्याख्यातव्याः। तत्राऽऽदौ तावद्गृहमेधीयशेषभूतं किंचिदङ्गं विधातुं प्रस्तौति—

"यत्पत्नी गृहमेधीयस्याश्नीयात्। गृहमेध्येव स्यात्। वि त्वस्य यज्ञ ऋध्येत। यन्नाश्नीयात्। अगृहमेधी स्यात्। नास्य यज्ञो व्यृध्येत।" [ ब्रा० का० १ प्र० ६ अ० ७ ] इति।

यदि पत्नी गृहमेधीयस्य चरोर्भागं भुञ्जीत तदा यजमानो गृहेण यज्ञेन चोपेतो भवति। किं त्वस्मिन्पक्षे यजमानस्य यज्ञो व्यृद्धो भवेत्। अभोजनपक्षे तु व्यृद्धत्वदोषो न भवति। किं तु गृहमेधित्वाभावः॥

विधत्ते—

" प्रतिवेशं पचेयुः। तस्याश्नीयात्। गृहमेध्येव भवति। नास्य यज्ञो व्यृध्यते (१)।" [ ब्रा० का० १ प्र० ६ अ० ७ ] इति।

प्रातिस्विकत्वेन पत्नीं विशतीति प्रतिवेशः पत्न्यर्थ ओदनस्तं दक्षिणाग्नौ पक्तारः पचेयुः। तथा चाऽऽपस्तम्बः—" दक्षिणाग्नौ पत्न्याः प्रतिवेशमोदनं पचति " इति। पत्नी तमोदनमश्नीयात्ततो नोक्तदोषद्वयम्। अभोजनाभावाद्गृहमेधीयभोजनाभावाच्च॥

भोजनादीन्विधातुं प्रस्तौति—

" ते देवा गृहमेधीयेनेष्ट्वा। आशिता अभवन्। आञ्जताभ्यञ्जत। अनु वत्सानवासयन्। तेभ्योऽसुराः क्षुधं प्राहिण्वन्। सा देवेषु लोकमवित्त्वा। असुरान्पुनरगच्छत्।" [ ब्रा० का० १ प्र० ६ अ० ७ ] इति।

आशिता भुक्तवन्तः। आञ्जत नेत्रयोरञ्जनं प्रक्षिप्तवन्तः। अभ्यञ्जताभ्यङ्गं कृतवन्तः। धेनूरनु वत्सानवासयन्स्तनपानार्थमवासृजन्। तदानीमसुरा देवानां समीपे क्षुधं प्रेरितवन्तः। सा च क्षुत्तेषु तृप्तेषु देवेषु स्थानमलब्ध्वा पुनरप्यसुरानेव प्राप्नोत्॥

विधत्ते—

" गृहमेधीयेनेष्ट्वा। आशिता भवन्ति। आञ्जतेऽभ्यञ्जते (२)। अनु वत्सान्वासयन्ति। भ्रातृव्यायैव तद्यजमानः क्षुधं प्रहिणोति।" [ ब्रा० का० १ प्र० ६ अ० ७ ] इति॥

तदेतदभिप्रेत्य पूर्वमाशिता एवाद्योपवसामेत्यादिर्देवविचार उपा(दा)हृतः। अत्र गृहमेधीयसंनिधौ द्वौ मन्त्रावाम्नातौ। तयोर्विनियोगमापस्तम्ब आह— " शरनिष्कासस्य दर्वीं पूरयित्वा वृषभमाहूय तस्य रवते पूर्णा दर्वि परा पतेत्यनुद्रुत्योत्तरया गार्हपत्ये जुहुयाद्यदृषभो न रुयाद्ब्रह्मा ब्रूयाज्जुहुधीति " इति। पच्यमाने चरौ क्षीरमण्डवद्घनीभूतो योऽश उपरि तिष्ठति सोऽयं शरनिष्कासः। तस्य रवते वृषभस्य शब्दे निष्पन्ने सति।

प्रथममन्त्रपाठस्तु—

पूर्णा दर्वि परा पत सुपूर्णा पुनरा पत।
वस्नेव वि क्रीणावहा इषमूर्जꣳ शतक्रतो।, इति।

हे दर्वि त्वं शरनिष्कासेन पूर्णा सती परापतेन्द्रं प्रति गच्छ। तत्प्रसादाद्ध-

१ घ. ङ. च. 'द्यदृष'।

नेन तज्जन्यबलेन सुपूर्णा सती पुनरस्मान्प्रत्यागच्छ । हे शतक्रतो, आवां वस्नेव विक्रीणावहै । यथा लोके कश्चित्स्वकीयं धनं दत्त्वा तण्डुलादिकं क्रीणाति तद्वदहमिन्द्राय तुभ्यं शरानिष्कासं दत्त्वा त्वत्त इषमूर्जं च क्रीणामि। तदिदमुच्यते—वस्नेव वसुनेव धनेनेव विक्रीणावहा इति ॥

द्वितीयमन्त्रपाठस्तु—

देहि मे ददामि ते नि मे धेहि नि ते दधे।
निहारमिन्नि मे हरा निहारं नि हरामि ते।, इति।

हे इन्द्र मे यदपेक्षितं तत्त्वं देहि। तव यदपेक्षितं तदहं ददामि। दत्त्वा च त्वं मम समीपे निधेह्यवस्थापय। तव समीपेऽहमवस्थापयामि । तदुभयं सकृदेव न भवति किं तु निहारमित्पुनः पुनर्निर्हृत्यैव समानीयैव मे समीपे निहर नितरां स्थापय। अहमपि पुनः पुनर्निर्हृत्य ते समीपे स्थापयामि ॥

यथोक्तं निष्कासहोमं प्रस्तौति—

" ते देवा गृहमेधीयेनेष्ट्वा । इन्द्राय निष्कासं न्यदधुः । अस्मानेव श्व इन्द्रो निहितभाग उपावर्तितेति। तानिन्द्रो निहितभाग उपावर्तत। " [ ब्रा० का० १ प्र० ६ अ० ७ ] इति।

उपावर्तिता समीपमागमिष्यति। उपावर्तत समीपमागच्छत् ॥

विधत्ते—

" गृहमेधीयेनेष्ट्वा। इन्द्राय निष्कासं निदध्यात् । इन्द्र एवैनं निहितभाग उपावर्तते। " [ ब्रा० का० १ प्र० ६ अ० ७ ] इति ॥

होमाय प्राप्तमाहवनीयं वारयितुं विधत्ते—

" गार्हपत्ये जुहोति ( ३ )। भागधेयेनैवैनꣳ समर्धयति। " [ ब्रा०का०१ प्र० ६ अ० ७ ] इति ॥

यागकाले ध्वनिं कर्तुमृषभस्याऽऽह्वानं विधत्ते—

" ऋषभमाह्वयति। वषट्कार एवास्य सः। अथो इन्द्रियमेव तद्वीर्यं यजमानो भ्रातृव्यस्य वृङ्क्ते। " [ ब्रा० का० १ प्र० ६ अ०७ ] इति ॥

द्वितीयदिनेऽनुष्ठेयानि नव हवींषि विधत्ते—

मरुद्भ्यः क्रीडिभ्यः पुरोडाशꣳ सप्तकपालं
निर्वपति साकꣳ सूर्येणोद्यताऽऽग्नेयमष्टाकपालं
निर्वपति सौम्यं चरुꣳ सावित्रं द्वादशकपालꣳ

सारस्वतं चरुं पौष्णं चरुमैन्द्राग्नमेकादशक-
पालमैन्द्रं चरुं वैश्वकर्मणमेककपालम्॥, इति॥

आद्यस्य हविष उत्तरहविरष्टकस्य च कालभेदात्प्रयोगभेदो द्रष्टव्यः। क्रीडैषामस्तीति क्रीडिनस्तदेतत्क्रीडित्वं विशेषणम्॥

तस्य हविषः पाठप्राप्तं प्राथम्यं च(?)प्रशंसति—

"इन्द्रो वृत्रꣳ हत्वा। परां परावतमगच्छत्। अपाराधमिति मन्यमानः। सोऽब्रवीत्। क इदं वेदिष्यतीति। तेऽब्रुवन्मरुतो वरं वृणामहै (४)। अथ वयं वेदाम। अस्मभ्यमेव प्रथमꣳ हविर्निरुप्याता इति। त एनमभ्यक्रीडन्। तत्क्रीडिनां क्रीडित्वम्। यन्मरुद्भ्यः क्रीडिभ्यः प्रथमꣳ हविर्निरुप्यते विजित्यै।" [ब्रा० का० १ प्र० ६ अ० ७] इति।

परां परावतमत्यन्तदूरम्। अपाराधं द्रोहमकार्षम्। भीत्या पलायमानः स इन्द्रो मरुतां समीपे किंचिदब्रवीत्—वृत्रो मृतो न वेतीदं समीपे गत्वा को वेदिष्यतीति। ते च मरुतो वरे दत्ते वेदिष्याम इत्यब्रुवन्। इतरेभ्योऽग्न्यादिभ्यः प्रथमो निर्वापो वरः। ततस्ते मरुत एनं भूमौ पतितं वृत्रमधिरुह्य बहुविधेन नृत्येनाक्रीडन्। क्रीडित्वा च मृतोऽयमिति ज्ञातवन्तः। तस्मादेतेषां क्रीडित्वं विशेषणं संपन्नम्॥

निर्वापकालं प्रशंसति—

"साकꣳ सूर्येणोद्यता निर्वपति। एतस्मिन्वै लोक इन्द्रो वृत्रमहन्त्समृद्ध्यै।" [ब्रा० का० १ प्र० ६ अ० ७] इति।

एतस्मिन्नेव लोके सूर्योदयेनावलोक्यमानभूप्रदेशे॥

वैश्वदेवपर्वण्युक्तमाग्नेयादिपञ्चकप्रशंसकं वरुणप्रघासपर्वण्युक्तमैन्द्राग्नप्रशंसकं च ब्राह्मणमत्रातिदिशति—

"एतद्ब्राह्मणान्येव पञ्च हवीꣳषि। एतद्ब्राह्मण ऐन्द्राग्नः।" [ब्रा० का० १ प्र० ६ अ० ७] इति॥

चरोरैन्द्रत्वं प्रशंसति—

"अथैष ऐन्द्रश्चरुर्भवति। उद्धारं वा एतमिन्द्र उदहरत। वृत्रꣳ हत्वा। अन्यासु देवतास्वधि। यदेष ऐन्द्रश्चरुर्भवति। उद्धारमेव तं यजमान उद्धरते। अन्यासु प्रजास्वधि।" [ब्रा० का० १ प्र० ६ अ० ७] इति।

अन्यास्वग्न्यादिदेवतास्वधिकोऽयमित्येतमुद्धारमुत्कर्षाभिमानमुदहरतोत्पादितवान्॥

( राजसूयविषयस्य चातुर्मास्यसंबन्धिसाकमेधाख्यतृतीयपर्वणोऽभिधानम् )

विश्वकर्मरूपामन्त्यहविषो देवतां प्रशंसति—

" वैश्वकर्मण एककपालो भवति। विश्वान्येव तेन कर्माणि यजमानोऽवरुन्धे ( ९ )। " [ ब्रा० का० १ प्र० ६ अ० ७ ] इति ॥

अत्र विनियोगसंग्रहः—

" पूर्णेत्यनूच्य देहीति याज्यामध्वर्युरीरयेत् ॥ १ ॥ " [ इति। ]

अथ मीमांसा।

पञ्चमाध्यायस्य प्रथमपादे चिन्तितम्—

" साकमेधेष्टयस्तिस्रो द्व्यहे स्युः सद्य एव वा।
प्रातरादेर्द्वयोरह्नोः सत्त्वात्प्रकृतिवद्‌द्व्यहे ॥
साङ्गमुख्यानुरोधेन प्रातरादेर्विधानतः।
श्रौतं सद्यस्त्वमन्यत्तु चोदकात्तेन दुर्बलम् ॥ "

चातुर्मास्येषु साकमेधनामके तृतीये पर्वणि श्रूयते—" अग्नयेऽनीकवते पुरोडाशमष्टाकपालं निर्वपति साकꣳ सूर्येणोद्यता मरुद्भ्यः सांतपनेभ्यो मध्यंदिने चरुं मरुद्भ्यो गृहमेधिभ्यः सर्वासां दुग्धे सायं चरुम् " इति। ता एतास्तिस्र इष्टयो द्व्यहकालीना यथा प्रकृतौ पर्वण्यन्वाधानादिकं प्रतिपदीष्टिरिति द्व्यहकालीनत्वं तद्वत्। ननु प्रातर्मध्यंदिनसायंशब्दैरेकस्मिन्नेवाह्नि त्रयः कालास्तिसृणामिष्टीनां विहिताः। तन्न। द्वयोरप्यह्नोः [ प्रातरादिकालसद्भावात्। पूर्वेद्युः ] प्रातरादिकालेषु स्वकीयेषु तासामुपक्रमः। परेद्युः प्रातरादिषु ताः समापनीयाः। ततो द्व्यहकालीनतेति प्राप्ते ब्रूमः—तत्राग्नयेऽनीकवते प्रातरष्टाकपालं निर्वपतीति साङ्गं प्रधानं प्रातःकालीनतया विधीयते। प्रातःशब्दश्च स्वत एकमेव प्रातःकालमभिधाय पर्यवस्यति। प्रातरग्निहोत्रमित्यादौ तद्दर्शनात्। तस्मात्साङ्गस्य प्रधानस्यैकस्मिन्नेव प्रातःकाले विधानात्सद्यस्कालीनत्वं श्रौतं, चोदकेन त्वन्वाधानाद्यङ्गं पूर्वेद्युः प्रातरिति कल्प्यते। उपदेशश्चोदकाद्बलीयान्। तस्मादेकाहकालीना इष्टयो द्रष्टव्याः।

सप्तमाध्यायस्य प्रथमपादे चिन्तितम्—

" किं वैश्वदेविकादेककपालादातिदेशनम्।
साकमेधेषु वरुणप्रघासस्थादुताग्रिमः ॥
प्रकृतावर्थबाहुल्यादन्तिमः संनिधानतः।
ऐन्द्राग्नसाहचर्याच्च सार्थत्वमधिकत्वतः ॥ "

वैश्वदेवे द्यावापृथिव्य एककपालो वरुणप्रघासेषु काय एककपालस्तयोः

पृथग्ब्राह्मणमाम्नातम् । साकमेधेषु वैश्वकर्मण एककपालस्तस्मिन्वैश्वदेविकैककपालब्राह्मणमतिदेष्टव्यम् । कुतः । प्रकृतित्वेन तस्मिन्नुपदिश्यमानधर्मबाहुल्यात् । वारुणप्रघासिकस्य तद्विकृतित्वादल्पा एव धर्मविशेषा उपदिष्टाः शमीमय्यो हिरण्मय्यो वा स्रुचो भवन्तीत्यादयः । तत्र बह्वनुग्रहो न्याय्य इति प्राप्ते ब्रूमः—वारुणप्रघासिकब्राह्मणस्य प्रत्यासन्नत्वात्तस्यैवातिदेशो युक्तः । ऐन्द्राग्नब्राह्मणं तत्रत्यमेवातिदिश्यते । वैश्वदेवे तदभावात् । तत्साहचर्यादिदमपि तत्रत्यमेव । ननु प्रकृतिभावा( भूता )द्वैश्वदेविकैककपालादेर्वारुणप्रघासिकवत्साकमेधीयेऽपि चोदकेन धर्मातिदेशसिद्धौ ब्राह्मणातिदेशकं वाक्यमिदं व्यर्थमिति चेत् । न । हिरण्मयत्वाद्यधिकधर्मातिदेशायापेक्षितत्वात् । तस्माद्वारुणप्रघासिकैककपालब्राह्मणस्यैवातिदेशः ।

दशमाध्यायस्य सप्तमपादे चिन्तितम्—

“ गृहमेधीयके त्वाज्यभागावित्यनुवादगीः ।
स चोदकविधिर्वाऽर्थवादो वाऽधिककर्म वा ॥
परिसंख्योत संकोचश्चोदको[1]ऽन्यत्र वाऽत्र वा ।
अपूर्वं गृहमेधीयं स्याद्वाऽतो[2] लुप्तचोदकम् ॥
अनुवादः पुनः श्रुत्या द्वितीयः सार्थतावशात् ।
निर्वापवच्चोदकस्य लिङ्गत्वेन सहायता ॥
चोदनेनैव तत्सिद्धेरैष्टिकस्य प्रशंसनम् ।
विध्येकवाक्यता नास्ति तेनात्राङ्गान्तरे विधिः ॥
प्रत्यभिज्ञानतोऽङ्गस्य परिसंख्येतरस्य हि ।
दोषत्रयाच्चोदकस्य संकोचोऽङ्गान्तरेष्वतः ॥
व्यापारैक्याच्चोदकस्य स्वार्थे संहरणं भवेत् ।
वैरूप्याच्च निरर्थत्वादपूर्वं कर्म युज्यते ॥
आज्यभागेतिनाम्नोपकारक्लृप्तिस्मृतेरिदम् ।
नामत्वादि समं तस्माल्लुप्यते तेन चोदकः ॥ ”

“ मरुद्भ्यो गृहमेधिभ्यः सर्वासां दुग्धे सायमोदनम्[3][4] ” इति विहिते गृहमेधीये श्रूयते—“ आज्यभागौ यजति ” इति । अष्टधाऽत्र संशयः—चोदकप्राप्तयोराज्यभागयोरिह पुनः श्रवणादनुवादोऽयमित्याद्यः पक्षः । तथा सति वैयर्थ्यप्रसङ्गात्सार्थकत्वाय चोदकैतद्वाक्ययोर्मिलितयोरत्राऽऽज्यभाग-

१ क. °दकः । स । २ ख. च. °तोऽश्रुतचो° । ३ ख. °दनः ’ इ° । ४ घ. ङ. च. °न इ° ।

( राजसूयविषयस्य चातुर्मास्यसंबन्धिसाकमेधाख्यतृतीयपर्वणोऽभिधानम् )

विधायकत्वमभ्युपेतव्यम् । ओषधिद्रव्यनिर्वापादयो यथा प्रकृतिगताः सन्तो विकृतावपि श्रूयमाणाश्चोदकस्य लिङ्गं तथाऽऽज्यभागावपि लिङ्गत्वेन सहायभूतौ । ततो मिलितयोर्विधायकत्वमिति द्वितीयः पक्षः । गृहमेधीयविधिवाक्ये श्रुतस्यौदनस्यैवौषधिद्रव्यतया लिङ्गत्वसिद्धेर्नास्ति लिङ्गान्तरापेक्षा । तस्मात्प्रकृताविष्टौ श्रुतस्याऽऽज्यभागकर्मण इह पुनः श्रवणमर्थवादत्वेन तत्प्रशंसार्थमिति तृतीयः पक्षः । भिन्नप्रकरणे श्रुतस्य विध्येकवाक्यत्वायोगादर्थवादत्वमयुक्तम् । ततश्चोदकप्राप्तादाज्यभागादिकर्मणोऽधिकमाज्यभागरूपमङ्गान्तरमिह विधीयत इति चतुर्थः पक्षः । ऐष्टिकयोराज्यभागयोरिह प्रत्यभिज्ञानान्नाङ्गान्तरत्वं युक्तम् । तस्मादाज्यभागव्यतिरिक्तस्य प्रयाजाद्यङ्गस्य परिसंख्यानार्थमिदमाज्यभागश्रवणमिति पञ्चमः पक्षः । आज्यभागवाक्येन तद्विधिरूपः स्वार्थस्त्यज्येत प्रयाजादिनिषेधरूपोऽन्योऽर्थः परिगृह्येत चोदकप्राप्तं प्रयाजाद्यनुष्ठानं बाध्येतेतिदोषत्रयप्रसङ्गान्न परिसंख्या युक्ता । तेन प्रत्यक्षविधिरूपादस्मादाज्यभागवाक्यादानुमानिकचोदकवाक्यमाज्यभागव्यतिरिक्तप्रयाजाद्यङ्गेषु संकोचनीयमिति षष्ठः पक्षः । यदि चोदकस्य प्रत्यङ्गं पृथग्व्यापाराः स्युस्तदा प्रयाजाद्यङ्गगोचरैर्व्यापारैस्तेषामतिदेशः सिध्यति । आज्यभागगोचरस्यानेन प्रत्यक्षविधिना बाधितत्वान्न चोदकेनाऽऽज्यभागातिदेश इत्येवं संकोचो वर्णयितुं शक्यते । इह तु शब्दबुद्धिकर्मणां विरम्य व्यापाराभावेनैक एव चोदकस्य व्यापारः । तथा सति युगपदतिदेशोऽनतिदेशश्चेति विरुद्धधर्मत्वं प्रसज्येत । तस्मात्प्रयाजाद्यङ्गेषु संकोचो न युक्तः । तेन चोदकोऽत्राऽऽज्यभागकर्मणि संकोचनीयः । न चोक्तदोषापत्तिः । अस्य संकोचस्योपसंहाररूपत्वात् । आज्यभागयोरेव शक्तस्य चोदकस्य त्वज्ञातशक्तिज्ञापनमुपसंहारः । तथा सत्याज्यभागातिदेशव्यापृतस्य चोदकस्य को नामातिदेशतन्निवृत्तिरूपविरुद्धधर्मप्रसङ्गः । तत्राऽऽज्यभागकर्मणि चोदकावस्थापनमिति सप्तमः पक्षः । " पुरोडाशं चतुर्धा करोति " "आग्नेयं चतुर्धा करोति" इत्यनयोरुभयोरापि प्रत्यक्षवचनत्वेन सरूपत्वादस्तु तत्रोपसंहारः । इह तु प्रत्यक्षपरोक्षयोर्वचनचोदकयोर्विरूपत्वान्नासौ युक्तः । किं तु प्रत्यक्षवचनेनैवाऽऽज्यभागविधिसिद्धेश्चोदककल्पना निरर्थिका । ततस्तस्या उपसंहारो न युक्तः । तस्मादपूर्वो गृहमेधीयो न चोदकेनान्याङ्गानि गृह्णाति । इतिकर्तव्यताकाङ्क्षा तु प्रत्यक्षवचनेनैव पूर्यते । एवं सत्युक्तदोषाभावादयमष्टमः पक्षोऽभ्युपगन्तव्यः । ननु सांग्रहण्यामिष्टौ प्रत्यक्षवचनविहितैरामनहोमैः सह चोदका-

१क. ख. घ. च. 'वाक्यंऽशस्यौ' । ङ. 'वाक्यांशस्यौ' ।

तिदिष्टानामनूयाजानां समुच्चयोऽङ्गीकृतस्तद्वदत्रापि विधीयमानयोराज्यभागयोश्चोदकप्राप्तैः प्रयाजाद्यङ्गैः सर्वैः सह समुच्चयोऽस्तु । न । वैषम्यात् । प्रकृतावाज्यभागयोस्तूपकारः क्लृप्तः । सोऽत्र नामसाम्येन स्मर्यते । तस्मात्क्लृप्तोपकाराभ्यां विधीयमानाभ्यामाज्यभागाभ्यां निराकाङ्क्षो गृहमेधीयः । आमनहोमास्तु न क्लृप्तोपकारा इति तैः सांग्रहण्या अङ्गाकाङ्क्षा न पूर्यते । तत्र क्लृप्तोपकारैरनूयाजाद्यङ्गैश्चोदकेन सहातिदिष्टैः पूर्यते । ततो विधिवैयर्थ्यपरिहारायाऽऽमनहोमेषूपकारे क्लृप्ते सति तस्मिन्प्रवर्तमानः प्रयोगवचनः समुच्चित्यानुष्ठापयति । ततो वैषम्यात्क्लृप्तोपकाराज्यभागविधायकेनानेन प्रत्यक्षवचनेन गृहमेधीयचोदको लुप्यते । तस्मादविकृतिरूपं साङ्गमपूर्वं कर्मात्र विधीयत इति सिद्धान्तः ।

तत्रैवान्यच्चिन्तितम्—

“ तत्रान्यदङ्गं नो कार्यं कार्यं वाऽन्यानपेक्षणात् ।
न कार्यं विहितत्वेन कार्यं स्विष्टकृदादिकम् ॥ ”

तत्र गृहमेधीय आज्यभागाभ्यामेव निराकाङ्क्षत्वादन्यत्स्विष्टकृदादिकं न कार्यमिति चेत् । मैवम् । आज्यभागवद्विहितत्वात् । “ यदग्नये स्विष्टकृते समवद्यति ” “ इडामुपह्वयते ” इति विहितम् । तस्माद्यावदुक्तं कर्तव्यम् ।

तत्रैवान्यच्चिन्तितम्—

“ तत्रैव परिसंख्यात्वे प्राशित्राद्यस्ति वा न तत् ।
अस्तीडादर्शनान्मैवं तदुक्त्याऽस्त्वत्र नेतरत् ॥ ”

गृहमेधीये स्विष्टकृत्याज्यभागवदष्टधा संशयं हृदि निधाय परिसंख्यार्थे पञ्चमं पक्षमभ्युपेत्येयं कृत्वाचिन्ताऽवतारिता । तत्र प्राशित्रादिभक्षणं न परिसंख्यातं किं तु तदस्ति । कुतः । भक्षणाद्यर्थस्येडोपाह्वानस्य तत्र दर्शनादिति प्राप्ते ब्रूमः—अत्र गृहमेधीये तादिडाभक्षणं वचनबलेनास्तु । स्विष्टकृद्वाक्यप्रापितस्य परिसंख्यातस्य वचनेन निवारितत्वात् । इतरत्प्राशित्रादिभक्षणं परिसंख्यातत्वान्नास्ति ।

सप्तमाध्यायस्य तृतीयपादे चिन्तितम्—

“ सौमिकं प्राकृतं वा स्यात्तयोः प्रणयनं श्रुतम् ।
आद्योऽप्राप्तत्वतो मैत्रमनामत्वेन वाऽग्रिमः ॥ ”

---

१ ख. °मानैः प्र° । २ ख. °चनैः स° । ३ क. घ. ङ. च. °पिता प° ।

( राजसूयविषयस्य चातुर्मास्यसंबन्धिसाकमेधाख्यतृतीयपर्वणोऽभिधानम् )

चातुर्मास्येषु श्रूयते—"द्वयोः प्रणयति, तस्माद्द्वाभ्यां यन्ति" इति। अत्र सौमिकधर्मकमग्निप्रणयनं यत्तदेव ग्रहीतव्यम्। कुतः। सोमस्य चातुर्मास्यप्रकृतित्वाभावेन तदीयप्रणयनस्यात्र चोदकाप्राप्तस्य विध्यर्हत्वात्। दर्शपूर्णमासगतं त्वग्निप्रणयनं चोदकप्रापितत्वादविधेयम्। तस्मात्सौमिकस्य धर्मा अत्र प्रणयनशब्देनातिदिश्यन्त इति प्राप्ते ब्रूमः—नायं प्रणयनशब्दः सौमिकस्य प्रणयनकर्मणो नामधेयं, किं तु निर्मन्थ्यबर्हिरादिशब्दवल्लौकिक एव। ततो न धर्मातिदेशः। यदि प्राकृतप्रणयनस्य प्राप्तत्वाद्विधिवैयर्थ्यं तर्ह्यर्थवादसंबन्धाय तद्वाक्यमस्तु।

तत्रैवान्यच्चिन्तितम्—

"आद्यन्तयोर्मध्ययोर्वा पर्वणोस्तत्प्रसञ्जकात्।
आद्यन्तयोरूरुगत्या मध्ययोः पर्वणोर्भवेत्॥"

"तस्माद्द्वाभ्यां यन्ति" इत्यर्थवादेन संबन्धाय पुनर्विधिना यत्प्रकृतमग्निप्रणयनं चोदकप्राप्तमपि श्रूयत इत्युक्तं तद्वैश्वदेवशुनासीरीययोः पर्वणोर्भवितुमर्हति। कुतः। प्रसञ्जकात्। तथा हि—"न वैश्वदेव उत्तरवेदिमुपवपति, न शुनासीर्ये" इत्युत्तरवेदिप्रतिषेधस्तयोः पर्वणोर्वेदिं प्रसञ्जयति। अप्रसक्तप्रतिषेधायोगात्। उत्तरवेदिश्चाग्निप्रणयनार्था। तस्मादुत्तरवेदिप्रसक्तिद्वारेणाऽऽद्यन्तयोरिदमग्निप्रणयनमिति प्राप्ते ब्रूमः—"ऊरू वा एतौ यज्ञस्य, यद्वरुणप्रघासाः साकमेधश्च" इति गमनसाधनत्वमूरुत्वं मध्यमयोः पर्वणोरुपन्यस्तम्। तत्संनिधौ द्वयोः प्रणयन्तीतिचोदकप्राप्तमग्निप्रणयनमर्थवादार्थं पुनर्विधाय द्वाभ्यां यन्तीत्यर्थवादेनोरुत्वकल्पना युक्ता। द्वाभ्यां पर्वभ्यां गमनमुपन्यस्यते। तस्मान्मध्यमयोस्तत्प्रणयनम्। न चात्रोत्तरवेदेरभावात्प्रणयनाभाव इति शङ्कनीयम्। उपवपतीत्यनारभ्य श्रुतेन वाक्येनोत्तरवेद्युपवापस्य विहितत्वात्। सा चोत्तरवेदिराद्यन्तयोः पर्वणोर्निषेधान्मध्यमयोरवतिष्ठते। तस्माच्चोत्तरवेद्यां प्रणीतोऽग्निर्विधीयते। एतदर्थमेव हि सार्थवादं पुनर्विधानम्।

उक्तमधिकरणद्वयमेकीकृत्य वार्तिककारेण यो निर्णयोऽभिहितस्तं दर्शयति—

"अनामत्वाच्च वैयर्थ्यात्सौमिकं प्राकृतं च न।
अपूर्वं तत्प्रणयनं शाखान्तरसमोक्तिकम्॥"

---

१ क. °भ्यां प्रणयति ' इ°। २ क. °भ्यां प्रणयति ' इ°। ३ क. °भ्यां प्रणयतीत्य°।

आहवनीयादग्निं प्रणयत इति शाखान्तरे मध्यमयोर्नूतनं प्रणयनं विहितम्[1]। तेन समानवचनत्वादत्राप्यपूर्वं प्रणयनं विधत्ते ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये प्रथमकाण्डेऽष्टमप्रपाठके
चतुर्थोऽनुवाकः ॥ ४ ॥

---

( अथ प्रथमाष्टकेऽष्टमप्रपाठके पञ्चमोऽनुवाकः । )

---

सोमाय पितृमते पुरोडाशꣳ षट्कपालं निर्वपति पितृभ्यो बर्हिषद्भ्यो धानाः पितृभ्योऽग्निष्वात्तेभ्योऽभिवान्यायै दुग्धे मन्थमेतत्ते तत ये च त्वामन्वेतत्ते पितामह प्रपितामह ये च त्वामन्वत्र पितरो यथाभागं मन्दध्वꣳ सुसंदृशं त्वा वयं मघवन्मन्दिषीमहि । प्र नूनं पूर्णवन्धुरः स्तुतो यासि वशाꣳ अनु । योजा न्विन्द्र ते हरी ( १ ) । अक्षन्नमीमदन्त ह्यव प्रिया अधूषत । अस्तोषत स्वभानवो विप्रा नविष्ठया मती । योजा न्विन्द्र ते हरी । अक्षन्पितरोऽमीमदन्त पितरोऽतीतृपन्त पितरोऽमीमृजन्त पितरः । परेत पितरः सोम्या गम्भीरैः पथिभिः पूर्व्यैः । अथा पितॄन्त्सुविदत्राꣳ अपीत यमेन ये सधमादं मदन्ति ।

---

[1] क. विहितम् ।

मनो न्वा हुवामहे नाराश॑ꣳसेन स्तोमेन पितृणां च मन्मभिः। आ (२) न एतु मनः पुनः क्रत्वे दक्षाय जीवसे। ज्योक्च सूर्यं दृशे। पुनर्नः पितरो मनो ददातु दैव्यो जनः। जीवं व्रातꣳ सचेमहि। यदन्तरिक्षं पृथिवीमुत द्यां यन्मातरं पितरं वा जिहिꣳसिम। अग्निर्मा तस्मादेनसो गार्हपत्यः प्र मुञ्चतु दुरिता यानि चकृम करोतु मामनेनसम् (३)॥

( हरी मन्मभिरा चतुश्चत्वारिꣳशच्च। )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टकेऽष्टमप्रपाठके पञ्चमोऽनुवाकः॥ ५॥

---

( अथ प्रथमाष्टकेऽष्टमप्रपाठके पञ्चमोऽनुवाकः। )

---

सोमाय। पितृमत इति पितृ—मते। पुरोडाशम्। षट्कपालमिति षट्—कपालम्। निरिति। वपति। पितृभ्य इति पितृ—भ्यः। बर्हिषद्भ्य इति बर्हिषत्—भ्यः। धानाः। पितृभ्य इति पितृ—भ्यः। अग्निष्वात्तेभ्य इत्यग्नि—स्वात्तेभ्यः। अभिवान्यायाः इत्यभि—वान्यायै। दुग्धे। मन्थम्। एतत्। ते। तत। ये। च। त्वाम्। अन्विति। एतत्। ते।

पितामह । प्रपितामहेति प्र—पितामह । ये । च । त्वाम् । अन्विति । अत्र । पितरः । यथाभागमिति यथा—भागम् । मन्दध्वम् । सुसंदृशमिति सु—सं-दृशम् । त्वा । वयम् । मघवन्निति मघ—वन् । मन्दि-षीमहि । प्रेति । नूनम् । पूर्णवन्धुर इति पूर्ण—व-न्धुरः । स्तुतः । यासि । वशान् । अनु । योज । नु । इन्द्र । ते । हरी इति ( १ ) । अक्षन् । अमी-मदन्त । हि । अवेति । प्रियाः । अधूषत । अस्तो-षत । स्वभानव इति स्व—भानवः । विप्राः । नवि-ष्ठया । मती । योज । नु । इन्द्र । ते । हरी इति । अक्षन् । पितरः । अमीमदन्त । पितरः । अतीतृ-पन्त । पितरः । अमीमृजन्त । पितरः । परेति । इत । पितरः । सोम्याः । गम्भीरैः । पथिभिरिति पथि—भिः । पूर्व्यैः । अथ । पितॄन् । सुविदत्रा-निति सु—विदत्रान् । अपीति । इत । यमेन । ये । सधमादमिति सध—मादम् । मदन्ति । मनः । नु । एति । हुवामहे । नाराशंसेन । स्तोमेन । पितॄ-णाम् । च । मन्मभिरिति मन्म—भिः । एति (२) । नः । एतु । मनः । पुनः । क्रत्वे । दक्षाय । जीवसे । ज्योक् । च । सूर्यम् । दृशे । पुनः । नः । पितरः ।

(राजसूयविषयस्य चातुर्मास्यसंबन्धिसाकमेधाख्यतृतीयपर्वणोऽभिधानम्)

मनः। ददातु। दैव्यः। जनः। जीवम्। व्रातम्। सचेमहि। यत्। अन्तरिक्षम्। पृथिवीम्। उत। द्याम्। यत्। मातरम्। पितरम्। वा। जिहिꣳसिम। अग्निः। मा। तस्मात्। एनसः। गार्हपत्य इति गार्ह—पत्यः। प्रेति। मुञ्चतु। दुरितेति दुः—इता। यानि। चकृम। करोतु। माम्। अनेनसम् (३)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टकेऽष्टमप्रपाठके पञ्चमोऽनुवाकः॥ ५॥

---

(अथ प्रथमकाण्डेऽष्टमप्रपाठके पञ्चमोऽनुवाकः।)

---

चतुर्थे साकमेधाख्ये तृतीये पर्वणि प्रधानहवींष्युक्तानि। पञ्चमे तदीयशेषो महापितृयज्ञ उच्यते।

आदौ तावत्त्रीणि हवींषि विधत्ते—

सोमाय पितृमते पुरोडाशꣳ षट्कपालं निर्वपति पितृभ्यो बर्हिषद्भ्यो धानाः पितृभ्योऽग्निष्वात्तेभ्योऽभिवान्यायै दुग्धे मन्थम्, इति।

पितरोऽस्य सन्तीति पितृमान्पितृस्वामीत्यर्थः। बर्हिषि यज्ञे सीदन्तीति बर्हिषदः। धाना भृष्टयवाः। अग्निष्वात्ता अयज्ञनिष्ठाः। अभिवान्या मृतवत्सा धेनुः। क्षीरे यवपिष्टं प्रक्षिप्य मिश्रीकृतं द्रव्यं मन्थः॥

तदिदं हविस्त्रयं पितृयज्ञः। तस्य च पितृयज्ञस्य विधिमर्थवादेनोन्नयति—

"वैश्वदेवेन वै प्रजापतिः प्रजा असृजत। ता वरुणप्रघासैर्वरुणपाशादमुञ्चत्। साकमेधैः प्रत्यस्थापयत्। त्र्यम्बकै रुद्रं निरवादयत। पितृयज्ञेन सुवर्गं लोकमगमयत्। यद्वैश्वदेवेन यजते। प्रजा एव तद्यजमानः सृजते। ता वरुण-

प्रघासैर्वरुणपाशान्मुञ्चति । साकमेधैः प्रतिष्ठापयति । त्र्यम्बकै रुद्रं निरवदयते ( १ )। पितृयज्ञेन सुवर्गं लोकं गमयति । " [ ब्रा०का०१प्र०६ अ० ८] इति ।

प्रतिपूरुषमेककपालान्निर्वपतीति विधास्यमाना यागास्त्र्यम्बकास्तैः क्रूरं रुद्रं परितोष्य निःसारितवान् । तत्र स्वर्गादिलोकहेतुत्वेनात्यन्तप्रशस्तत्वात्पितृयज्ञः कर्तव्य इत्यभिप्रायः ॥

अत्र हेयं पक्षं पूर्वपक्षतया विधत्ते—

" दक्षिणतः प्राचीनावीती निर्वपति । दक्षिणावृद्धि पितृणाम् । " [ ब्रा० का० १ प्र० ६ अ० ८ ] इति ।

गार्हपत्यस्य दक्षिणदेशे स्थित्वा प्राचीनावीती सन्नुक्तानां हविषां निर्वापं कुर्यात् । यस्मात्पितृणां संबन्धि कर्म दक्षिणावृत्प्रायेण दक्षिणस्यां दिशि वर्तते ॥

तं पक्षं दूषयित्वा सिद्धान्तं विधत्ते—

" अनादृत्य तत् । उत्तरत एवोपवीय निर्वपेत् । उभये हि देवाश्च पितरश्चेज्यन्ते । " [ ब्रा० का० १ प्र० ६ अ० ८ ] इति ।

यत्रैकोद्दिष्टश्राद्धादौ पितर एव पूज्यन्ते तत्र दक्षिणावृत्त्वमस्तु । इह त्वाज्यभागादिदेवा अग्निष्वात्तादिपितरश्चेज्यन्ते । अतो देवानां प्रियायोत्तरतोऽवस्थानमुपवीतं च ॥

तर्हि पितृणां प्रीतिर्न स्यादित्याशङ्क्य विध्यन्तरेण दक्षिणावृत्त्वं संपादयति—

" अथो यदेव दक्षिणार्धेऽधिश्रयति । तेन दक्षिणावृत् । " [ ब्रा० का० १ प्र० ६ अ० ८ ] इति ।

हविः पाकाय गार्हपत्यस्य दक्षिणभागेऽधिश्रयेत् । तेनैतत्कर्म पितृप्रीत्यै दक्षिणावृदपि भविष्यति ॥

एतदेव कालरूपेण प्रशंसति—

" सोमाय पितृमते पुरोडाशं षट्कपालं निर्वपति । संवत्सरो वै सोमः पितृमान् ( २ ) । संवत्सरमेव प्रीणाति । पितृभ्यो बर्हिषद्भ्यो धानाः । मासा वै पितरो बर्हिषदः । मासानेव प्रीणाति । यस्मिन्वा ऋतौ पुरुषः प्रमीयते । सोऽस्यामुष्मिँल्लोके भवति । " [ ब्रा० का० १ प्र० ६ अ ८ ] इति ।

वसन्ते ज्योतिषा यजेतेति विधानात्सोमस्य संवत्सरत्वं, स एव पितृणां पतिरित्यस्य पितृमत्त्वं, मासि पितृभ्यः क्रियत इति अमावास्याश्राद्धाभिधा-

---

१ ख. घ. ङ. च. 'गार्हैयम्ब' ।

( राजसूयविषयस्य चातुर्मास्यसंबन्धिसाकमेधाख्यतृतीयपर्वणोऽभिधानम् )

नास्तिपितॄणां मासत्वं चोपचर्यते । "यदि वसन्ता प्रमीयते, वसन्तो भवति, यदि ग्रीष्मे ग्रीष्मः" इत्यभिधानात्तत्तदृतुदेवताप्रीतिरेवास्यामुष्मिन्नृतुसंबन्धः॥

भर्जनेन क्वचिदीषत्कृष्णत्वं क्वचित्कृष्णत्वं क्वचिदकृष्णत्वमित्येवंविधं त्रैविध्यं विधत्ते—

"बहुरूपा धाना भवन्ति। अहोरात्राणामभिजित्यै।" [ ब्रा० का० १ प्र० ६ अ० ८ ] इति।

अहान्यकृष्णान्यमावास्यारात्रिः कृष्णा, अन्यास्तु रात्रय ईषत्कृष्णाः॥

तृतीययागदेवतां प्रशंसति—

"पितृभ्योऽग्निष्वात्तेभ्यो मन्थम्। अर्धमासा वै पितरोऽग्निष्वात्ताः (३)। अर्धमासानेव प्रीणाति।" [ ब्रा० का० १ प्र० ६ अ० ८ ] इति।

बर्हिषदामनुष्ठितयागत्वान्मासत्वम्। अग्निष्वात्तानां यागाभावादर्धमासत्वम्। एवञ्च "ये वै यज्वानः, ते पितरो बर्हिषदः" इत्यादिना वक्ष्यते॥

मृतवत्सां प्रशंसति—

"अभिवान्यायै दुग्धे भवति। सा हि पितृदेवत्यं दुहे।" [ ब्रा० का० १ प्र० ६ अ० ८ ] इति।

पितृदेवत्यं पितृदेवताभ्यो हितम्। मृताः पुरुषाः पितरो भवन्ति। अभिवान्या च मृतवत्सेति सजातीयत्वात्तत्र तेषां प्रीतिः॥

यदुक्तमापस्तम्बेन—"उद्वासनकाले धाना उद्वास्य विभागमन्त्रेण विभज्यार्धा आज्येन संयौति, अर्धाः पिष्टानामावृता सक्तून्कृत्वाऽभिवान्यायै दुग्धस्यार्धशरावे सक्तूनोप्यैकयेक्षुशलाकयेक्षुकाण्डेन वा दक्षिणामुखस्त्रिः प्रसव्यमनारभ्योपमन्थति" इति, तत्रार्धशरावे मन्थनं विधत्ते—

"यत्पूर्णम्। तन्मनुष्याणाम्। उपर्यर्धो देवानाम्। अर्धः पितृणाम्। अर्ध उपमन्थति। अर्धो हि पितृणाम्।" [ ब्रा० का० १ प्र० ६ अ० ८ ] इति।

भुञ्जाना मनुष्याः पात्रपूर्णमेव घृतमिच्छन्ति। प्रयाजदेवता जुहूगतेनोपरितनाज्यभागेन तृप्यन्ति। अधोभागेन हविरभिघारणात्। अग्निहोत्रे चोपरिभागं देवेभ्यो हुत्वाऽर्धभागं स्वधा पितृभ्यः पितॄञ्जिन्वेति भूमौ निमृजन्तीति तद्विधानात्। तदेतत्सर्वमभिमेत्य यत्पूर्णमित्याद्युक्तम्॥

इक्षुशलाकां विधत्ते—

"एकयोपमन्थति (४)। एका हि पितृणाम्।" [ ब्रा० का० १ प्र० ६ अ० ८ ] इति।

यदेकमेकं संभरेत्पितृदेवत्यानि स्युरित्यादौ पितॄणामेकत्वसंख्याप्रीतिः प्रसिद्धा ॥

दक्षिणामुखत्वं विधत्ते—

" दक्षिणोपमन्थति । दक्षिणावृद्धि पितृणाम् । " [ ब्रा० का० १ प्र० ६ अ० ८ ] इति ।

प्राचीं देवा दक्षिणा पितर इत्यादौ दक्षिणदिक्प्रीतिः प्रसिद्धा ॥

हस्ताभ्यां मन्थनं विधत्ते—

" अनारभ्योपमन्थति । तद्धि पितॄन्गच्छति । " [ ब्रा० का० १ प्र० ६ अ० ८ ] इति ।

तृतीयसवनगताशिरादौ मन्थानं स्तम्भे निबध्य मन्थति, तत्तु देवानां प्रियम्। अत्र त्वनारभ्य बन्धनमकृत्वा हस्ताभ्यामेवोपमन्थति । तच्च देववैलक्षण्यात्पितॄणां प्रियम् ॥

यदुक्तमापस्तम्बेन—" न प्राचीं वेदिमुद्धन्ति पितृयज्ञो हि न दक्षिणा देवयज्ञो ह्युभे दिशावन्तरोद्धत्य " इति, तामाग्नेयीं दिशमङ्गुल्या निर्दिशन्विधत्ते—

" इमां दिशं वेदिमुद्धन्ति । उभये हि देवाश्च पितरश्चेज्यन्ते । " [ ब्रा० का० १ प्र० ६ अ० ८ ] इति ।

तस्या वेदेश्चतुर्विधं दैविकवैलक्षण्यं क्रमेण विधत्ते—

" चतुःस्रक्तिर्भवति । सर्वा ह्यनु दिशः पितरः । अखाता भवति ( ५ ) । खाता हि देवानाम् । मध्यतोऽग्निराधीयते । अन्ततो हि देवानामाधीयते । वर्षीयानिध्म इध्माद्भवति व्यावृत्त्यै । " [ ब्रा० का० १ प्र० ६ अ० ८ ] इति ।

दैविकी वेदिर्दीर्घा न तु समचतुरस्रा । इयं तु समचतुरस्रेति व्यावृत्तिः । अग्निषु प्रकारविशेषं सूत्रकारो दर्शयति—" प्रतिदिशं स्रक्तयोऽवान्तरदेशान्प्रति मध्यानि " इति ।

परितः कटादिभिराच्छादनं विधत्ते—

" परिश्रयति । अन्तर्हितो हि पितृलोको मनुष्यलोकात् । " [ ब्रा० का० १ प्र० ६ अ० ८ ] इति ॥

उन्मूलनं विधत्ते—

" यत्परुषि दिनम् । तद्देवानाम् । यदन्तरा । तन्मनुष्याणाम् ( ६ ) ।

---

१ क. घ. ङ. च. मथ्नान्ति ।

यत्समूलम्। तत्पितृणाम्। समूलं बर्हिर्भवति व्यावृत्त्यै।" [ब्रा० का० १ प्र० ६ अ० ८] इति।

परुषि पर्वसंधौ दिनं छिन्नं तादृशं बर्हिरहिंसितत्वाद्देवानां प्रियम्। अत एव बर्हिर्लवनब्राह्मणे श्रूयते—"प्रजापतिर्वा ओषधीः पर्वशो वेद। स एना न हिनस्ति" इति। "ओषधीनामहिꣳसायै" इति च। यदन्तरा पर्वमध्ये छिन्नं तन्मनुष्याणां प्रियं संधिविशेषस्य तैरज्ञातत्वात्। परिशेषेण समूलत्वं पितॄणां प्रियम्॥

बर्हिषां दक्षिणाग्रत्वं विधत्ते—

"दक्षिणा स्तृणाति। दाक्षिणावृद्धि पितृणाम्।" [ब्रा० का०१ प्र० ६ अ० ८] इति॥

यदुक्तमापस्तम्बेन—"आस्तरणकाले बर्हिषा त्रिः प्रसव्यं वेदिं स्तृणन्पर्येत्यौद्धवान्धारयमाणस्त्रिरस्तृणन्प्रतिपर्येत्यौद्धवः प्रस्तरः" इति, प्रसव्यमप्रदक्षिणत्वं यथा भवति तथा, तदिदमप्रदक्षिणत्वप्रदक्षिणत्वाभ्यां षट्कृत्व आवर्तनं विधत्ते—

"त्रिः पर्येति। तृतीये वा इतो लोके पितरः। तानेव प्रीणाति। त्रिः पुनः पर्येति। षट्संपद्यन्ते (७)। षड्वा ऋतवः। ऋतूनेव प्रीणाति।" [ब्रा० का० १ प्र० ६ अ० ८] इति।

इतो भूलोकादारभ्य तृतीयः पितृलोको भोगभूमेः स्वर्गस्यान्तरिक्षादूर्ध्वभावित्वात्॥

प्रस्तरस्यामन्त्रकमासादनं विधत्ते—

"यत्प्रस्तरं यजुषा गृह्णीयात्। प्रमायुको यजमानः स्यात्। यन्न गृह्णीयात्। अनायतनः स्यात्। तूष्णीमेव न्यस्येत्। न प्रमायुको भवति। नानायतनः।" [ब्रा० का० १ प्र० ६ अ० ८] इति।

गृह्णीयात्सादयेदिति॥

दक्षिणपरिधिवर्जनमभिप्रेत्य विधत्ते—

"यत्त्रीन्परिधीन्परिदध्यात् (८)। मृत्युना यजमानं परिगृह्णीयात्। यन्न परिदध्यात्। रक्षाꣳसि यज्ञꣳ हन्युः। द्वौ परिधी परिदधाति। रक्षसामपहत्यै। अथो मृत्योरेव यजमानमुत्सृजति।" [ब्रा० का० १ प्र० ६ अ० ८] इति।

मध्यमोत्तराविति सूत्रेऽभिहितम्॥

हविषामनुक्रमेण सादनं विधत्ते—

" यत्त्रीणि त्रीणि हवीꣳष्युदाहरेयुः । त्रयस्त्रय एषाꣳ साकं प्रमीयेरन् । एकैकमनूचीनान्युदाहरन्ति । एकैक एवैषामन्वञ्चः प्रमीयते । " [ ब्रा०का० १ प्र० ६ अ० ८ ] इति।

उदाहरेयुरासादयेयुः। एषां यजमानबन्धूनां मध्ये। अन्वञ्चो वृद्धबालानुक्रमगताः। एतेषां मध्य एकैक एव प्रमीयते न तु युगपत् ॥

दक्षिणतः कशिपूपबर्हणमाञ्जनमभ्यञ्जनमुदकुम्भमित्येकैकश आसाद्येति सूत्रे यदुक्तं तद्विधत्ते—

" कशिपु कशिपव्याय । उपबर्हणमुपबर्हण्याय । आञ्जनमाञ्जन्याय । अभ्यञ्जनमभ्यञ्जन्याय । यथाभागमेवैनान्प्रीणाति ( ९ ) । " [ ब्रा० का० १ प्र० ६ अ० ८ ] इति।

कशिपु तूलपूरितशय्यादि । उपबर्हणं शिरस आधारः । कशिपुप्रभृतीन्युदाहरन्तीत्यनुवर्तते । कशिपुप्रियः कशिपव्यः पिता, तत्परितोषार्थं कशिपु सादयेत् । एवमन्यत् । तथा सत्येनान्पितॄन्स्वस्वभागमनतिक्रम्य तोषयति ॥

तदेवमनुब्राह्मणगतेनानुवाकेन पितृयज्ञे हविरासादनपर्यन्तः पूर्वप्रयोगोऽभिहितः । अनुवाकान्तरेण सामिधेन्यादिक उत्तरप्रयोगोऽभिधीयते । तत्राध्वर्योः प्रैषमन्त्रमुत्पाद्य मन्त्रं व्याचष्टे—

" अग्नये देवेभ्यः पितृभ्यः समिध्यमानायानुब्रूहीत्याह । उभये हि देवाश्च पितरश्चेज्यन्ते । " [ ब्रा० का० १ प्र० ६ अ० ९ ] इति।

देवानां पितॄणां चोपकारी योऽग्निस्तस्मै ॥

उशन्तस्त्वेत्येतामृचं सामिधेनीत्वेन विधत्ते—

" एकामन्वाह । एका हि पितॄणाम् । " [ब्रा०का०१प्र०६अ०९] इति॥

तस्यामावृत्तिं विधत्ते—

" त्रिरन्वाह । त्रिर्हि देवानाम् । " [ ब्रा०का०१ प्र०६ अ० ९ ] इति॥

चोदकप्राप्तावाघारौ प्रशंसति—

" आघारावाघारयति । यज्ञपरुषोरनन्तरित्यै । " [ ब्रा० का० १ प्र०६ अ० ९ ] इति।

यज्ञपरुषोर्यज्ञांशयोरलोपाय ॥

वरणं पर्युदस्यति—

" नाऽऽर्षेयं वृणीते । न होतारम् ( १ ) । यदार्षेयं वृणीते । यद्धोतारम् ।

( राजसूयविषयस्य चातुर्मास्यसंबन्धिसाकमेधाख्यतृतीयपर्वणोऽभिधानम् )

प्रमायुको यजमानः स्यात्। प्रमायुको होता। तस्मान्न वृणीते। यजमानस्य होतुर्गोपीथाय।" [ ब्रा० का० १ प्र० ६ अ० ९ ] इति।

अग्निर्देवो होता देवान्यक्षदित्यादिनिगदपाठ आर्षेयवरणम्। निगदावसाने विष्णुशर्मा मानुष इत्यादिनामोच्चारणं होतृवरणम्॥

बर्हिर्नामकं चतुर्थं प्रयाजं निषेधति—

"अपबर्हिषः प्रयाजान्यजति। प्रजा वै बर्हिः। प्रजा एव मृत्योरुत्सृजति।" [ ब्रा० का० १ प्र० ६ अ० ९ ] इति॥

चोदकप्राप्तावाज्यभागौ प्रशंसति—

"आज्यभागौ यजति ( २ )। यज्ञस्यैव चक्षुषी नान्तरेति।" [ ब्रा० का० १ प्र० ६ अ० ९ ] इति॥

हविष्प्रचारकाले प्राचीनावीतं विधत्ते—

"प्राचीनावीती सोमं यजति। पितृदेवत्या हि। एषाऽऽहुतिः।" [ ब्रा० का० १ प्र० ६ अ० ९ ] इति॥

चतुरवदानमपवदितुं विधत्ते—

"पञ्चकृत्वोऽवद्यति। पञ्च ह्येता देवताः। द्वे पुरोनुवाक्ये। याज्या देवता वषट्कारः। ता एव प्रीणाति।" [ ब्रा० का० १ प्र० ६ अ० ९ ] इति।

त्वꣳ सोम प्रचिकितस्त्वया हि नः पितर इत्युभे पुरोनुवाक्ये। त्वꣳ सोम पितृभिः संविदान इत्येका याज्या। पितृमान्सोमो देवता, वषट्कारः। ता एताः पञ्च देवता उच्यन्ते॥

एकैकदेवतार्थं त्रिषु हविःष्वविच्छिन्नावदानं विधत्ते—

"संततमवद्यति ( ३ )। ऋतूनाꣳ संतत्यै।" [ ब्रा० का० १ प्र० ६ अ० ९ ] इति।

तदाहाऽऽपस्तम्बः—"जुह्वामुपस्तीर्य सोमाय पितृमतेऽनु स्वधेति संप्रेष्यति सकृत्पुरोडाशस्यावद्यति सकृद्धानानां सकृन्मन्थस्य" इति॥

द्वयोः पुरोनुवाक्ययोरेकस्या याज्यायाश्च विधिं मनसि निधाय प्रशंसति—

"प्रैवैभ्यः पूर्वया पुरोनुवाक्ययाऽऽह। प्रणयति द्वितीयया। गमयति याज्यया। तृतीये वा इतो लोके पितरः। अह्न एवैनान्पूर्वया पुरोनुवाक्ययाऽत्यानयति। रात्रियै द्वितीयया। ऐवैनान्याज्यया गमयति।" [ ब्रा० का० १ प्र० ६ अ० ९ ] इति।

त्वꣳ सोम प्रचिकित इत्यनया पूर्वया पितृभ्यो हविः प्रकर्षेण कथितवा-

न्भवति । त्वया हि नः पितर इत्यनया द्वितीयया पितॄन्प्रति हविर्नयति । त्वꣳ सोम पितृभिरित्यनया तद्धविः पितॄन्गमयति याज्यया । पितॄणां तृतीयलोकवर्तित्वादत्र मन्त्रत्रित्वं युक्तम् । किं च त्रिभिर्मन्त्रैः क्रमेणाह्नो रात्र्याश्च पितॄनानीय हविः प्रति तानागमयत्येव ॥

वेदेरुत्तरत उपविश्यावदाय दक्षिणामुखो वेदिमतिक्रम्योदङ्मुखस्तिष्ठञ्जुहोति । अत्र तु तद्वैपरीत्यं सूत्रकार आह—"दक्षिणतोऽवदायाभिघार्योदङ्ङतिक्रम्य दक्षिणामुखस्तिष्ठन्" इति । तदेतद्विधत्ते—

"दक्षिणतोऽवदाय । उदङ्ङतिक्रामति व्यावृत्त्यै (४) ।" [ ब्रा० का० १ प्र० ६ अ० ९ ] इति ॥

आश्रावयास्तु श्रौषड्वौषडिति मन्त्रत्रयमपवदितुं क्रमेण विधत्ते—

"आ स्वधेत्याश्रावयति । अस्तु स्वधेति प्रत्याश्रावयति । स्वधा नम इति वषट्करोति । स्वधाकारो हि पितृणाम् ।" [ब्रा०का० १ प्र०६अ०९] इति ।

पितॄन्प्रति यद्वक्तव्यं तस्य सर्वस्य स्वधाकारो वाचकः । अत आश्रावयेत्यादिशब्दान्न ब्रूते । यस्मात्स्वधाकारः पितॄणां प्रियः ॥

विधिवाक्ये पाठादेव प्राप्तं प्रचारक्रमं प्रशंसति—

"सोममग्रे यजति । सोमप्रयाजा हि पितरः । सोमं पितृमन्तं यजति । संवत्सरो वै सोमः पितृमान् । संवत्सरमेव तद्यजति । पितॄन्बर्हिषदो यजति (५) । ये वै यज्वानः । ते पितरो बर्हिषदः । तानेव तद्यजति । पितॄनग्निष्वात्तान्यजति । ये वा अयज्वानो गृहमेधिनः । ते पितरोऽग्निष्वात्ताः । तानेव तद्यजति ।" [ ब्रा० का० १ प्र० ६ अ० ९ ] इति ।

सोमः प्रथमं यष्टव्यो येषां पितॄणां ते सोमप्रयाजाः । पितृस्वामित्वेन तस्य प्राथम्यं युक्तम् । संवत्सरत्वं तु सोमस्य पूर्वमेवोक्तम् । इह लोके यज्ञं कृत्वा पितृलोकं प्राप्ता बर्हिषदः । इह यज्ञरहिता गृहमेधिनो ये गृहस्थास्ते पितृलोकं प्राप्याग्निष्वात्ता उच्यन्ते ॥

स्विष्टकृत्संज्ञकां देवतामपवदितुं विधत्ते—

"अग्निं कव्यवाहनं यजति । य एव पितृणामग्निः । तमेव तद्यजति (६) । अथो यथाऽग्निꣳ स्विष्टकृतं यजति । तादृगेव तत् ।" [ ब्रा० का० १ प्र० ६ अ० ९ ] इति ।

पित्र्यं हविः कव्यं तद्वहतीति कव्यवाहनः । अत एवान्यत्र श्रूयते—

"त्रयो वा अग्नयो हव्यवाहनो देवानां कव्यवाहनः पितृणाꣳ सहरक्षा असुराणाम्" इति ॥

मुख्यब्राह्मणे पैतृकानि ( णि ) त्रीणि हवींषि विधायैतत्ते ततेत्याद्येकादश मन्त्रा आम्नाताः । तत्र विनियोगमाहाऽऽपस्तम्बः—"हविःशेषान्संप्रोम्नाय पिण्डान्कृत्वा तिसृषु स्रक्तीषु निदधाति पूर्वस्यां दक्षिणस्यामपरस्यामित्येतत्ते ततासौ ये च त्वामन्वित्येतैः प्रतिमन्त्रम्" इति । संप्रोम्नाय सम्यङ्मर्दनेनैकीकृत्य ।

पाठस्तु—

एतत्ते तत ये च त्वामन्वेतत्ते पितामह
प्रपितामह ये च त्वामनु, इति।

तत हे पितस्ते तुभ्यमेतत्पिण्डीकृतमन्नं दत्तं, ये चान्ये त्वामनु वर्तन्ते तेभ्योऽप्येतद्दत्तम्। मध्यममन्त्रे ये च त्वामन्वित्यनुषङ्गः। प्रपितामहमन्त्र एतत्त इत्यनुषङ्गः ॥

विधत्ते—

"एतत्ते तत ये च त्वामन्विति तिसृषु स्रक्तीषु निदधाति। तस्मादा तृतीयात्पुरुषान्नाम निगृह्णन्ति। एतावन्तो हीज्यन्ते।" [ ब्रा० का० १ प्र० ६ अ० ९ ] इति।

यस्मान्मन्त्रेषु तत पितामह प्रपितामहेत्येवं साधारणशब्दनिर्देशः कृतस्तस्माल्लोकेऽप्या तृतीयात्पुरुषात्प्रपितामहपर्यन्तं संबन्धविशेषेणैव व्यवहरन्ति, न तु तदीयं देवदत्तविष्णुशर्मादिनामोच्चारयन्ति। यस्मात्पार्वणश्राद्धेषु पित्रादयस्त्रय एव पूज्यन्ते न तूपरितनास्तस्मादत्रापि त्रयाणां निर्देशो युक्तः ॥

अत्र पितरो यथाभागं मन्दध्वम्—

कल्पः—"अत्र पितरो यथाभागं मन्दध्वमित्युक्त्वोदञ्चो निष्क्रम्य सुसंदृशं त्वा वयमित्यैन्द्रियर्चाऽऽहवनीयमुपतिष्ठन्ते" इति।

हे पितरोऽत्र स्रक्तिगतपिण्डेषु स्वस्वभागमनतिक्रम्य हृष्टा भवत ॥

मन्दध्वमिति पदस्याभिप्रायं व्याचष्टे—

"अत्र पितरो यथाभागं मन्दध्वमित्याह । ह्रीका हि पितरः।" [ ब्रा० का० १ प्र० ६ अ० ९ ] इति।

यस्मात्पितरो लज्जाशीलास्तस्मात्स्वस्वभागादूर्ध्वं लज्जां वारयितुं विस्रम्भेण मन्दध्वमित्युच्यते ॥

विधत्ते—

"उदञ्चो निष्क्रामन्ति। एषा वै मनुष्याणां दिक्। स्वामेव तद्दिशमनु निष्क्रामन्ति (७)।" [ ब्रा० का० १ प्र० ६ अ० ९ ] इति।

पितृत्वदशायां दक्षिणा दिक्प्राप्ता। ततः पूर्वं मनुष्यतादशायामुत्तरा दिगेव परिशिष्यते।

आहवनीयोपस्थानमन्त्रपाठस्तु—

सुसंदृशं त्वा वयं मघवन्मन्दिषीमहि। प्र
नूनं पूर्णवन्धुरः स्तुतो यासि वशाꣳ
अनु। योजा न्विन्द्र ते हरी।, इति।

हे मघवन्सुसंदृशं सुष्ठु कटाक्षवीक्षणेनास्मान्पश्यन्तं त्वां मन्दिषीमहि वयं तर्पयामः। त्वमप्यस्मद्दत्तैर्हविर्भिः पूर्णवन्धुरः परिपूरितरथपृष्ठोऽस्माभिः स्तुतः सन्वशानभीष्टान्देशाननुलक्ष्य नूनं प्रयासि प्रायेणाऽऽगमिष्यसि। हे इन्द्र ते हरी तवाश्वौ योजा नु रथे नियुक्तौ हि ॥

विधत्ते—

"आहवनीयमुपतिष्ठन्ते। न्येवास्मै तद्ध्नुवते। यत्सत्याहवनीये। अथान्यत्र चरन्ति।" [ ब्रा० का० १ प्र० ६ अ० ९ ] इति।

आहवनीये पुरोऽवस्थिते सति तमुपेक्ष्याथ तदाऽन्यत्र पैतृकवेदिमध्यस्थेऽग्नौ चरन्तीति यत्तेनास्मै निह्नुवत एनमाहवनीयमपलपन्त्येव तत्क्षमापणायोपस्थानमित्यर्थः ॥

उपस्थानस्यावधिं विधत्ते—

"आ तमितोरुपतिष्ठन्ते। अग्निमेवोपद्रष्टारं कृत्वा। पितॄन्निरवदयन्ते।" [ ब्रा० का० १ प्र० ६ अ० ९ ] इति।

आ तमितोरा ग्लानेरनुच्छ्वासेन मन्त्रमुच्चारयता यावता कालेन निरोधरूपा ग्लानिर्भवति तावदुपस्थातव्यम्। तेनोपस्थानेनाग्निमेव साक्षिणं कृत्वा पितॄन्स्वभागप्रदानेन विसृष्टवन्तो भवन्ति ॥

मन्त्रगतस्य सुसंदृशमित्येतस्याभिप्रायं व्याचष्टे—

"अन्तं वा एते प्राणानां गच्छन्ति। य आ तमितोरुपतिष्ठन्ते। सुसंदृशं त्वा वयमित्याह (८)। प्राणो वै सुसंदृक्। प्राणमेवाऽऽत्मन्दधते।" ब्रा० का० १ प्र० ६ अ० ९ इति।

श्वासनिरोधेन ग्लानिं प्राप्तेषु कटाक्षनिरीक्षणं नाम प्राणनिरोधपरिहारः।

तदेतदभिप्रेत्य प्राणो वै सुसंदृगित्युच्यते। योऽयं परिहृतनिरोधः प्राणः स एवेन्द्रस्य कटाक्षः। तं कुर्वन्तं त्वामिति मन्त्रे योजनीयम् ॥

योजेति पदस्याभिप्रायमाह—

" योजा न्विन्द्र ते हरी इत्याह। प्राणमेव पुनरयुक्त।" [ ब्रा० का० १ प्र० ६ अ० ९ ] इति।

यथा त्वदीयावश्वौ रथे युक्तावेवं प्राणमस्मासु योजयेत्यभिप्रायः ॥

अक्षन्नमीमदन्त ह्यव प्रिया अधूषत।
अस्तोषत स्वभानवो विप्रा नविष्ठया
मती। योजा न्विन्द्र ते हरी।

कल्पः—" अथ गार्हपत्यमुपतिष्ठन्ते—अक्षन्नमीमदन्त ह्यव प्रिया अधूषत। अस्तोषत स्वभानवो विप्रा नविष्ठया मती। योजा न्विन्द्र ते हरी इति " इति।

अक्षन्पितरो हविरशितवन्तः। अमीमदन्त भृशं हृष्टा हि यतः प्रियास्तनूरवाधूषत हविर्भोजनसौकर्येण शिरःप्रभृत्यङ्गान्यकम्पयन्त। स्वभानवो वपुषि जनितेन स्वकीयेन तेजसा भासमाना विप्रा भोजनतृप्त्या ब्राह्मणसदृशाः सन्तो नविष्ठया मती, अतिशयेन नूतनया बुद्ध्याऽस्तोषत भृशमिष्टमेतदित्यादिवचनैः स्तुतिं कृतवन्तः। योजेत्यादि व्याख्यातम् ॥

विधत्ते—

" अक्षन्नमीमदन्त हीति गार्हपत्यमुपतिष्ठन्ते।" [ ब्रा० का० १ प्र० ६ अ० ९ ] इति ॥

नन्वक्षन्नित्यादिमन्त्रः पितृप्रतिपादक उपस्थेयस्तु गार्हपत्य इति वैयधिकरण्यमाशङ्क्य मन्त्रस्यापेक्षितशेषपूरणेन वैयधिकरण्यपरिहारं श्रुतिरेव दर्शयति—

" अक्षन्नमीमदन्ताथ त्वोपतिष्ठामह इति वावैतदाह।" [ ब्रा० का० १ प्र० ६ अ० ९ ] इति।

पितरो भुक्तवन्तो हृष्टाश्च, अथ तदा साक्षिणं त्वामुपतिष्ठामह इत्येवं मन्त्रवाक्यमाह। मन्त्रस्थौ मघवन्निन्द्रेत्येतावपि शब्दावग्निपरत्वेन व्याख्येयौ। अन्नवान्परमैश्वर्ययुक्त इति तयोरर्थः ॥

अक्षन्पितरोऽमीमदन्त पितरोऽती-
तृपन्त पितरोऽमीमृजन्त पितरः।

कल्पः—" अथ प्राचीनावीतं कृत्वाऽन्वाहार्यपचनमभिप्रपद्यन्तेऽक्षन्पितरोऽमीमदन्त पितरोऽतीतृपन्त पितरोऽमीमृजन्त पितर इति " इति।

अतीतृपन्तास्मांश्च तर्पयन्तः(?)। अमीमृजन्तास्माञ्शोधितवन्तः॥

अत्र सूत्रकारः शाखान्तरमन्त्रमपि विनियुङ्क्ते—" अमीमदन्त पितरः सोम्या इत्या तमितोरुपतिष्ठन्ते " इति।

तदेतदुपस्थानं विदधानः पूर्ववद्वैयधिकरण्यं परिहरति—

" अमीमदन्त पितरः सोम्या इत्यभिप्रपद्यन्ते। अमीमदन्त पितरोऽथ त्वाऽभिप्रपद्यामह इति वावैतदाह। " ब्रा० का० १ प्र० ६ अ० ९] इति॥

कल्पः—" परेत पितरः सोम्या इति प्रवाहण्या पितॄन्प्रवाहयाति " इति।

पाठस्तु—

परेत पितरः सोम्या गम्भीरैः पथिभिः
पूर्व्यैः। अथा पितॄन्त्सुविदत्राꣳ अपीत
यमेन ये सधमादं मदन्ति।, इति।

हे सोम्याः पितरः पथिभिः परेत परावृत्य गृहान्गच्छतेति। कीदृशैः पथिभिः। गम्भीरैः सुलभान्नतोयैः पूर्व्यैः पूर्वं कृतैः महतैः। अथ तदा गृहान्गत्वा तस्मिन्पितृलोके यमेन साकं ये पितरः सधमादं सहस्थानस्थमादं यथा भवति तथा मदन्ति हृष्यन्ति तान्सुविदत्रान्सुष्ठु वेदितॄंश्चिरवासेन तत्रत्यवृत्तान्तज्ञान्पितॄनपि यूयमित प्राप्नुत॥

कल्पः—" मनो न्वा हुवामह इति मनस्वतीभिरुपतिष्ठते " इति।

तिसृषु ऋक्षु प्रथमायाः पाठस्तु—

मनो न्वा हुवामहे नाराशꣳसेन
स्तोमेन पितॄणां च मन्मभिः।, इति।

नाराशंसेन मनुष्यप्रशंसायोग्येन स्तोमेन वाक्यसमूहेन पितॄणामपि मन्मभिर्मननीयैर्वाक्यैर्मनः पितृयज्ञानुष्ठानपरं चित्तं नु क्षिप्रमाहुवामह आह्वयामः॥

अथ द्वितीया—

आ न एतु मनः पुनः क्रत्वे दक्षाय
जीवसे। ज्योक्च सूर्यं दृशे।, इति।

---

१ ख. घ. ङ. च. 'ल्पः—'प्रा' । २ क. घ. ङ. च. 'द्यतेऽक्ष' ।

( राजसूयविषयस्य चातुर्मास्यसंबन्धिसाकमेधाख्यतृतीयपर्वणोऽभिधानम् )

क्रत्वे कर्मानुष्ठानाय दक्षाय तत्तत्सामर्थ्याय जीवसे जीवितुं ज्योक्चिरं सूर्यं दृशे द्रष्टुं च योग्यं मन आगत्य नोऽस्मान्पुनरेत्वसकृत्प्राप्नोतु ॥

अथ तृतीया—

पुनर्नः पितरो मनो ददातु दैव्यो जनः। जीवं व्रातꣳ सचेमहि।, इति।

हे पितरो दैव्यो जनो देवसंबन्धिपुरुषसमूहो नोऽस्माकं मनः कर्मानुष्ठानपरं चित्तं ददातु असकृत्प्रयच्छतु। वयमपि व्रातं संवत्सरसंघातरूपं जीवं जीवनं सचेमहि सेवेमहि ॥

कल्पः—" यदन्तरिक्षमिति पङ्क्त्या गार्हपत्यमुपतिष्ठते " इति।

पाठस्तु—

यदन्तरिक्षं पृथिवीमुत द्यां यन्मातरं पितरं वा जिहिꣳसिम। अग्निर्मा तस्मादेनसो गार्हपत्यः प्र मुञ्चतु दुरिता यानि चकृम करोतु मामनेनसम् ॥, इति ॥

पृथिव्यादींल्लोकान्मनसा जिहिसिम हिंसितुमिच्छेम यन्मातरं पितरं वा हिंसितुमिच्छेमेति यत्तस्मात्सर्वस्मादेनसः पापाद्गार्हपत्यो मां प्रमुञ्चतु। अन्यान्यपि दुरितानि यानि चकृम तेभ्योऽपि मुञ्चतु। मामनेनसं सर्वपापरहितं करोतु ॥

यदुक्तमापस्तम्बेन—" उदकुम्भमादाय यजमानः शुन्धन्तां पितर इति त्रिः प्रसव्यं वेदिं परिषिञ्चन्पर्येति " इति, तदेतद्विधत्ते—

" अपः परिषिञ्चति। मार्जयत्येवैनान् (९)। अथो तर्पयत्येव।" [ ब्रा० का० १ प्र० ६ अ० ९ ] इति।

एनान्पितॄन् ॥

तद्वेदनं प्रशंसति—

" तृप्यति प्रजया पशुभिः। य एवं वेद।" [ ब्रा० का० १ प्र० ६ अ० ९ ] इति।

चतुर्थप्रयाजवद्बर्हिर्नामकं प्रथमानूयाजं निषेधति—

" अपबर्हिषावनूयाजौ यजति। प्रजा वै बर्हिः। प्रजा एव मृत्योरुत्सृजति।" [ ब्रा० का० १ प्र० ६ अ० ९ इति। ]

बर्हिर्योगवर्जनात् ॥

प्रयाजानूयाजान्प्रशंसति—

" चतुरः प्रयाजान्यजति । द्वावनूयाजौ । षट्संपद्यन्ते । षड्वा ऋतवः । ऋतूनेव प्रीणाति । " [ ब्रा० का० १प्र० ६ अ० ९ ] इति ।

सूत्रकारो युक्ता मे यज्ञमन्वासाता इति यजमानः संप्रेष्यतीतिप्रैषानुसारेण गार्हपत्यसमीप उपविष्टायाः पत्न्याः पूर्णपात्रानयनपर्यन्तं यदन्वासनमवोचत्तच्च पत्नीसंयाजांश्च चोदकप्राप्तान्प्रतिषेधति—

" न पत्न्यन्वास्ते । न संयाजयन्ति । यत्पत्न्यन्वासीत । यत्संयाजयेयुः । प्रमायुका स्यात् । तस्मान्नान्वास्ते । न संयाजयन्ति । पत्नियै गोपीथाय (१०)। " [ ब्रा० का० १ प्र० ६ अ० ९ ] इति ॥

अत्र विनियोगसंग्रहः—

" एतत्त इति दत्ते त्रीन्वेद्याः कोणेषु पिण्डकान् ।
ब्रूयुरत्रेत्युपस्थानं पूर्वस्याग्नेः सुसंदृशम् ॥ १ ॥
अक्षन्निति प्रतीचोऽग्नेस्तथाऽक्षन्दक्षिणानलम् ।
परेतेति प्रवाह्याथ मनआद्यैरुपस्थितिः ॥
यत्पश्चिमाग्न्युपस्थानं मन्त्रा द्वादश वर्णिताः ॥ २ ॥ " इति ॥

अथ मीमांसा ।

दशमाध्यायस्य द्वितीयपादे चिन्तितम्—

" नावघातोऽवघातो वा धानानां नाविनष्टये ।
न नाशः क्रमबाधेऽतो नावघातोऽत्र बाध्यते ॥ "

महापितृयज्ञे हविः किंचिच्छ्रूयते—" पितृभ्यो बर्हिषद्भ्यो धानाः " इति । धानाशब्देन भृष्टं धान्यमभिधीयते । तासां धानानामवघाते सति सक्तुभावापत्तेर्धानात्वमेव विनश्येत् । अतस्तासामविनाशाय नास्त्यवघात इति पूर्वः पक्षः । धाना अवहन्तव्या इति ह्यत्र चोदकवाक्यं, तस्मिंश्च वाक्ये भर्जनसंपादितं धानात्वं पूर्वभावि, पश्चाद्भावी त्ववघात इति क्रमः प्रतीयते । तं बाधित्वा प्रथमतोऽवघाते सति नास्ति धानात्वनाशः । अवघातस्य पदार्थस्य बाधाद्वरं तद्धर्मस्य क्रममात्रस्य बाधनम् । तस्मादवहन्तव्याः ।

तदेवाधिकरणं वार्तिककारमतेनाऽऽरचयति—

" पेषणं नूतनं मन्थे प्राकृतं वा क्रमान्तरात् ।
नूतनं प्राकृतं धर्ममात्रादाद्य(त्रबाध)स्य लाघवात् ॥ "

१ ख. च. °पात्रन° ।

( राजसूयविषयस्य चातुर्मास्यसंबन्धिसाकमेधाख्यतृतीयपर्वणोऽभिधानम् )

महापितृयज्ञ एवं श्रूयते—“ पितृभ्योऽग्निष्वात्तेभ्योऽभिवान्यायै दुग्धे मन्थम् ” इति। मृतवत्सा धेनुरभिवान्या। दुग्धे द्रव्ये प्रक्षिप्य मथिताः सक्तवो मन्थः। तत्र यत्पेषणं तन्न प्राकृतम्। कुतः। क्रमव्यत्यासात्। प्रकृतौ हि प्रथमतः पेषणं पश्चात्पुरोडाशश्रपणम्। अत्र तु प्रथमतः श्रपणेन धानाः संपाद्य पश्चात्सक्तुभावाय पेषणम्। तस्मान्नूतनमिति प्राप्ते ब्रूमः—चोदकप्राप्त-प्राकृतपेषणतत्क्रमयोरुभयोर्बाध(धे) गौरवात्क्रममात्रं बाध्यम्। पेषणपदार्थस्तु स एवेति तद्धर्मा दृषन्मन्त्रा इत्यादयोऽत्र कर्तव्याः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डेऽष्टमप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

( अथ प्रथमाष्टकेऽष्टमप्रपाठके षष्ठोऽनुवाकः। )

---

प्रतिपूरुषमेकंकपालान्निर्वपत्येकमतिरिक्तं यावन्तो गृह्याः स्मस्तेभ्यः कमकरं पशूनाꣳ शर्मासि शर्म यजमानस्य शर्म मे यच्छैक एव रुद्रो न द्वितीयाय तस्थ आखुस्ते रुद्र पशुस्तं जुषस्वैष ते रुद्र भागः सह स्वस्राऽम्बिकया तं जुषस्व भेषजं गवेऽश्वाय पुरुषाय भेषजमथो अस्मभ्यं भेषजꣳ सुभेषजम् ( १ ) यथाऽसति। सुगं मेषाय मेष्या अवाम्ब रुद्रमदिमह्यव देवं त्र्यम्बकम्। यथा नः श्रेयसः करद्यथा नो वस्यसः करद्यथा नः पशुमतः करद्यथा नो व्यवसाययात्। त्र्यम्बकं यजा-

( राजसूयविषयस्य चातुर्मास्यसंबन्धिसाकमेधाख्यतृतीयपर्वणोऽभिधानम् )

महे सुगन्धिं पुष्टिवर्धनम्। उर्वारुकमिंव बन्धं-
नान्मृत्योर्मुक्षीय माऽमृतात् । एष ते रुद्र
भागस्तं जुंषस्व तेनांवसेनं परो मूजंवतोऽतीह्य-
वंततधन्वा पिनांकहस्तः कृत्तिंवासाः ( २ )॥

( सुभेषजमिहि त्रीणि च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टकेऽ-
ष्टमप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

( अथ प्रथमाष्टकेऽष्टमप्रपाठके षष्ठोऽनुवाकः । )

---

प्रतिपूरुषमितिं प्रति—पूरुषम् । एकंकपालानि-
त्येकं—कपालान् । निरितिं । वपति । एकंम् । अतिं-
रिक्तमित्यतिं—रिक्तम् । यावंन्तः । गृह्याः । स्मः ।
तेभ्यंः । कम् । अकरम् । पशूनाम् । शर्मं । असि ।
शर्मं । यजंमानस्य । शर्मं । मे । यच्छ । एकंः ।
एव । रुद्रः । न । द्वितीयांय । तस्थे । आखुः । ते ।
रुद्र । पशुः । तम् । जुषस्व । एषः । ते । रुद्र ।
भागः । सह । स्वस्रां । अम्बिंकया । तम् । जुषस्व ।
भेषजम् । गवें । अश्वांय । पुरुंषाय । भेषजम्। अथो
इतिं । अस्मभ्यमित्यस्म—भ्यम् । भेषजम् । सुभें-
षजमिति सु—भेषजम् ( १ ) । यथां । असंति ।

सुगमिति सु—गम्। मेषाय। मेष्यै। अवेति। अम्ब। रुद्रम्। अदिमहि। अवेति। देवम्। त्र्यम्बकमिति त्रि—अम्बकम्। यथा। नः। श्रेयसः। करत्। यथा। नः। वस्यसः। करत्। यथा। नः। पशुमत इति पशु—मतः। करत्। यथा। नः। व्यवसाययादिति वि—अवसाययात्। त्र्यम्बकमिति त्रि—अम्बकम्। यजामहे। सुगन्धिमिति सु—गन्धिम्। पुष्टिवर्धनमिति पुष्टि—वर्धनम्। उर्वारुकम्। इव। बन्धनात्। मृत्योः। मुक्षीय। मा। अमृतात्। एषः। ते। रुद्र। भागः। तम्। जुषस्व। तेन। अवसेन। परः। मूजवत इति मूज—वतः। अतीति। इहि। अवततधन्वेत्यवतत—धन्वा। पिनाकहस्त इति पिनाक—हस्तः। कृत्तिवासा इति कृत्ति—वासाः (२)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टकेऽष्टमप्रपाठके षष्ठोऽनुवाकः॥ ६॥

---

( अथ प्रथमकाण्डेऽष्टमप्रपाठके षष्ठोऽनुवाकः। )

---

पञ्चमे पितृयज्ञोऽभिहितः। षष्ठे त्र्यम्बकपुरोडाशाः साकमेधशेषा उच्यन्ते। तान्विधत्ते—

प्रतिपूरुषमेककपालान्निर्वपत्येकमतिरिक्तम्, इति॥

तद्विधिं प्रशंसति—

" प्रतिपूरुषमेककपालान्निर्वपति । जाता एव प्रजा रुद्रान्निरवदयते । एक मतिरिक्तम् । जनिष्यमाणा एव प्रजा रुद्रान्निरवदयते । एककपाला भवन्ति एकधैव रुद्रं निरवदयते । " [ ब्रा० का० १ प्र० ६ अ० १० ] इति ।

करम्भवाक्यवन्नैर्ऋतवाक्यवच्च व्याख्येयम् । मुख्यविधिसंनिधौ यावन्त इत्यादय एकादश मन्त्रा आम्नाताः ॥

## यावन्तो गृह्याः स्मस्तेभ्यः कमकरं—

कल्पः—" यावन्तो गृह्याः स्मस्तेभ्यः कमकरमिति निरुप्यमाणेषु यजमानो जपति " इति ।

गृहे भवा मनुष्या गृह्यास्ते वयं यावन्त इह स्थितास्तेभ्यः सर्वेभ्यः कं सुखमकरमकार्षम् ॥

अर्पितेषु पुरोडाशेषु चोदकप्राप्तमभिघारणं निषेधति—

" नाभिघारयति । यदभिघारयेत् । अन्तरवचारिणꣳ रुद्रं कुर्यात् । " [ ब्रा० का० १ प्र० ६ अ० १० ] इति ।

रुद्रमनिष्टकारिणं क्रूरदेवम् । अन्तरवचारिणं गृहस्यान्तः प्रविश्यास्मानवरोद्धुं चरन्तम् ॥

कल्पः—" तानभिघार्यानभिघार्य वोद्वास्यान्तर्वेद्यामासाद्य पशूनाꣳ शर्मासीति मूते समावपति " इति ।

कर्षकैर्व्रीह्यादिबीजानि संग्रहीतुं तृणकटादिना पुटबन्धनं क्रियते तदिदं मूतशब्देनोच्यते ।

पाठस्तु—

## पशूनाꣳ शर्मासि शर्म यजमा-
## नस्य शर्म मे यच्छ, इति ।

हे मूत भक्ष्यैस्तृणादिभिर्बीजैश्चोपेतत्वात्पशूनां शर्मासि । अतो यजमानस्य मेऽध्वर्योश्च सुखं यच्छ ॥

## एक एव रुद्रो न द्वितीयाय तस्थे—

कल्पः—" एक एव रुद्रो न द्वितीयाय तस्थ इति दक्षिणाग्नेरेकोल्मुकं धूपायदुद्धरति उत्तरपूर्वमवान्तरदेशं गत्वा " इति ।

रुद्रो जगत्येक एवास्ति, द्वितीयाय न तस्थे, द्वितीयो रुद्रो न कोऽप्यवस्थितः ॥

---

१ ख. 'पायोद्ध' ।

विधत्ते—

" एकोल्मुकेन यन्ति ( १ ) । तद्धि रुद्रस्य भागधेयम् । इमां दिशं यन्ति। एषा वै रुद्रस्य दिक्। स्वायामेव दिशि रुद्रं निरवदयते। " [ ब्रा० का० १ प्र० ६ अ० १० ] इति ॥

कल्पः—" आखुस्ते रुद्र पशुरित्याखूत्कर एकं पुरोडाशमुपवपत्यसौ ते पशुरिति वा द्वेष्यं मनसा ध्यायन्यदि न द्विष्यादाखुस्ते पशुरिति ब्रूयात्" इति।

आखूत्करो मूषकैर्बिलादुद्धृतः पांसुराशिः।

पाठस्तु—

आखुस्ते रुद्र पशुस्तं जुषस्व, इति।

हे रुद्र मूषकस्ते प्रियः पशुरतस्तं सेवस्व ॥

विधत्ते—

" रुद्रो वा अपशुकाया आहुत्यै नातिष्ठत। असौ ते पशुरिति निर्दिशेद्यं द्विष्यात्। यमेव द्वेष्टि। तमस्मै पशुं निर्दिशति। यदि न द्विष्यात्। आखुस्ते पशुरिति ब्रूयात् ( २ )। न ग्राम्यान्पशून्हिनास्ति। नाऽऽरण्यान्। " [ ब्रा० का० १ प्र० ६ अ० १० ] इति।

आहुत्यै नातिष्ठत पशुरहितामाहुतिं नाङ्गी करोतीत्यर्थः। यं द्विष्यात्तमसाविति नामग्रहणेन निर्दिशेत्। तथा सति द्वेष्यमस्मै समर्पयत्येव ॥

एष ते रुद्र भागः सह स्वस्राऽम्बिकया तं जुषस्व—

कल्पः—" चतुष्पथ एकोल्मुकमुपसमाधाय संपरिस्तीर्य सर्वेषां पुरोडाशानामुत्तरार्धात्सकृत्सकृदवदायावदाय मध्यमेनान्तिमेन वा पलाशपर्णेन जुहोत्येष ते रुद्र भागः सह स्वस्राऽम्बिकया तं जुषस्व स्वाहेति " इति।

अत्र स्वाहाकारोऽध्याहृतः। हे रुद्र, एषोऽवत्तः पुरोडाशानामंशस्तवावदीयमानो भागः, तं भागं, स्वस्रा भगिनीवद्धितकारिण्याऽम्बिकया पार्वत्या सहांशं जुषस्व सेवस्व ॥

विधत्ते—

" चतुष्पथे जुहोति। एष वा अग्नीनां पड्वीशो नाम। अग्निवत्येव जुहोति। मध्यमेन पर्णेन जुहोति। स्रुग्घ्येषा। अथो खलु। अन्तमेनैव होतव्यम्। अन्तत एव रुद्रं निरवदयते ( ३ )। " [ब्रा०का०१ प्र० ६ अ० १०] इति।

अग्नीनां पड्वीशः पादप्रदे(वे)शस्थानम्। यत्राग्नयः पुनः पुनः संचारेण प्रवि-

शन्ति तादृश एवैष चतुष्पथः। अतस्तत्र होमेनाग्निवत्येव देशे हुतं भवति। पलाशशाखायां यानि त्रीणि पर्णानि तत्र मध्यमं पर्ण प्रशस्ततया स्रुग्रूपम्। वामदक्षिणपार्श्वस्थयोरन्यतरेण होमेन रुद्रो यागभूमेरन्तान्निष्काशितो भवति॥

सह स्वस्राऽम्बिकयेत्यस्य मन्त्रभागस्य तात्पर्यं व्याचष्टे—

"एष ते रुद्र भागः सह स्वस्राऽम्बिकयेत्याह। शरद्वा अस्याम्बिका स्वसा। तया वा एष हिनस्ति। यꣳ हिनस्ति। तयैवैनꣳ सह शमयति।" [ब्रा० का० १ प्र० ६ अ० १०] इति।

शरत्कालो हि पीनसज्वराद्युत्पादनेन हिंसकस्तद्वदियमम्बिका हिंसिका। ततः शरदित्युच्यते। एष रुद्रस्तयैव सहायभूतया प्राणिनं हिनस्ति। अतस्तया सह पुरोडाशभागसेवया तुष्टया तयैव सहैवैनं रुद्रं शमयति हिंसारहितं करोति॥

कल्पः—"भेषजं गवे सुभेषजमित्येताभ्यां चतुष्पथमग्निं परिषिञ्चति" इति।

पाठस्तु—

भेषजं गवेऽश्वाय पुरुषाय भेषजमथो
अस्मभ्यं भेषजꣳ सुभेषजं यथाऽ-
सति। सुगं मेषाय मेष्यै, इति।

भेषजं सुभेषजमित्येतौ मन्त्रयोरादी। हे रुद्र गवेऽस्मदीयायै गोजात्यै भेषजमारोग्यं कुरु। एवमन्यत्र। तात्कालिकं रोगोपशमनमात्यन्तिकं वा सुभेषजं तद्यथाऽसति यथा भवति तथा कुरु। मेषो वाहकः। मेषी दोग्ध्री। तयोः सुगं सुष्ठु गमनं रोगराहित्येन संचरणं यथा भवति तथा कुरु॥

गवाश्वादिशब्दैः पश्वादयः सर्वेऽप्युपलक्ष्यन्त इत्याह—

"भेषजं गव इत्याह। यावन्त एव ग्राम्याः पशवः। तेभ्यो भेषजं करोति।" [ब्रा० का० १ प्र० ६ अ० १०] इति॥

कल्पः—"अवाम्ब रुद्रमदिमहीति यजमानो जपति" इति।

पाठस्तु—

अवाम्ब रुद्रमदिमह्यव देवं त्र्यम्बकम्। यथा
नः श्रेयसः करद्यथा नो वस्यसः करद्यथा नः
पशुमतः करद्यथा नो व्यवसाययात्।, इति।

हेऽम्ब पार्वति रुद्रमुद्दिश्यावादिमहि पुरोडाशावदानमकार्ष्म। त्र्यम्ब-

कानि नेत्राणि यस्यासौ त्र्यम्बकस्तमुद्दिश्यावादिमहि। आदरार्थं पुनर्वचनम्। किमर्थमवदानं कृतमित्युच्यते। असौ रुद्रो नोऽस्माञ्श्रेयसोऽध्ययनादिभिः श्रेष्ठान्यथा करत्करोति, वस्यसो वसुमत्तमान्यथा करोति, पशुमतो गवाश्वादियुक्तान्यथा करोति, व्यवसाययाद्व्यवसाययति शास्त्रार्थनिश्चययुक्तान्यथा करोति तदर्थमवदानं कृतम्॥

यथा नः श्रेयस इत्याद्यभिधानान्मन्त्रस्याऽऽशीःपरत्वं दर्शयति—

"अवाम्ब रुद्रमादिमहीत्याह। आशिषमेवैतामाशास्ते (४)।" [ब्रा० का० १ प्र० ६ अ० १०] इति॥

कल्पः—"त्र्यम्बकं यजामह इति त्रिः प्रदक्षिणमग्निं पर्येति" इति।

पाठस्तु—

त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम्। उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय माऽमृतात्।, इति।

शोभनः शरीरगन्धः पुण्यगन्धो वा यस्यासौ सुगन्धिः। "यथा वृक्षस्य संपुष्पितस्य दूराद्गन्धो वात्येवं पुण्यस्य कर्मणो दूराद्गन्धो वाति" इति श्रुतेः। पुष्टिं शरीरधनादिविषयां वर्धयतीति पुष्टिवर्धनस्तादृशं त्र्यम्बकं यजामहे पूजयामः। लोके यथोर्वारुकफलानि बन्धनाद्वृन्तात्स्वयमेव मुच्यन्ते तद्वदहं त्र्यम्बकप्रसादेन मृत्योर्मुक्षीय मोचनयुक्तो भूयासम्। अमृताच्चिरजीवितात्स्वर्गाद्वा मा मुक्षीय॥

चतुर्थपादार्थ (र्थे) मन्त्रस्य तात्पर्यातिशयं दर्शयति—

"त्र्यम्बकं यजामह इत्याह। मृत्योर्मुक्षीय माऽमृतादिति वावैतदाह।" [ब्रा० का० १ प्र० ६ अ० १०] इति।

यजमानो यजामह इति यदाह, एतद्वचनं मृत्योर्मुक्षीयेत्येवाऽऽह मोचन एव तात्पर्यं तच्छेषत्वेनान्यदित्यर्थः॥

यदुक्तमापस्तम्बेन—"ऊर्ध्वान्पुरोडाशानुदस्य प्रतिलभ्य त्र्यम्बकं यजामह इति यजमानस्याञ्जलौ समोप्य भगः स्थ भगस्य वो लिप्सीयेत्यपादायैतेनैव कल्पेन त्रिः समावर्तयेयुः" इति, तदेतत्सर्वमभिप्रेत्य सर्वेषां पुरुषाणां हस्ते स्थितस्य पुरोडाशस्योत्क्षेपणं विधत्ते—

"उत्किरन्ति। भगस्य लीप्सन्ते।" [ब्रा० का० १ प्र० ६ अ० १०] इति।

१ क. °पादम°। २ ख. °त्वेन यजनमित्य°। ३ घ. ङ. च. भगो वो लप्सी°। ४ ख. वो लप्सी°। ५ ख. °वपेयुः।

यदेतत्पिण्डानामुपरि क्षेपणं तेन सौभाग्याभिमानिनो भगनामकस्य देवस्य सकाशादेतान्पुरोडाशाल्लँब्धुमिच्छन्ति । अत एवोत्क्षिप्तः पुनरञ्जलौ पतति ॥

कल्पः—"तान्मूते समावपन्ति मूतयोर्मूतेषु वैष ते रुद्र भाग इति वृक्ष आसजन्ति वृक्षयोर्वृक्षेषु वाऽपि वा मूतयोः समोप्याविवधं कृत्वा शुष्के स्थाणौ वल्मीकवपायां वाऽवधाय" इति ।

पाठस्तु—

एष ते रुद्र भागस्तं जुषस्व तेनाव-
सेन परो मूजवतोऽतीहि, इति ।

हे रुद्र, एष वृक्षादौ सज्यमानः पुरोडाशसंघस्तव भागस्तं सेवस्व । अवसेन पाथेयरूपतया तव रक्षकेणानेन भागेन युक्तो मूजवत एतन्नामकत्वेन प्रसिद्धात्पर्वतात्परः परभागे वर्तमानोऽतीह्यतिक्रम्य गच्छ ॥

विधत्ते—

"मूते कृत्वा सजन्ति । यथा जनं यतेऽवसं करोति । तादृगेव तत् ।" [ ब्रा० का० १ प्र० ६ अ० १० ] इति ।

यथा लोके दूरदेशवर्तिनं बन्धुजनं प्रति गच्छते पुरुषायावसं रक्षकं पाथेयं करोति तद्वृक्षाग्रे पुरोडाशसञ्जनं तादृगेव भवति ॥

मन्त्रे भागनिर्देशो रुद्रस्य निःशेषेण विसर्जनार्थ इति दर्शयति—

"एष ते रुद्र भाग इत्याह निरवत्त्यै ।" [ ब्रा० का० १ प्र० ६ अ० १० ] इति ॥

अवततधन्वा पिनाकहस्तः कृत्तिवासाः ॥

कल्पः—"अवततधन्वा पिनाकहस्तः कृत्तिवासोमिति त्रिरवताम्यन्ति" इति ।

प्राणायामत्रयं कुर्वन्तीत्यर्थः । ओमित्यनेन वाक्यशेषः पूरितः । अस्मद्विरोधिनं पाप्मानं हन्तुमयं रुद्रः पिनाकनामकं धनुर्हस्ते गृहीत्वाऽवततधन्वा ज्याकर्षणेन विस्तारितधनुष्कः कृत्तिवासाश्चर्मवसन ॐ भवतु । अथ वाऽस्मद्विषयेऽवततधन्वाऽऽरोपितमौर्वीकधनुर्युक्तो भवतु ॥

चतुष्पथप्रत्यागमनादीन्क्रमेण विधत्ते—

"अप्रतीक्षमायन्ति । अपः परिषिञ्चति । रुद्रस्यान्तर्हित्यै । प्र वा एतेऽस्माल्लोकाच्च्यवन्ते । ये त्र्यम्बकैश्चरन्ति । आदित्यं चरुं पुनरेत्य निर्वपति ।

---

१ क. ख. घ. ङ. च. °जति वृ° । २ ख. ङ. च. तद्वृ° ।

( राजसूयविषयाणां शुनासीर्येन्द्रतुरीयेतिकर्मद्वयपञ्चेध्मीयमन्त्रापामार्गहोममन्त्राणामभिधानम् )

इयं वा अदितिः । अस्यामेव प्रतितिष्ठन्ति ( ५ ) । " [ ब्रा० का० १ प्र० ६ अ० १० ] इति ॥

अत्र विनियोगसंग्रहः—

" स्वामी यावन्त इत्याह पशू मूते समावपेत् ।
एक इत्युल्मुकं नीत्वाऽऽखुस्त आखूत्करे हविः ॥ १ ॥
क्षिपेदेषोऽर्धहोमः स्याद्बे सुभे परिषिञ्चति ।
अवाम्बेति जपेत्स्वामी त्र्यम्बकं[1] परियन्ति ते ॥ २ ॥
एषोऽवस्थाप्य तच्छेषान्मूते बध्नाति शाखिनि ।
अवत श्वासनियमो मन्त्रा एकादश स्मृताः ॥ ३ ॥ " इति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये प्रथमकाण्डेऽष्टमप्रपाठके
षष्ठोऽनुवाकः ॥ ६ ॥

---

( अथ प्रथमाष्टके सप्तमप्रपाठके सप्तमोऽनुवाकः । )

---

ऐन्द्राग्नं द्वादशकपालं वैश्वदेवं चरुमिन्द्राय शुनासीराय पुरोडाशं द्वादशकपालं वायव्यं पयः सौर्यमेककपालं द्वादशगवꣳ सीरं दक्षिणाऽऽग्नेयमष्टाकपालं निर्वपति रौद्रं गावीधुकं चरुमैन्द्रं दधि वारुणं यवमयं चरुं वहिनी धेनुर्दक्षिणा ये देवाः पुरःसदोऽग्निनेत्रा दक्षिणसदो यमनेत्राः पश्चात्सदः सवितृनेत्रा उत्तरसदो वरुणनेत्रा उपरिषदो बृहस्पतिनेत्रा रक्षोहणस्ते नः पान्तु ते नोऽवन्तु तेभ्यः ( १ ) नम-

---

१ क. ख. घ. च. 'मी त्रियम्ब प' ।

स्तेभ्यः स्वाहा समूढꣳ रक्षः संदग्धꣳ रक्षं इद-
महꣳ रक्षोऽभि सं दहाम्यग्नये रक्षोघ्ने स्वाहां
यमायं सवित्रे वरुणाय बृहस्पतये दुवस्वते
रक्षोघ्ने स्वाहां प्रष्टिवाही रथो दक्षिणा देवस्यं
त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो
हस्ताभ्याꣳ रक्षसो वधं जुहोमि हतꣳ रक्षोऽ-
वधिष्म रक्षो यद्वस्ते तद्दक्षिणा ( २ ) ॥

( तेभ्यः पञ्चचत्वारिꣳ शच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टकेऽ-
ष्टमप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

( अथ प्रथमाष्टकेऽष्टमप्रपाठके सप्तमोऽनुवाकः । )

---

ऐन्द्राग्नमित्यैन्द्र—अग्नम् । द्वादशकपालमिति द्वादश—कपालम् । वैश्वदेवमिति वैश्व—देवम् । चरुम् । इन्द्राय । शुनासीराय । पुरोडाशम् । द्वादशकपालमिति द्वादश—कपालम् । वायव्यम् । पयः । सौर्यम् । एककपालमित्येक—कपालम् । द्वादशगवमिति द्वादश—गवम् । सीरम् । दक्षिणा । आग्नेयम् । अष्टाकपालमित्यष्टा—कपालम् । निरिति । वपति । रौद्रम् । गावीधुकम् । चरुम् । ऐन्द्रम् । दधि । वारुणम् । यवमयमिति यव—मयम् । चरु-

म्। वहिनी। धेनुः। दक्षिणा। ये। देवाः। पुरःसद इति पुरः—सदः। अग्निनेत्रा इत्यग्नि—नेत्राः। दक्षिणसद इति दक्षिण—सदः। यमनेत्रा इति यम—नेत्राः। पश्चात्सद इति पश्चात्—सदः। सवितृनेत्रा इति सवितृ—नेत्राः। उत्तरसद इत्युत्तर—सदः। वरुणनेत्रा इति वरुण—नेत्राः। उपरिषद इत्युपरि—सदः। बृहस्पतिनेत्रा इति बृहस्पति—नेत्राः। रक्षोहण इति रक्षः—हनः। ते। नः। पान्तु। ते। नः। अवन्तु। तेभ्यः (१)। नमः। तेभ्यः। स्वाहा। समूढमिति सम्—ऊढम्। रक्षः। संदग्धमिति सं—दग्धम्। रक्षः। इदम्। अहम्। रक्षः। अभि। समिति। दहामि। अग्नये। रक्षोघ्न इति रक्षः—घ्ने। स्वाहा। यमाय। सवित्रे। वरुणाय। बृहस्पतये। दुवस्वते। रक्षोघ्न इति रक्षः—घ्ने। स्वाहा। प्रष्टिवाहीति प्रष्टि—वाही। रथः। दक्षिणा। देवस्य। त्वा। सवितुः। प्रसव इति प्रसवे। अश्विनोः। बाहुभ्यामिति बाहु—भ्याम्। पूष्णः। हस्ताभ्याम्। रक्षसः। वधम्। जुहोमि। हतम्। रक्षः। अवधिष्म। रक्षः। यत्। वस्ते। तत्। दक्षिणा (२)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टकेऽष्टमप्रपाठके सप्तमोऽनुवाकः॥ ७॥

( राजसूयविषयाणां शुनासीर्यैन्द्रतुरीयेतिकर्मद्वयपञ्चेध्मीयमन्त्रापामार्गहोममन्त्राणामभिधानम् )
( अथ प्रथमकाण्डेऽष्टमप्रपाठके सप्तमोऽनुवाकः । )

---

षष्ठे साकमेधाः समापिताः । सप्तमे शुनासीर्यमिन्द्रतूर्यं ( तुरीयं ) चेति कर्मद्वयं पञ्चेध्मीयमन्त्रा अपामार्गहोममन्त्राश्चोच्यन्ते ।

तत्र शुनासीर्यहवींषि विधत्ते—

ऐन्द्राग्नं द्वादशकपालं वैश्वदेवं चरु-
मिन्द्राय शुनासीराय पुरोडाशं द्वादश-
कपालं वायव्यं पयः सौर्यमेककपालं
द्वादशगवꣳ सीरं दक्षिणा , इति ।

शुनासीराय शुनो वायुः सीर आदित्यस्ताभ्यां युक्तः शुनासीरः । द्वादशभिर्बलीवर्दैरुह्यमानं सीरं लाङ्गलम् ॥

अत्र वैश्वदेवगतानामाग्नेयादीनां पञ्चानां हविषां ब्राह्मणमनुब्राह्मणं चातिदिशति—

" एतद्ब्राह्मणान्येव पञ्च हवीꣳषि । " [ ब्रा० का० १ प्र० ७ अ० १ ] इति ।

अथोपदिश्यमानेषु पञ्चस्वैन्द्राग्नवैश्वदेवयोः पूर्वमेव प्रशस्तत्वादवशिष्टानि त्रीणि प्रशंसति । अथ वा तयोर्विकल्पमभिप्रेत्य तदभावपक्षानुसारेण तावुपेक्ष्यावशिष्टान्येव प्रशंसति—

" अथेन्द्राय शुनासीराय पुरोडाशं द्वादशकपालं निर्वपति । संवत्सरो वा इन्द्रःशुनासीरः । संवत्सरेणैवास्मा अन्नमवरुन्धे । वायव्यं पयो भवति । वायुर्वै वृष्ट्यै प्रदापयिता । स एवास्मै वृष्टिं प्रदापयति । सौर्य एककपालो भवति । सूर्येण वा अमुष्मिँल्लोके वृष्टिर्धृता । स एवास्मै वृष्टिं नियच्छति ( १ ) । द्वादशगवꣳ सीरं दक्षिणा समृद्ध्यै । " [ ब्रा० का० १ प्र० ७ अ० १ ] इति ।

अस्य च शुनासीर्यस्य कालं बौधायन आह—" अथातश्चतुर्षु मासेषु शुनासीरीयहविर्भिर्यक्ष्यमाणो भवति " इति । तत्र पूर्वेभ्यस्त्रिभ्यः पर्वभ्य ऊर्ध्वं प्रत्येकं मासचतुष्टयमतिवाह्य क्रियमाणमिदं संवत्सरादूर्ध्वं भव-

---

१ क. घ. 'श्चतृषु मा' । च. 'श्चतस्रषु मा' ।

र्तते। तदेतदभिप्रेत्य संवत्सरो वा इन्द्राशुनासीर इत्युक्तम्। वायुसूर्याभ्यां युक्त इन्द्रः संवत्सरे समाप्ते प्राप्तत्वात्संवत्सर इत्युच्यते। वायोः पुरोवातरूपेण वृष्टिप्रदापयितृत्वम्। "अग्नौ प्रास्ताऽऽहुतिः सम्यगादित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिः" इति स्मरणात्सूर्यस्य स्वर्गे वृष्टिधारकत्वम्॥

अथेन्द्रतुरीयस्य हवींषि विधत्ते—

आग्नेयमष्टाकपालं निर्वपति रौद्रं गावीधुकं चरुमैन्द्रं दधि वारुणं यवमयं चरुं वहिनी धेनुर्दक्षिणा, इति।

गावीधुकमरण्यधान्यविशेषनिष्पन्नम्। पृष्ठे भारं वहतीति वहिनी॥

इन्द्रतूर्यं ( तुरीयं ) विधातुं प्रस्तौति—

"देवासुराः संयत्ता आसन्। ते देवा अग्निमब्रुवन्। त्वया वीरेणासुरानभिभवामेति। सोऽब्रवीत्। त्रेधाऽहमात्मानं विकरिष्य इति। स त्रेधाऽऽत्मानं व्यकुरुत। अग्निं तृतीयम्। रुद्रं तृतीयम्। वरुणं तृतीयम् ( २ )। सोऽब्रवीत्। क इदं तुरीयमिति। अहमितीन्द्रोऽब्रवीत्। सं तु सृजावहा इति। तौ समसृजेताम्। स इन्द्रस्तुरीयमभवत्। यदिन्द्रस्तुरीयमभवत्। तदिन्द्रतुरीयस्येन्द्रतुरीयत्वम्। ततो वै देवा व्यजयन्त।" [ ब्रा० का० १ प्र० ७ अ० १ ] इति।

वीरत्वसिद्धये शरीरत्रयरूपेण विकारः। स त्रेधा विकृतोऽग्निरिन्द्रं प्रति पप्रच्छ—मयेदं रूपत्रयं युद्धसमर्थं संपादितम्। अथ कोऽन्य इदं चतुर्थं रूपं विजयसमर्थं करिष्यतीति। अहमेव करिष्यामीतीन्द्रोऽब्रवीत्तत्त्वया तथा क्रियतां किं त्वावां युद्धविजयक्षमौ संसृष्टौ भवावेति। इन्द्र एव तुरीयो यस्मिन्कर्मणि तत्कर्मेन्द्रतुरीयम्। अत्रान्यदीयरूपापेक्षया तुरीयत्वमनुष्ठाने तु पाठक्रमेण वरुणस्तुरीयः॥

विधत्ते—

"यदिन्द्रतुरीयं निरुप्यते विजित्यै ( ३ )। [ ब्रा० का० १ प्र० ७ अ० १ ] इति॥

चतुर्देवप्रियांशसंपादनेन दक्षिणां प्रशंसति—

"वहिनी धेनुर्दक्षिणा। यद्वहिनी। तेनाऽऽग्नेयी। यद्गौः। तेन रौद्री। यद्धेनुः। तेनैन्द्री। यत्स्त्री सती दान्ता। तेन वारुणी समृद्ध्यै।" [ ब्रा० का० १ प्र० ७ अ० १ ] इति।

गोत्वं जातिः, धेनुत्वं नवप्रसवत्वम् । अस्य चेन्द्रतुरीयस्य कर्मणः शुनासीर्यदिन एवानुष्ठानमापस्तम्बो दर्शयति—" ततश्चतुर्हविषेन्द्रतुरीयेण यजते " इति ॥

इन्द्रतुरीयविधानादूर्ध्वं ये देवाः पुरःसद इत्यादयो मन्त्रा आम्नातास्तेषां विनियोगमापस्तम्बो दर्शयति—" एतस्या एव रात्रेर्निशायां पञ्चेध्मीयेन यजते चतुर्धाऽऽहवनीयं प्रतिदिशं व्युद्धृत्य मध्ये पञ्चमं कृत्वा पृथगिध्मानुपसमाधाय जुह्वां पञ्चगृहीतं गृहीत्वा ये देवाः पुरःसद इत्येतैर्यथालिङ्गं जुहोति मध्ये पञ्चमेन समूढ९ रक्ष इति मध्य इध्मानुपसमु(मु)ह्यैकधोपसमाधायापरं पञ्चगृहीतं गृहीत्वाऽग्नये रक्षोघ्ने स्वाहेत्युत्तराः पञ्चाऽऽहुतीर्जुहोति प्रष्टिवाही रथो दक्षिणा " इति ।

ये देवा इत्यादिमन्त्रपाठस्तु—

ये देवाः पुरःसदोऽग्निनेत्रा दक्षिणसदो यमनेत्राः
पश्चात्सदः सवितृनेत्रा उत्तरसदो वरुणनेत्रा
उपरिषदो बृहस्पतिनेत्रा रक्षोहणस्ते नः पान्तु
ते नोऽवन्तु तेभ्यो नमस्तेभ्यः स्वाहा, इति ।

पुरःसदः पूर्वदिग्वर्तिनोऽग्निनेत्रा अग्निप्रमुखा ये देवा रक्षोहणो राक्षसघ्नाः सन्ति ते देवा नोऽस्मान्रक्षोनिवारणेन पान्तु । पुनरपि ते देवा नोऽस्मान्कर्मानुष्ठानेनावन्तु । तेभ्यो देवेभ्यो नमस्कारोऽस्तु । तेभ्य इदं हव्यं स्वाहुतमस्तु । दक्षिणसदो यमनेत्रा इत्यस्य मन्त्रस्याऽऽदौ ये देवा इत्यनुषज्यते । अन्ते च रक्षोहण इत्यादिकमनुषज्यते । एवं तृतीयचतुर्थयोर्द्रष्टव्यम् । पञ्चमे तु ये देवा इत्येतावदेवानुषज्यते । प्रथमे तु रक्षोहण इत्यादिकमेवानुषज्यते ॥

तदेतत्पञ्चेध्मीयं विधातुं प्रस्तौति—

" प्रजापतिर्यज्ञमसृजत ( ४ ) । त९ सृष्ट९ रक्षा९स्यजिघा९सन् । स एताः प्रजापतिरात्मनो देवता निरमिमीत । ताभिर्वै स दिग्भ्यो रक्षा९सि प्राणुदत । " [ ब्रा० का० १ प्र० ७ अ० १ ] इति ॥

विधत्ते—

" यत्पञ्चावत्तीयं जुहोति । दिग्भ्य एव तद्यजमानो रक्षा९सि प्रणुदते । " [ ब्रा० का० १ प्र० ७ अ० १ ] इति ।

पञ्चकृत्वोऽवदाय संपादितमाज्यं पञ्चावत्तीयम् ॥

समूढमित्यादिमन्त्रपाठस्तु—

समूढꣳ रक्षः संदग्धꣳ रक्ष इद-
महꣳ रक्षोऽभि सं दहामि, इति।

रक्षोऽस्मत्प्रतिकूलं राक्षसजातं समूढं नाशयितुं सम्यगेकीकृतं संदग्धं च। पुनरपीदमिदानीमहं रक्षोऽभि दग्धस्य रक्षसोऽभितः सर्वतोऽवस्थितांस्तत्तद्-नुचरान्सम्यग्दहामि ॥

एतन्मन्त्रपाठेन तस्य सिद्धिं दर्शयति—

" समूढꣳ रक्षः संदग्धꣳ रक्ष इत्याह। रक्षाꣳस्येव संदहति।" [ ब्रा० का० १ प्र० ७ अ० १ ] इति ॥

अग्नये रक्षोघ्न इतिमन्त्रपाठस्तु—

अग्नये रक्षोघ्ने स्वाहा यमाय सवित्रे वरुणाय
बृहस्पतये दुवस्वते रक्षोघ्ने स्वाहा, इति।

यमायेत्यादिषु रक्षोघ्ने स्वाहेत्यनुषज्यते। बृहस्पतेर्दुवस्वत इति विशेषणं, परिचर्यावदि(त इ)त्यर्थः ॥

अग्नियमादयो जितवन्त इति युक्तस्तद्धोम इति दर्शयति—

" अग्नये रक्षोघ्ने स्वाहेत्याह। देवताभ्य एव विजिग्यानाभ्यो भागधेयं करोति " [ ब्रा० का० १ प्र० ७ अ० १ ] इति।

विजिग्यानाभ्यो विशेषेण जितवतीभ्यः ॥

देयं रथं विधत्ते—

प्रष्टिवाही रथो दक्षिणा, इति।

त्रिपादाधारवदश्वत्रयेणोह्यमानः प्रष्टिवाही ॥

समृद्धिहेतुत्वेन तं प्रशंसति—

" प्रष्टिवाही रथो दक्षिणा समृद्ध्यै ( ५ )।" [ ब्रा० का० १ प्र० ७ अ० १ ] इति ॥

अपामार्गहोममन्त्राणां विनियोगमापस्तम्ब आह—" व्युष्टायां पुराऽग्निहो-त्रादपामार्गहोमेन चरन्ति, अपां न्ययनादपामार्गानाहृत्य तान्सक्तून्कृत्वा दाक्षि-णाग्नेरेकोल्मुकं धूपायद्धरति, उत्तरपूर्वमवान्तरदेशं गत्वा स्वकृत इरिणे प्रदरे वोपसमाधाय देवस्य त्वेत्यनुद्रुत्य रक्षसो वधं जुहोमीति पर्णमयेन स्रुवेण जुहोति, हतꣳ रक्ष इति स्रुवमनुप्रहृत्यावधिष्म रक्ष इत्युपतिष्ठते " इति।

मन्त्रपाठस्तु—

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बा-
हुभ्यां पूष्णो हस्ताभ्याꣳ रक्षसो वधं
जुहोमि हतꣳ रक्षोऽवधिष्म रक्षः, इति।

एते त्रयो मन्त्राः स्पष्टार्थाः। तत्र रक्षसो वधमुद्दिश्येति विशेषः॥

होमकाले यद्वस्त्रमाच्छादयति तस्य दानं विधत्ते—

यद्वस्ते तद्दक्षिणा॥, इति॥

अपामार्गहोमं विधातुं प्रस्तौति—

"इन्द्रो वृत्रꣳ हत्वा। असुरान्पराभाव्य। नमुचिमासुरं नालभत। तꣳ शच्याऽगृह्णात्। तौ समलभेताम्। सोऽस्मादभिशुनतरोऽभवत्। सोऽब्रवीत्। संधाꣳ संदधावहै। अथ त्वाऽवस्रक्ष्यामि। न मा शुष्केण नाऽऽर्द्रेण हनः (६)। न दिवा न नक्तमिति। स एतमपां फेनमसिञ्चत्। न वा एष शुष्को नाऽऽर्द्रो व्युष्टाऽऽसीत्। अनुदितः सूर्यः। न वा एतद्दिवा न नक्तम्। तस्यैतस्मिँल्लोके। अपां फेनेन शिर उदवर्तयत्। तदेनमन्ववर्तत। मित्रध्रुगिति (७)। स एतानपामार्गानजनयत्। तानजुहोत्। तैर्वै स रक्षाꣳस्यपाहत।" [ब्रा० का० १ प्र० ७ अ० १] इति।

इन्द्रो वृत्रवधादूर्ध्वमन्यानसुरान्परिभूतान्कृत्वा नमुचिनामानमसुरं नालभत न पराभवितवान्। अपराभूतं तं नमुचिं शच्या स्वशक्त्याऽगृह्णात्। यथा युध्यन्नेको मल्लः सकृदशक्तोऽपि धैर्येण शक्तिमापाद्य हस्ताभ्यां प्रतिमल्लमालिङ्ग्य गृह्णाति तद्वत्। ततस्ताविन्द्रनमुची समलभेतां परस्परोपमर्दनपरौ संरब्धौ हस्ताभ्यां पादाभ्यामन्योन्यं दृढमवष्टभ्य मल्लद्वयवद्भूमौ पतितौ। तदानीं स नमुचिरस्मादिन्द्रादभिशुनतरोऽभितो हस्तयोः पादयोश्च बलवत्तरोऽभूत्। ततो मुमूर्षुमिन्द्रमवलोक्य कृपालुरिदमब्रवीत्—भो इन्द्र विगृह्यमाणराजद्वयवदावां परस्पराङ्गीकारेण संधिं करवाव। अथ त्वां मुमूर्षुमवस्रक्ष्यामि मोक्षयिष्यामीति। ततः प्रहारसाधने काले च समयमेवं कृतवान्—भो इन्द्र शुष्केणाऽऽर्द्रेण वा काष्ठादिना साधनेन मां न हनो मां मा वधीर्दिवा रात्रौ च मा वधीरिति। इन्द्रश्च तं समयमङ्गीकृत्य तेन मोचितो धैर्येण स्वस्थो भूत्वा समयानुसारेण तं नमुचिं हन्तुमपां फेनमायुधं भावयित्वा तस्मिन्नमुचावसिञ्चत्। न चैवं सति

१ ख. °ति शे°। २ ख. °स्परमङ्गी°। ३ ख. घ. ङ. च. त्वां। ४ क. घ. ङ. फेनेनाऽऽयु°।

समयलोपः शङ्कनीयः । यत एष फेनो नैव शुष्कः, स्पर्शे सति काठिन्याप्रतीतेः । नाप्यार्द्रस्तेन वस्त्रादेरक्लेदनात् । कालं च समयानुसारेण संपादयामास । यदा रात्रिर्व्युष्टा प्रभाताऽऽसीत्सूर्यश्चानुदितस्तदानीमन्धकाराभावान्न रात्रित्वं सूर्योदयाभावाच्च नैतदहः । एतस्मिँल्लोके रात्रेरह्नश्च संधिकाले तस्य नमुचेः शिरोऽपां फेनेनोदवर्तयदुदच्छिनत् । तच्चोच्छिन्नं शिरो हे मित्रद्रोहिन्निन्द्रेत्युच्चारयदेनमिन्द्रमन्ववर्तत सर्वदाऽनुगतमभूत् । ततस्तच्छिरो वारयितुं स इन्द्र एताँल्लोकप्रसिद्धानपामार्गानजनयत् । तानुत्पन्नानजुहोत् । तैरेव हुतैः स इन्द्रो नमुचेः शिरःसहितानि सर्वाण्यवशिष्टानि रक्षांसि हतवान् ॥

विधत्ते—

" यदपामार्गहोमो भवति । रक्षसामपहत्यै । " [ ब्रा० का० १ प्र० ७ अ० १ ] इति ॥

अङ्गविधीन्मन्त्रव्याख्यानं च क्रमेण दर्शयति—

" एकोल्मुकेन यन्ति । तद्धि रक्षसां भागधेयम् । इमां दिशं यन्ति । एषा वै रक्षसां दिक् । स्वायामेव दिशि रक्षाꣳसि हन्ति ( ८ ) । स्वकृत इरिणे जुहोति प्रदरे वा । एतद्वै रक्षसामायतनम् । स्व एवाऽऽयतने रक्षाꣳसि हन्ति । पर्णमयेन स्रुवेण जुहोति । ब्रह्म वै पर्णः । ब्रह्मणैव रक्षाꣳसि हन्ति । देवस्य त्वा सवितुः प्रसव इत्याह । सवितृप्रसूत एव रक्षाꣳसि हन्ति । हतꣳ रक्षोऽवधिष्म रक्ष इत्याह । रक्षसाꣳ स्तृत्यै । यद्वस्ते तद्दक्षिणा निरवत्त्यै । अप्रतीक्षमायन्ति । रक्षसामन्तर्हित्यै ( ९ ) । " [ ब्रा० का० १ प्र० ७ अ० १ ] इति ।

इमां दिशं वायवीम् । स्तृत्यै हननाय । निरवत्त्यै भागप्रदानेन निःसारणाय । स्पष्टमन्यत् । अत्र शुनासीर्येन्द्रतुरीयपञ्चेध्मीयापामार्गहोमानां चतुर्णां कर्मभेदेऽप्येकस्मिन्नेव दिने कर्तव्यत्वादेकेनानुवाकेनोपसंग्रहः ॥

अत्र विनियोगसंग्रहः—

" पञ्चेध्मवह्नौ जुहुयाद्ये देवा इति पञ्चभिः ।
समूहन्तीध्मान्समिति पञ्चहोमस्तथाऽग्नये ॥ १ ॥
निशि हुत्वा सक्तुहोमः प्रातर्देवेति मन्त्रतः ।
हतं स्रुवप्रहरणमवधिष्मेति चोत्थितिः ॥
अनुवाके सप्तमेऽस्मिन्नुक्ता मन्त्राश्चतुर्दश ॥ २ ॥ " इति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डेऽष्टमप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

( राजसूयविषयदेविकादिकर्मवद्वकाभिधानम् )
( अथ प्रथमाष्टकेऽष्टमप्रपाठकेऽष्टमोऽनुवाकः । )

धात्रे पुरोडाशं द्वादशकपालं निर्वपत्यनुमत्यै चरुꣳ राकायै चरुꣳ सिनीवाल्यै चरुं कुह्वै चरुं मिथुनौ गावौ दक्षिणाऽऽग्नावैष्णवमेकादशकपालं निर्वपत्यैन्द्रावैष्णवमेकादशकपालं वैष्णवं त्रिकपालं वामनो वही दक्षिणाऽग्नीषोमीयमेकादशकपालं निर्वपतीन्द्रासोमीयमेकादशकपालꣳ सौम्यं चरुं बभ्रुर्दक्षिणा सोमापौष्णं चरुं निर्वपत्यैन्द्रापौष्णं चरुं पौष्णं चरुꣳ श्यामो दक्षिणा वैश्वानरं द्वादशकपालं निर्वपति हिरण्यं दक्षिणा वारुणं यवमयं चरुमश्वो दक्षिणा ( १ ) ॥

( वैश्वानरं द्वादशकपालं निरष्टौ च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टकेऽष्टमप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

( अथ प्रथमाष्टकेऽष्टमप्रपाठकेऽष्टमोऽनुवाकः । )

धात्रे । पुरोडाशम् । द्वादशकपालमिति द्वादश—कपालम् । निरिति । वपति । अनुमत्या इत्यनु—मत्यै । चरुम् । राकायै । चरुम् । सिनीवाल्यै । चरुम् । कुह्वै । चरुम् । मिथुनौ । गावौ । दक्षिणा ।

( राजसूयविषयदेविकादिकर्मषट्काभिधानम् )

आग्नावैष्णवमित्याग्ना—वैष्णवम् । एकादशकपालमित्येकादश—कपालम् । निरिति । वपति । ऐन्द्रावैष्णवमित्यैन्द्रा—वैष्णवम् । एकादशकपालमित्येकादश—कपालम् । वैष्णवम् । त्रिकपालमिति त्रि—कपालम् । वामनः । वही । दक्षिणा । अग्नीषोमीयमित्यग्नी—सोमीयम् । एकादशकपालमित्येकादश—कपालम् । निरिति । वपति । इन्द्रासोमीयमितीन्द्रा—सोमीयम् । एकादशकपालमित्येकादश—कपालम् । सौम्यम् । चरुम् । बभ्रुः । दक्षिणा । सोमापौष्णमिति सोमा—पौष्णम् । चरुम् । निरिति। वपति । ऐन्द्रापौष्णमित्यैन्द्रा—पौष्णम् । चरुम् । पौष्णम् । चरुम् । श्यामः । दक्षिणा । वैश्वानरम् । द्वादशकपालमिति द्वादश—कपालम् । निरिति । वपति । हिरण्यम् । दक्षिणा । वारुणम् । यवमयमिति यव—मयम् । चरुम् । अश्वः । दक्षिणा ( १ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टकेऽष्टमप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

( अथ प्रथमकाण्डेऽष्टमप्रपाठकेऽष्टमोऽनुवाकः । )

---

सप्तमेऽनुवाके शुनासीर्यादिकर्मचतुष्टयमेकदिनकर्तव्यमुक्तम् । अष्टमे देविकादिकर्मषट्कमेकदिनकर्तव्यमुच्यते ।

तत्राऽऽदौ देविकानामकानि पञ्च हवींषि विधत्ते—

धात्रे पुरोडाशं द्वादशकपालं निर्वपत्यनुमत्यै चरुꣳ राकायै चरुꣳ सिनीवाल्यै चरुं कुह्वै चरुं मिथुनौ गावौ दक्षिणा, इति ॥

अत्र धात्रादीन्पञ्च देवान्दक्षिणां च प्रजोत्पत्त्युपयोगेन प्रशंसति—

"धात्रे पुरोडाशं द्वादशकपालं निर्वपति । संवत्सरो वै धाता । संवत्सरेणैवास्मै प्रजाः प्रजनयति । अन्वेवास्मा अनुमतिर्मन्यते । राते राका । प्र सिनीवाली जनयति । प्रजास्वेव प्रजातासु कुह्वा वाचं दधाति । मिथुनौ गावौ दक्षिणा समृद्ध्यै ।" [ ब्रा० का० १ प्र० ७ अ० २ ] इति ।

संवत्सरकालस्वामी धाता गर्भधारणमारभ्य संवत्सरादर्वागेव प्रजोत्पत्तिं कारयति । अनुमतिदेवता यजमानार्थं प्रजोत्पत्तिमङ्गी करोति । राका तु पुत्रपुष्ट्यादिरूपं राते ददाति । सिनीवाली तद्रूपं गर्भं निःसारयति । कुहूदेवतयाऽध्वर्युः प्रजासु वाचमुच्चारयितुं सामर्थ्यं च दधाति ॥

अथ त्रिहविष्काणि त्रीणि कर्माण्येकैकहविष्के द्वे कर्मणी च क्रमेण विधत्ते—

आग्नावैष्णवमेकादशकपालं निर्वपत्यैन्द्रावैष्णवमेकादशकपालं वैष्णवं त्रिकपालं वामनो वही दक्षिणाऽग्नीषोमीयमेकादशकपालं निर्वपतीन्द्रासोमीयमेकादशकपालꣳ सौम्यं चरुं बभ्रुर्दक्षिणा सोमापौष्णं चरुं निर्वपत्यैन्द्रापौष्णं चरुं पौष्णं चरुꣳ श्यामो दक्षिणा वैश्वानरं द्वादशकपालं निर्वपति हिरण्यं दक्षिणा वारुणं यवमयं चरुमश्वो दक्षिणा ॥, इति ॥

बभ्रुः कपिलः ॥

प्रथमस्य त्रिहविष्कस्य देवता दक्षिणां च प्रशंसति—

"आग्नावैष्णवमेकादशकपालं निर्वपति । ऐन्द्रावैष्णवमेकादशकपालम् (१) । वैष्णवं त्रिकपालम् । वीर्यं वा अग्निः । वीर्यमिन्द्रः । वीर्यं विष्णुः । प्रजा एव प्रजाता वीर्ये प्रतिष्ठापयति । तस्मात्प्रजा वीर्यावतीः । वामन ऋषभो

(राजसूयविषयदेविकादिकर्मषट्काभिधानम्)

बही दक्षिणा। यद्बही। तेनाऽऽग्नेयः। यदृषभः (२)। तेनैन्द्रः। यद्वामनः। तेन वैष्णवः समृद्ध्यै।" [ब्रा० का० १ प्र० ७ अ० २] इति।

आग्नेयादीनां वीर्यप्रदत्वात्तद्रूपत्वम्। प्रजानां स्वस्वव्यापारसामर्थ्यं वीर्यम्। वहीत्यादीनामग्न्यादिप्रियत्वादाग्नेयादित्वम्॥

मध्यमस्य त्रिहविष्कस्य देवता दक्षिणां च प्रशंसति—

"अग्नीषोमीयमेकादशकपालं निर्वपति। इन्द्रासोमीयमेकादशकपालम्। सौम्यं चरुम्। सोमो वै रेतोधाः। अग्निः प्रजानां प्रजनयिता। वृद्धानामिन्द्रः प्रदापयिता। सोम एवास्मै रेतो दधाति (३)। अग्निः प्रजां प्रजनयति। वृद्धामिन्द्रः प्रयच्छति। बभ्रुर्दक्षिणा समृद्ध्यै।" [ब्रा० का० १ प्र० ७ अ० २] इति।

गर्भाशये निषिक्तं रेतो यथा बहिर्न निःसरति, यथा च न पूयति, तथा सोमो धारणसामर्थ्यं प्रयच्छति। धृतस्य च गर्भस्य पतनादिविघ्नं परिहृत्याग्निः प्रजा उत्पादयति। इन्द्रस्तूत्पन्नाः प्रजाः स्वस्वोचितगुणैरभिवृद्धा यथा भवन्ति तथा सामर्थ्यं प्रयच्छति॥

अन्त्यस्य त्रिहविष्कस्य देवता दक्षिणां च प्रशंसति—

"सोमापौष्णं चरुं निर्वपति। ऐन्द्रापौष्णं चरुम्। सोमो वै रेतोधाः। पूषा पशूनां प्रजनयिता। वृद्धानामिन्द्रः प्रदापयिता। सोम एवास्मै रेतो दधाति। पूषा पशून्प्रजनयति (४)। वृद्धानिन्द्रः प्रयच्छति। पौष्णश्चरुर्भवति। इयं वै पूषा। अस्यामेव प्रतितिष्ठति। श्यामो दक्षिणा समृद्ध्यै।" [ब्रा० का० १ प्र० ७ अ० २] इति।

आद्ये त्रिहविष्के व्यासक्तदेवतान्तःपाती यो विष्णुः स एवैकाकी वैष्णवं त्रिकपालमित्यत्रोच्यते, न त्वन्यः कश्चिदतः सहैव व्याख्यानं कृतम्। इह तु व्यासक्तदेवतान्तःपाती पूषा कश्चित्पोषकः पुरुषविशेषः। पौष्णचरौ तु भूमिः पूषा। अतो देवताभेदात्पृथग्व्याख्यानम्॥

एकहविष्के पञ्चमे कर्मणि देवतां दक्षिणां च प्रशंसति—

"बहु वै पुरुषोऽमेध्यमुपगच्छति। वैश्वानरं द्वादशकपालं निर्वपति। संवत्सरो वा अग्निर्वैश्वानरः। संवत्सरेणैवैनꣳ स्वदयति। हिरण्यं दक्षिणा (५)। पवित्रं वै हिरण्यम्। पुनात्येवैनम्।" [ब्रा०का०१प्र०७अ०२] इति।

अमेध्यत्वमशुचित्वं, तच्च बहुविधं भोजनादिकालेषु पुनः पुनः प्रवृत्तत्वात्। तत्र संवत्सरस्वामी वैश्वानरोऽग्निः संवत्सरकालेनैनं यजमानं स्वदयति मेध्यं

करोति। तत्रात्रेष्टिमात्रेण लभ्यते। हिरण्यस्योच्छिष्टादिसंस्पर्शेऽपि मृद्भाण्डवत्परित्यागाभावात्पवित्रत्वम् ॥

एकहविष्के षष्ठे कर्मणि देवतां [ दक्षिणां च ] प्रशंसति—

" बहु वै राजन्योऽनृतं करोति। उप जाम्यै हरते। जिनाति ब्राह्मणम्। वदत्यनृतम्। अनृते खलु वै क्रियमाणे वरुणो गृह्णाति । वारुणं यवमयं चरुं निर्वपति। वरुणपाशादेवैनं मुञ्चति। अश्वो दक्षिणा। वारुणो हि देवतयाऽश्वः समृद्ध्यै ( ६ )। " [ ब्रा० का० १ प्र० ७ अ० २ ] इति।

राजन्यः क्षत्रियो बहुविधमनृतमशास्त्रीयं करोति। तद्यथा—जाम्यै जायायै जायात्वं संपादयितुमुपहरते यस्यकस्यचिद्गृहमुपेत्य स्त्रियं हरति । ब्राह्मणं विद्याप्रसङ्गादिना जिनाति जयति न्यक्करोति। स्पष्टमन्यत्। प्रतिग्रहमन्त्रे वरुणायाश्वमित्याम्नातत्वादश्वस्य वारुणत्वम् ॥

अथ मीमांसा।

एकादशाध्यायस्य तृतीय(चतुर्थ)पादे चिन्तितम्—

" सोमापौष्णादिके तन्त्रमङ्गानामुत भिन्नता।
तन्त्रं फलैक्यतो मैवं दक्षिणाकर्तृभेदतः ॥ "

राजसूये श्रूयते—" सोमापौष्ण एकादशकपाल ऐन्द्रापौष्णश्चरुः पौष्णश्चरुः श्यामो दक्षिणा " इति। " आग्नावैष्णव एकादशकपाल ऐन्द्रापौष्ण( वैष्णव )श्चरुर्वैष्णवस्त्रिकपालो वामनो दक्षिणा " इति । तत्र द्वयोस्त्रिकयोस्तन्त्रेणानुष्ठानम्। कुतः। कृत्स्नस्य राजसूयस्य फलैकत्वेनैतदेकदेशयोरनयोरपि फलैक्यात् । न च दर्शपूर्णमासयोरिवात्र कालभेदोऽस्ति, येनात्रापि तथा शङ्क्येतेति प्राप्ते ब्रूमः—श्यामवामनयोर्दक्षिणयोर्भेदेन ताभ्यामानेतानां कर्तॄणां भेदादङ्गानि भिद्यन्ते ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डेऽष्टमप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

( अथ प्रथमाष्टकेऽष्टमप्रपाठके नवमोऽनुवाकः । )

---

## बार्हस्पत्यं चरुं निर्वपति ब्रह्मणो गृहे

---

१ ख. ङ. च. °नमतां क°।

शितिपृष्ठो दक्षिणैन्द्रमेकादशकपालꣳ राजन्यस्य गृह ऋषभो दक्षिणाऽऽदित्यं चरुं महिष्यै गृहे धेनुर्दक्षिणा नैर्ऋतं चरुं परिवृक्त्यै गृहे कृष्णानां व्रीहीणां नखनिर्भिन्नं कृष्णा कूटा दक्षिणाऽऽग्नेयमष्टाकपालꣳ सेनान्यो गृहे हिरण्यं दक्षिणा वारुणं दशकपालꣳ सूतस्य गृहे महानिरष्टो दक्षिणा मारुतꣳ सप्तकपालं ग्रामण्यो गृहे पृश्निर्दक्षिणा सावित्रं द्वादशकपालम् ( १ ) क्षत्तुर्गृह उपध्वस्तो दक्षिणाऽऽश्विनं द्विकपालꣳ संग्रहीतुर्गृहे संवात्यौ दक्षिणा पौष्णं चरुं भागदुघस्य गृहे श्यामो दक्षिणा रौद्रं गावीधुकं चरुमक्षावापस्य गृहे शबल उद्वारो दक्षिणेन्द्राय सुत्राम्णे पुरोडाशमेकादशकपालं प्रति निर्वपतीन्द्रायाꣳहोमुचेऽयं नो राजा वृत्रहा राजा भूत्वा वृत्रं वध्यान्मैत्राबार्हस्पत्यं भवति श्वेतायै श्वेतवत्सायै दुग्धे स्वयंमूर्ते स्वयंमथित आज्य आश्वत्थे ( २ ) पात्रे चतुःस्रक्तौ स्वयमवपन्नायै शाखायै कर्णाꣳश्चाकर्णाꣳश्च तण्डुलान्वि चिनुयाद्ये कर्णाः स पयसि बार्हस्पत्यो येऽ-

कर्णाः स आज्यें मैत्रः स्वयंकृता वेदिर्भवति स्वयंदिनं बर्हिः स्वयंकृत इध्मः सैव श्वेता श्वेतवत्सा दक्षिणा ( ३ ) ॥

( सावित्रं द्वादशकपालमाश्वत्थे त्रयंस्त्रिंशच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टकेऽष्टमप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

---

( अथ प्रथमाष्टकेऽष्टमप्रपाठके नवमोऽनुवाकः । )

---

बार्हस्पत्यम् । चरुम् । निरिति । वपति । ब्रह्मणः । गृहे । शितिपृष्ठ इति शिति—पृष्ठः । दक्षिणा । ऐन्द्रम् । एकादशकपालमित्येकादश—कपालम् । राजन्यंस्य । गृहे । ऋषभः । दक्षिणा । आदित्यम् । चरुम् । महिष्यै । गृहे । धेनुः । दक्षिणा । नैर्ऋतमिति नैः—ऋतम् । चरुम् । परिवृक्त्यां इति परि—वृक्त्यै । गृहे । कृष्णानाम् । व्रीहीणाम् । नखनिंभिन्नमिति नख—निर्भिन्नम् । कृष्णा । कूटा । दक्षिणा । आग्नेयम् । अष्टाकपालमित्यष्टा—कपालम् । सेनान्य इति सेना—न्यः । गृहे । हिरण्यम् । दक्षिणा । वारुणम् । दशकपालमिति दश—कपालम् । सूतस्य । गृहे । महानिरष्ट इति महा—नि-

( राजसूयविषयाणां रत्निहविषामभिधानम् )

रष्टः। दक्षिणा। मारुतम्। सप्तकपालमिति सप्त—कपालम्। ग्रामण्य इति ग्राम—न्यः। गृहे। पृश्निः। दक्षिणा। सावित्रम्। द्वादशकपालमिति द्वादश—कपालम् (१)। क्षत्तुः। गृहे। उपध्वस्त इत्युप—ध्वस्तः। दक्षिणा। आश्विनम्। द्विकपालमिति द्वि—कपालम्। संग्रहीतुरिति सं—ग्रहीतुः। गृहे। सवात्याविति स—वात्यौ। दक्षिणा। पौष्णम्। चरुम्। भागदुघस्येति भाग—दुघस्य। गृहे। श्यामः। दक्षिणा। रौद्रम्। गावीधुकम्। चरुम्। अक्षावापस्येत्यक्ष—आवापस्य। गृहे। शबलः। उद्वार इत्युत्—वारः। दक्षिणा। इन्द्राय। सुत्राम्ण इति सु—त्राम्णे। पुरोडाशम्। एकादशकपालमित्येकादश—कपालम्। प्रति। निरिति। वपति। इन्द्राय। अंहोमुच इत्यंहः—मुचे। अयम्। नः। राजा। वृत्रहेति वृत्र—हा। राजा। भूत्वा। वृत्रम्। वध्यात्। मैत्राबार्हस्पत्यमिति मैत्रा—बार्हस्पत्यम्। भवति। श्वेतायै। श्वेतवत्साया इति श्वेत—वत्सायै। दुग्धे। स्वयंमूर्त इति स्वयं—मूर्ते। स्वयंमथित इति स्वयं—मथिते। आज्ये। आश्वत्थे (२)। पात्रे। चतुःस्रक्ताविति चतुः—स्रक्तौ। स्वयमवपन्नाया इति स्वयम्—

अवपन्नायै । शाखायै । कर्णान् । च । अकर्णान् । च । तण्डुलान् । वीति । चिनुयात् । ये । कर्णाः । सः । पयसि । बार्हस्पत्यः । ये । अकर्णाः । सः । आज्ये । मैत्रः । स्वयंकृतेति स्वयम्—कृता । वेदिः । भवति । स्वयंदिनमिति स्वयम्—दिनम् । बर्हिः । स्वयंकृत इति स्वयम्—कृतः । इध्मः । सा । एव । श्वेता । श्वेतवत्सेति श्वेत—वत्सा । दक्षिणा ( ३ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टकेऽष्टमप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

---

( अथ प्रथमकाण्डेऽष्टमप्रपाठके नवमोऽनुवाकः । )

---

अष्टमे देविकादिकं कर्मषट्कमेकदिनकर्तव्यमुक्तम् । नवमे रत्निनां हवींष्यनुदिनं क्रमेण कर्तव्यान्युच्यन्ते । तत्रैकादश हवींषि विधत्ते—

बार्हस्पत्यं चरुं निर्वपति ब्रह्मणो गृहे शितिपृष्ठो दक्षिणैन्द्रमेकादशकपालꣳ राजन्यस्य गृह ऋषभो दक्षिणाऽऽदित्यं चरुं महिष्यै गृहे धेनुर्दक्षिणा नैर्ऋतं चरुं परिवृक्त्यै गृहे कृष्णानां व्रीहीणां नखनिर्भिन्नं कृष्णा कूटा दक्षिणाऽऽग्नेयमष्टाकपालꣳ सेनान्यो गृहे हिरण्यं दक्षिणा वारुणं दशकपालꣳ सूतस्य गृहे महानिरष्टो दक्षिणा मारुतꣳ सप्तकपालं ग्रामण्यो गृहे पृश्निर्दक्षिणा सावित्रं द्वादशक-

( राजसूयविषयाणां रत्निहविषामभिधानम् )

पालं क्षत्तुर्गृह उपध्वस्तो दक्षिणाऽऽश्विनं द्विकपालꣳ संग्रहीतुर्गृहे सवात्यौ दक्षिणा पौष्णं चरुं भागदुघस्य गृहे श्यामो दक्षिणा रौद्रं गावीधुकं चरुमक्षावापस्य गृहे शबल उद्वारो दक्षिणा, इति।

ऋत्विग्विशेषो ब्रह्मा, तस्य गृहे राजा गत्वैतामिष्टिं कुर्यात्। एवं सर्वत्र। शितिपृष्ठः श्वेतपृष्ठः। कृताभिषेका राज्ञः स्त्री महिषी। परिवृक्तिः प्रीतिरहिता राज्ञः स्त्री। तद्गृहे गत्वा कृष्णानां व्रीहीणां कृष्णान्व्रीहीन्नखैर्निर्भिद्यावघातमन्तरेणैव तण्डुलान्निष्पाद्य चरुः कर्तव्यः। कूटा भग्नशृङ्गा गौः। सूतः सारथिः। महानिरष्टः पीडितवृषणः। पृश्निः शुक्लः। अल्पतनुरित्यन्ये। क्षत्ता यष्टिहस्तोऽन्तःपुराध्यक्षः। संकीर्णवर्ण उपध्वस्तः। संग्रहीता धनसंग्रहकर्ता कोशाध्यक्षः। सवात्यौ समानमातरौ वत्सावेकोदरावित्यर्थः। यो राज्ञः प्राप्तं षष्ठं भागं प्रजाभ्यो गृह्णाति स भागदुघः। गावीधुकोऽरण्यगोधूमनिष्पन्नः। अक्षावापो द्यूतकारः। शबलश्चित्रवर्णः। उद्वारो दीर्घपुच्छः॥

यथोक्तानि सर्वाणि हवींषि समस्य प्रशंसति—

" रत्निनामेतानि हवीꣳषि भवन्ति। एते वै राष्ट्रस्य प्रदातारः। एतेऽपादातारः। य एव राष्ट्रस्य प्रदातारः। येऽपादातारः। त एवास्मै राष्ट्रं प्रयच्छन्ति। राष्ट्रमेव भवति। " [ ब्रा० का० १ प्र० ७ अ० ३ ] इति।

रत्नान्येषां सन्तीति रत्निनः। ब्राह्मणराजन्यमहिष्यादयो रत्निनः। तदभिमानिदेवानां प्रियाण्येतानि हवींषि। अतस्तद्गृहेष्वेव गत्वा निर्वपेत्। एते रत्निनामभिमानिनो देवा एव राष्ट्रं प्रदातुमपादातुं च समर्थाः। अतः स्वकीयब्रह्मादिगृहेषु निर्वापेण तुष्टा अस्मै राष्ट्रं प्रयच्छन्ति॥

रत्नीत्येकनाम्ना प्रसक्तं प्रयोगैक्यमपोद्य देशभेदप्राप्तं प्रयोगभेदं प्रशंसति—

" यत्समाहृत्य निर्वपेत्। अरत्निनः स्युः। यथायथं निर्वपति रत्नित्वाय (१)। " [ ब्रा० का० १ प्र० ७ अ० ३ ] इति।

अरत्निनो रत्नरहिता दरिद्राः॥

---

१ ख. °भिमानव°।

पूर्वोक्तदेविकादिवदेकानुवाकविहितत्वेन प्रसक्तं दिनैक्यमपवदितुं दिनभेदं विधत्ते—

" यत्सद्यो निर्वपेत् । यावतीमेकेन हविषाऽऽशिषमवरुन्धे । तावतीमवरुन्धीत । अन्वहं निर्वपति । भूयसीमेवाऽऽशिषमवरुन्धे । भूयसो यज्ञक्रतूनुपैति । " [ ब्रा० का० १ प्र० ७ अ० ३ ] इति ।

आशिषं फलम् । बहुदिनानुष्ठाने क्रतुबाहुल्यं जनानां प्रतीयते ॥

गृहस्वामिनं ब्रह्माभिमानिनं बृहस्पतिं प्रशंसति—

" बार्हस्पत्यं चरुं निर्वपति ब्रह्मणो गृहे । मुखत एवास्मै ब्रह्म सꣳश्यति । अथो ब्रह्मन्नेव क्षत्रमन्वारम्भयति । शितिपृष्ठो दक्षिणा समृद्ध्यै ( २ ) । " [ ब्रा० का० १ प्र० ७ अ० ३ ] इति ।

मुखत एव कर्मोपक्रम एव यजमानार्थं ब्राह्मणजातिं संश्यति सम्यक्तीक्ष्णीकरोति उत्कृष्टं करोतीत्यर्थः । किं च प्रथमतो ब्रह्मगृहं पश्चाद्राजन्यगृहमित्येवं ब्राह्मणजातिमनु क्षत्रियजात्यारम्भः कारितो भवति ॥

इन्द्रं प्रशंसति—

" ऐन्द्रमेकादशकपालꣳ राजन्यस्य गृहे । इन्द्रियमेवावरुन्धे । ऋषभो दक्षिणा समृद्ध्यै । " [ ब्रा० का० १ प्र० ७ अ० ३ ] इति ।

अदितिं प्रशंसति—

" आदित्यं चरुं महिष्यै गृहे । इयं वा अदितिः । अस्यामेव प्रतितिष्ठति । धेनुर्दक्षिणा समृद्ध्यै । " [ ब्रा० का० १ प्र० ७ अ० ३ ] इति ॥

अत्र मुख्यब्राह्मण उपेक्षितं हविर्विशेषं विधत्ते—

" भगाय चरुं वावातायै गृहे । भगमेवास्मिन्दधाति । विचित्तगर्भा पष्ठौही दक्षिणा समृद्ध्यै ( ३ ) । " [ ब्रा० का० १ प्र० ७ अ० ३ ] इति ।

वावाता महिष्या अभिषिक्ताया अर्वाचीना परिवृक्त्याः प्रीतिरहिताया उत्तमत्वेन स्वयं मध्यमा राज्ञः स्त्री । अत एवाश्वमेधप्रकरणेऽश्वमलंकुर्वत्यो राजस्त्रिय उत्तममध्यमाधमाद्यक्रमेणैतैरेव नामभिर्निर्दिष्टाः—" भूरिति महिषी । भुव इति वावाता । सुवरिति परिवृक्ती " इति । भगमेव सौभाग्यमेव । विचित्तगर्भा विशेषेण चित्तो ज्ञातोऽभिव्यक्तो गर्भो यस्या इति विग्रहः । पष्ठौही बालगर्भिणी ॥

निर्ऋतिं प्रशंसति—

१ च. 'धनुक्र' ।

( राजसूयविषयाणां रत्निहविषामभिधानम् )

" नैर्ऋतं चरुं परिवृक्त्यै गृहे कृष्णानां व्रीहीणां नखनिर्भिन्नम् । पाप्मानमेव निर्ऋतिं निरवदयते । कृष्णा कूटा दक्षिणा समृद्ध्यै । " [ ब्रा० का० १ प्र० ७ अ० ३ ] इति ।

पाप्मनो निर्ऋतिशरीरत्वात्तां प्रति प्रशंसैवैषा ॥

अग्निं गृहस्वामिनं च प्रशंसति—

" आग्नेयमष्टाकपालꣳ सेनान्यो गृहे । सेनामेवास्य सꣳश्यति । हिरण्यं दक्षिणा समृद्ध्यै । " [ ब्रा० का० १ प्र० ७ अ० ३ ] इति ॥

वरुणं प्रशंसति—

" वारुणं दशकपालꣳ सूतस्य गृहे । वरुणसवमेवावरुन्धे । महानिरष्टो दक्षिणा समृद्ध्यै । " [ ब्रा० का० १ प्र० ७ अ० ३ ] इति ।

वरुणसवो वरुणानुज्ञा ॥

मरुतः प्रशंसति—

" मारुतꣳ सप्तकपालं ग्रामण्यो गृहे ( ४ ) । अन्नं वै मरुतः । अन्नमेवावरुन्धे । पृश्निर्दक्षिणा समृद्ध्यै । " [ ब्रा० का० १ प्र० ७ अ० ३ ] इति ।

मरुतां वैश्यत्वेनान्नसंपादकत्वादन्नत्वम् ॥

सवितारं प्रशंसति—

" सावित्रं द्वादशकपालं क्षत्तुर्गृहे प्रसूत्यै । उपध्वस्तो दक्षिणा समृद्ध्यै । " [ ब्रा० का० १ प्र० ७ अ० ३ ] इति ॥

अश्विनौ प्रशंसति—

"आश्विनं द्विकपालꣳ संग्रहीतुर्गृहे । अश्विनौ वै देवानां भिषजौ । ताभ्यामेवास्मै भेषजं करोति । सवात्यौ दक्षिणा समृद्ध्यै । " [ ब्रा० का० १ प्र० ७ अ० ३ ] इति ॥

पूषणं प्रशंसति—

" पौष्णं चरुं भागदुघस्य गृहे ( ५ ) । अन्नं वै पूषा । अन्नमेवावरुन्धे । श्यामो दक्षिणा समृद्ध्यै । " [ ब्रा० का० १ प्र० ७ अ० ३ ] इति ।

यथा मरुतां वैश्यत्वेनान्नसंपादकत्वादन्नत्वं तथा पूष्णोऽन्नपोषकत्वादन्नत्वम् ॥

रुद्रं प्रशंसति—

" रौद्रं गावीधुकं चरुमक्षावापस्य गृहे । अन्तत एव रुद्रं निरवदयते । शबल उद्वारो दक्षिणा समृद्ध्यै । " [ ब्रा० का० १ प्र० ७ अ० ३ ] इति ।

भागप्रदानपूर्वकत्वेन रुद्रस्य पुरतो निःसारणमपि प्रशंसैव ॥

पाठेनावगतां हविःसंख्यां प्रशंसति—

"द्वादशैतानि हवीꣳषि भवन्ति। द्वादश मासाः संवत्सरः। संवत्सरेणैवास्मै राष्ट्रमवरुन्धे। राष्ट्रमेव भवति (६)।" [ब्रा० का० १ प्र० ७ अ० ३] इति॥

विहितेभ्यो द्वादशहविर्भ्य ऊर्ध्वं स्वगृहे हविर्द्वयं विधत्ते—

इन्द्राय सुत्राम्णे पुरोडाशमेकादशकपालं प्रति निर्वपतीन्द्रायाꣳहोमुचे, इति।

प्रति प्रातिस्विके गृहे। सुत्राम्णे सुष्ठुपालयित्रे। अंहोमुचे पापान्मोचकाय। पुरोडाशमेकादशकपालमित्यनुवर्तते॥

तमिमं प्रतिनिर्वापं प्रशंसति—

"यन्न प्रतिनिर्वपेत्। रत्निन आशिषोऽवरुन्धीरन्। प्रतिनिर्वपति। इन्द्राय सुत्राम्णे पुरोडाशमेकादशकपालम्। इन्द्रायाꣳहोमुचे। आशिष एवावरुन्धे।" [ब्रा० का० १ प्र० ७ अ० ३] इति॥

रत्निनो ब्राह्मणराजन्यादय आशिषस्तद्विहितफलान्यवरुन्धीरन्गृह्णीयुः॥

अयं नो राजा वृत्रहा राजा भूत्वा वृत्रं वध्यात्—

एतेषां हविषां समीप एको मन्त्र आम्नातस्तस्य विनियोगमापस्तम्ब आह—"अयं नो राजा वृत्रहा राजा भूत्वा वृत्रं वध्यादिति पुरस्तात्स्विष्टकृतोऽध्वर्युर्जपति" इति।

अयं राजा राजसूयस्य कर्ताऽस्माकं राजा योऽस्त्यसौ शत्रुवधक्षमो राजा भूत्वा शत्रुं वध्यात्॥

वध्यादित्येतस्य पदस्याऽऽशीरर्थत्वं द्योतयति—

"अयं नो राजा वृत्रहा राजा भूत्वा वृत्रं वध्यादित्याह। आशिषमेवैतामाशास्ते।" [ब्रा० का० १ प्र० ७ अ० ३] इति॥

यदुक्तमापस्तम्बेन—"श्वोभूतेऽभिषेचनीयस्योक्थ्यस्य दीक्षां प्रक्रमयति मैत्राबार्हस्पत्या दीक्षणीया" इति, तामिमामभिषेचनीयनामकस्य सोमयागस्याङ्गभूतां दीक्षणीयां चोदकप्राप्तेष्टिबाधनाय विधत्ते—

मैत्राबार्हस्पत्यं भवति श्वेतायै श्वेतवत्सायै दुग्धे स्वयंमूर्ते स्वयंमथित आज्य आश्वत्थे पात्रे चतुःस्रक्तौ स्वयमवपन्नायै शाखायै

( राजसूयविषयाणां रत्निहविषामभिधानम् )

कर्णाꣳश्चाकर्णाꣳश्च तण्डुलान्वि चिनुयाद्ये कर्णाः स पयसि बार्हस्पत्यो येऽकर्णाः स आज्ये मैत्रः स्वयंकृता वेदिर्भवति स्वयंदिनं बर्हिः स्वयंकृत इध्मः सैव श्वेता श्वेतवत्सा दक्षिणा॥, इति॥

मैत्राबार्हस्पत्यं हविरिति शेषः। तत्र दुग्धे बार्हस्पत्यश्चरुः। आज्ये मैत्रश्चरुः। कीदृश आज्ये। स्वयंमूर्ते स्वयंमथिते। तदिदमापस्तम्बेन स्पष्टीकृतम्—"श्वेतां श्वेतवत्सां गामाम्रस्य दृतौ दुहन्ति तत्स्वयंमूर्तं संयोगेन परिवहति तत्स्वयंमथितमातपे विषजन्ति तत्स्वयंविलीनमाज्यं भवति" इति। आम्रेण फलपुष्परसेन लेपितायां (ते) दृतौ यत्पय आतञ्चनमन्तरेणैव मूर्तं दधि भवति तच्च बदरादिफलसंयोगेन परिवहति तक्रवत्परितः क्षरति। तदिदं स्वयंमथितम्। नात्र मृद्भाण्डे पाकः किं त्वाश्वत्थे पात्रे चतुःस्रक्तौ न तु वर्तुले। तच्च पात्रं यया कयाच्छिन्नशाखया न कर्तव्यं किं तु वाय्वाद्यभिघातेन स्वयमेव पतितया निष्पादनीयम्। कर्णाः खण्डितण्डुलाः। अकर्णा अखण्डिताः। तत्र खण्डितैः पयसि बृहस्पतेश्चरुर्निष्पादनीयः। अखण्डितैस्तु मित्रस्याऽऽज्ये चरुः। स्वयंकृता शास्त्रीयोद्धननादिरहिता। स्वयंदिनं समन्त्रकशास्त्रीयच्छेदनमन्तरेणैव खण्डितम्। स्वयंकृत इध्मः। अत्रापि शास्त्रीयसंपादनमन्तरेणैव निष्पन्नः॥

तमिमं विधिमनूद्य द्वयोर्हविष्पात्रयोः संसर्गं विधत्ते—

"मैत्राबार्हस्पत्यं भवति। श्वेतायै श्वेतवत्सायै दुग्धे (७)। बार्हस्पत्ये मैत्रमपि दधाति। ब्रह्म चैवास्मै क्षत्रं च समीची दधाति। अथो ब्रह्मन्नेव क्षत्रं प्रतिष्ठापयति।" [ ब्रा० का० १ प्र० ७ अ० ३ ] इति।

बार्हस्पत्ये चरुपात्रेऽग्नावधिश्रिते तस्योपरि मैत्रं चरुपात्रमपिदध्यात्। तथा सति बृहस्पतिरूपा ब्राह्मणजातिर्मित्ररूपा क्षत्रियजातिश्चेत्युभयमस्मै सम्यक्संपादितं भवति। किं चाऽऽधारभूते ब्राह्मण एव क्षत्रियजातिमाधेयत्वेन प्रतिष्ठापितवान्भवति॥

पाठक्रमेण पश्चात्प्राप्तं बार्हस्पत्यप्रचारमपवदितुं विधत्ते—

"बार्हस्पत्येन पूर्वेण प्रचरति। मुखत एवास्मै ब्रह्म सꣳश्यति। अथो ब्रह्मन्नेव क्षत्रमन्वारम्भयति।" [ ब्रा० का० १ प्र० ७ अ० ३ ] इति॥

स्वयंशब्दानामभिप्रायमाह—

" स्वयंकृता वेदिर्भवति । स्वयंदिनं बर्हिः । स्वयंकृत इध्मः । अनभिजितस्याभिजित्यै । तस्माद्राज्ञामरण्यमभिजितम् । " [ ब्रा० का० १ प्र० ७ अ० ३ इति ।

यद्देशजातं युद्धमयासेन पूर्वमनभिजितं तस्याप्यभिजयः स्वयंकृतादिना भवति । यस्मादेवं तस्माल्लोकेऽपि राज्ञामरण्यं युद्धमयासमन्तरेणैवाभिजितं दृश्यते ॥

दक्षिणां प्रशंसति—

" सैव श्वेता श्वेतवत्सा दक्षिणा समृद्ध्यै ( ८ ) । " [ ब्रा० का १ प्र० ७ अ० ३ ] इति ॥

अत्र विनियोगसंग्रहः—

" पुरा स्विष्टकृतोऽध्वर्युरयं न इति संजपेत् ॥ १ ॥ " [ इति ॥ ]

अथ मीमांसा ।

दशमाध्यायस्य प्रथमपादे चिन्तितम्—

" वेदिः स्वयंकृतेत्यादौ प्र(प्रा)कृतं सर्वमाचरेत् ।
लुप्तार्थं बाध्यतां वाऽऽद्यश्चोदकप्रापितत्वतः ॥
अपेक्षासत्तियोग्यत्वहानेरुद्धननादिकम् ।
बाध्यतेऽपेक्षितं सर्वं चोदकेनातिदिश्यते ॥ "

" रत्निनामेतानि हवींषि " इतिवाक्येन राजसूये रत्निनामकानां देवानां संबन्धीनि कानिचिद्धवींषि दर्शपूर्णमासेष्टिविकृतिरूपाणि विहितानि । ऊर्ध्वं मैत्राबार्हस्पत्ये हविषि श्रूयते—" स्वयंकृता वेदिर्भवति स्वयंदिनं बर्हिः स्वयंकृत इध्मः " इति । इष्टावुद्धननखननपरिलेखनादिभिः क्रियाविशेषैर्वेदिर्निष्पाद्यते । स्फ्येनोत्तमां त्वचमुद्धन्ति, देवस्य सवितुः सव इति खनति, स्फ्येन वेदिं परिगृह्णातीति तद्विधानात् । यज्ञस्य घोषदसीत्यस्मिन्ननुवाके प्रोक्तैर्मन्त्रैर्दात्रच्छिन्नं बर्हिः संपाद्यते । त्रीन्परिधीनित्यादिमन्त्रोपेताभिः क्रियाभिरिध्मः सिध्यति । विकृतिरूपे तु हविष्युद्धननाद्यपेक्षां वारयितुं स्वयमित्युक्तम् । यथास्थित एव तु प्रदेशो वेदित्वेन स्वीकर्तव्यः । इध्माबर्हिषी अपि स्वत एव च्छिन्ने शास्त्रीयच्छेदननिरपेक्षे ग्रहीतव्ये इत्यर्थः । तत्र संशयः । लुप्तार्थमलुप्तार्थं च सर्वमङ्गजातं विकृतावनुष्ठेयमुत लुप्तार्थं वर्जनीयमिति । चोदकस्य साधारणत्वात्सर्वमनुष्ठेयमित्याद्ये पक्षे प्राप्ते सिद्धान्तं

१ क. घ. ङ. च. °नप° ।

( राजसूयविषयाणां देवसुवां हविषामभिधानम् )

ब्रूमः—अङ्गी हि अङ्गैरुपकृतः फलं साधयति। तथा सत्यङ्गिनोऽङ्गकृत उपकारे साक्षादपेक्षा, उपकारद्वारा त्वङ्गेषु। प्रत्यासन्नश्चाङ्गिनं प्रत्यङ्गेभ्य उपकारः। योग्यताऽपि साक्षादपेक्षां पूरयितुमुपकारस्यैवास्ति न त्वङ्गानाम्। वेदिनिष्पादनलक्षणदृष्टोपकारयुक्तानि प्रकृतावुद्धननाद्यङ्गानि। विकृतौ तु वेद्याः स्वतः सिद्धत्वेन निष्पादनोपकारो लुप्यते। उपकारद्वारोपकारकाणामाकाङ्क्षासंनिधियोग्यत्वान्युद्धननाद्यङ्गेषु हीयन्ते। तस्मादुद्धननादीनि नानुष्ठेयानि। सोऽयं चोदकप्रापितस्योद्धननाद्यनुष्ठेयत्वप्रत्ययस्य भ्रान्तित्वनिश्चयो बाध उच्यते। चोदकस्य खलुप्तोपकारैरुपकारद्वारेणाऽऽकाङ्क्षासंनिधियोग्यतायुक्तैर्हविरासादनाद्यङ्गैश्चरितार्थता संपद्यते॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डेऽष्टमप्रपाठके नवमोऽनुवाकः॥ ९॥

---

( अथ प्रथमाष्टकेऽष्टमप्रपाठके दशमोऽनुवाकः। )

---

अग्नये गृहपतये पुरोडाशमष्टाकपालं निर्वपति कृष्णानां व्रीहीणाꣳ सोमाय वनस्पतये श्यामाकं चरुꣳ सवित्रे सत्यप्रसवाय पुरोडाशं द्वादशकपालमाशूनां व्रीहीणाꣳ रुद्राय पशुपतये गावीधुकं चरुं बृहस्पतये वाचस्पतये नैवारं चरुमिन्द्राय ज्येष्ठाय पुरोडाशमेकादशकपालं महाव्रीहीणां मित्राय सत्यायाऽऽम्बानां चरुं वरुणाय धर्मपतये यवमयं चरुꣳ सविता त्वा प्रसवानाꣳ सुवतामग्निर्गृहपतीनाꣳ सोमो वनस्पतीनाꣳ रुद्रः पशूनाम् ( १ )

( राजसूयविषयाणां देवसुवां हविषामभिधानम् )

बृहस्पतिर्वाचामिन्द्रो ज्येष्ठानां मित्रः सत्यानां वरुणो धर्मपतीनां ये देवा देवसुवः स्थ त इम-मामुष्यायणमनमित्राय सुवध्वं महते क्षत्राय महत आधिपत्याय महते जानराज्यायैष वो भरता राजा सोमोऽस्माकं ब्राह्मणानाꣳ राजा प्रति त्यन्नाम राज्यमधायि स्वां तनुवं वरुणो अशिश्रेच्छुचेर्मित्रस्य व्रत्या अभूमामन्महि महत ऋतस्य नाम सर्वे व्राता वरुणस्याभू-वन्वि मित्र एवैररातिमतारीदसूषुदन्त यज्ञिया ऋतेन व्यु त्रितो जरिमाणं न आनड्विष्णोः क्रमोऽसि विष्णोः क्रान्तमसि विष्णोर्विक्रान्त-मसि ( २ ) ॥

( पशूनां व्राताः पञ्चविꣳशतिश्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टकेऽ-ष्टमप्रपाठके दशमोऽनुवाकः ॥ १० ॥

---

( अथ प्रथमाष्टकेऽष्टमप्रपाठके दशमोऽनुवाकः । )

---

अग्नये । गृहपतय इति गृह—पतये । पुरोडाशम् । अष्टाकपालमित्यष्टा—कपालम् । निरिति । वपति । कृष्णानाम् । व्रीहीणाम् । सोमाय । वनस्पतये । श्यामाकम् । चरुम् । सवित्रे । सत्यप्रसवायेति सत्य—

प्रसवाय। पुरोडाशम्। द्वादशकपालमिति द्वादश–कपालम्। आशूनाम्। व्रीहीणाम्। रुद्राय। पशुपतय इति पशु–पतये। गावीधुकम्। चरुम्। बृहस्पतये। वाचः। पतये। नैवारम्। चरुम्। इन्द्राय। ज्येष्ठाय। पुरोडाशम्। एकादशकपालमित्येकादश–कपालम्। महाव्रीहीणामिति महा–व्रीहीणाम्। मित्राय। सत्याय। आम्बानाम्। चरुम्। वरुणाय। धर्मपतय इति धर्म–पतये। यवमयमिति यव–मयम्। चरुम्। सविता। त्वा। प्रसवानामिति प्र–सवानाम्। सुवताम्। अग्निः। गृहपतीनामिति गृह–पतीनाम्। सोमः। वनस्पतीनाम्। रुद्रः। पशूनाम् ( १ )। बृहस्पतिः। वाचाम्। इन्द्रः। ज्येष्ठानाम्। मित्रः। सत्यानाम्। वरुणः। धर्मपतीनामिति धर्म–पतीनाम्। ये। देवाः। देवसुव इति देव–सुवः। स्थ। ते। इमम्। आमुष्यायणम्। अनमित्राय। सुवध्वम्। महते। क्षत्राय। महते। आधिपत्यायेत्याधि–पत्याय। महते। जानराज्यायेति जान–राज्याय। एषः। वः। भरताः। राजा। सोमः। अस्माकम्। ब्राह्मणानाम्। राजा। प्रतीति। त्यत्। नाम। राज्यम्। अधायि।

स्वाम् । तनुवम् । वरुणः । अशिश्रेत् । शुचेः । मित्रस्य । व्रत्याः । अभूम । अमन्महि । महतः । ऋतस्य । नाम । सर्वे । व्राताः । वरुणस्य । अभूवन् । वीति । मित्रः । एवैः । अरातिम् । अतारीत् । असूषुदन्त । यज्ञियाः । ऋतेन । वीति । उ । त्रितः । जरिमाणम् । नः । आनट् । विष्णोः । क्रमः । असि । विष्णोः । क्रान्तम् । असि । विष्णोः । विक्रान्तमिति वि—क्रान्तम् । असि ( २ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टकेऽष्टमप्रपाठके दशमोऽनुवाकः ॥ १० ॥

---

( अथ प्रथमकाण्डेऽष्टमप्रपाठके दशमोऽनुवाकः । )

---

नवमे रत्निनां हवींष्यभिषेचनीयस्य दीक्षणीया चेत्येतावदुक्तम् । दशमे देवसुवां हवींष्युच्यन्ते । तानि चाभिषेचनीयगतस्याग्नीषोमीयपशुपुरोडाशस्यानुनिर्वाप्याणि । तथा च बौधायनः—" सह सोमौ क्रीणात्यभिषेचनीयाय दशपेयाय च सह परिवहत्यर्धं राज्ञः पुरोहितस्य गृहे दशपेयार्थं निदधात्यग्नीषोमीयस्य पशुपुरोडाशमष्टौ देवसुवां हवींष्यनुनिर्वपति समानं तु स्विष्टकृदिडम् " इति ।

तान्येतानि हवींषि विधत्ते—

अग्नये गृहपतये पुरोडाशमष्टाकपालं निर्वपति कृष्णानां व्रीहीणाꣳ सोमाय वनस्पतये श्यामाकं चरुꣳ सवित्रे सत्यप्रसवाय पुरोडाशं द्वादशकपालमाशूनां व्रीहीणाꣳ रुद्राय पशुपतये गावीधुकं चरुं बृहस्पतये वाचस्पतये

( राजसूयविषयाणां देवसुवां हविषामभिधानम् )

नैवारं चरुमिन्द्राय ज्येष्ठाय पुरोडाशमेकादश-
कपालं महाव्रीहीणां मित्राय सत्यायाऽऽम्बानां
चरुं वरुणाय धर्मपतये यवमयं चरुम् , इति ।

गृहपत्यादीन्यग्न्यादिदेवताविशेषणानि । सत्यप्रसवायामोघाभ्यनुज्ञानाय । *षष्टिभिरेव दिनैः पच्यमाना आशुव्रीहयः । स्थूलबीजं महाव्रीहयः । आम्बा धान्यविशेषाः ॥

तेष्वेतेषु विधिषु श्रूयमाणा देवताः प्रशंसति—

" देवसुवामेतानि हवीꣳषि भवन्ति । एतावन्तो वै देवानाꣳ सवाः । त एवास्मै सवान्प्रयच्छन्ति । त एनꣳ सुवन्ते । अग्निरेवैनं गृहपतीनाꣳ सुवते । सोमो वनस्पतीनाम् । रुद्रः पशूनाम् । बृहस्पतिर्वाचाम् । इन्द्रो ज्येष्ठानाम् । मित्रः सत्यानाम् ( ? ) । वरुणो धर्मपतीनाम् । एतदेव सर्वं भवति । " [ ब्रा० का० १ प्र० ७ अ० ४ ] इति ।

यान्यग्नये गृहपतय इत्यादिभिरुत्पत्तिविधिभिर्विहितान्यष्टौ हवींषि तान्येतानि देवसुवां संबन्धीनि । भाविनी(न्या) संज्ञया यजमानो देवस्तं सुवन्तेऽनुजानन्तीत्यग्न्यादयो देवसुवः । यावन्तो विधिवाक्येष्वग्न्यादयः श्रूयन्त एतावन्त एव देवानां मध्ये सवा अभ्यनुज्ञातारः । अतस्त एवाग्न्यादयोऽस्मै यजमानाय सवान्स्वोचितानैश्वर्यविशेषान्प्रयच्छन्ति । तेऽग्न्यादय एनं यजमानं सुवन्त ईश्वरो यथा भवति तथाऽभ्यनुजानन्ति । तत्राग्निरेवैनं यजमानमन्येषां गृहपतीनामीश्वरमनुजानाति । एवमन्यत्रापीश्वरं सुवत इति योज्यम् । सोमो वनस्पतीनां रुद्रः पशूनामित्यनयोर्मध्ये सविता सत्यप्रसवानामित्यध्याहर्तव्यम् । स्वभृत्यान्प्रत्यैश्वर्यार्थममोघा या अभ्यनुज्ञास्तासामीश्वरं करोतीत्यर्थः । गृहपत्यादीन्धर्मपत्यन्तान्प्रति यत्स्वामित्वमेतदेव लोकेऽपेक्षितं सर्वमैश्वर्यम् ॥

उक्तानां हविर्विधीनां संनिधौ सवितेत्यादयो मन्त्रा आम्नाताः । तत्र कल्पः—" पुरस्तात्स्विष्टकृतः सविता त्वा प्रसवानाꣳ सुवतामिति ब्रह्मा यजमानस्य हस्तं गृह्णाति " इति ।

पाठस्तु—

सविता त्वा प्रसवानाꣳ सुवतामग्निर्गृहपतीनाꣳ

---

* ' विंशत्याद्याः सदैकत्वे ' इति कोशात्षष्ट्यैवेति युक्तम् ।

सोमो वनस्पतीना॒ रुद्रः पशूनां बृहस्पतिर्वाचामिन्द्रो ज्येष्ठानां मित्रः सत्यानां वरुणो धर्मपतीनां ये देवा देवसुवः स्थ त इममामुष्यायणमनमित्राय सुवध्वं महते क्षत्राय महत आधिपत्याय महते जानराज्याय , इति।

सविता हविर्विधौ तृतीयो देवः। सोऽत्र प्राधान्यात्प्रथमं निर्दिश्यते। यजमानस्य स्वभृत्येषु ऐश्वर्यार्थमनुज्ञाः प्रसवाः। हे यजमान त्वां सविता तेषां प्रसवानां स्वामित्वेन सुवतामभ्यनुजानातु। एवमुत्तरत्र त्वां सुवतामिति पदद्वयानुषङ्गेण योजनीयम्। हे देवा अग्न्यादयो ये यूयं देवसुवो यजमानप्रेरकाः स्थ ते यूयमिमं यजमानमामुष्यायणममुष्य देवदत्तस्य पुत्रममुष्य यज्ञदत्तस्य पौत्रं चानमित्राय शत्रुराहित्यार्थं सुवध्वमभ्यनुजानीध्वम्। किं च। महते क्षत्रायानुत्तमक्षत्रियकुलाय, महत आधिपत्यायाप्रतिहतानियमनसामर्थ्याय, महते जानराज्याय जनसंबन्धि यद्राज्यं तच्च सागरपर्यन्तभूमिविषयत्वान्महत्सार्वभौमत्वाय सुवतामित्यर्थः॥

विधत्ते—

"सविता त्वा प्रसवाना॒ सुवतामिति हस्तं गृह्णाति प्रसूत्यै।" [ ब्रा० का० १ प्र० ७ अ० ४ ] इति॥

मन्त्रगतयोर्मध्यमोत्तमभागयोः स्पष्टार्थतामाशीःपरतां च दर्शयति—

"ये देवा देवसुवः स्थेत्याह। यथायजुरेवैतत्। महते क्षत्राय महत आधिपत्याय महते जानराज्यायेत्याह। आशिषमेवैतामाशास्ते।" [ ब्रा० का० १ प्र० ७ अ० ४ ] इति॥

## एष वो भरता राजा—

कल्पः—"अथैनं रत्निभ्य आवेदयत्येष वो भरता राजेति" इति।

हे भरता राजन्यवैश्यादयो धनिका एष यजमानो युष्माकं राजा। एनं स्वामिनं यथोचितं सेवध्वमित्यभिप्रायः॥

## सोमोऽस्माकं ब्राह्मणाना॒ राजा—

कल्पः—"सोमोऽस्माकं ब्राह्मणाना॒ राजेति ब्रह्मा जपति" इति।

सोम उत्तमो देवो राजा न त्वधमो यः क्षत्रिय इत्यर्थः॥

---

१ ख. घ. ङ. च. °त्तमदे°।

( राजसूयविषयाणां देवसुवां हविषामभिधानम् )

भरतानामिव ब्राह्मणानामप्ययमेव राजेति भ्रान्तिं वारयितुं व्याचष्टे—

"एष वो भरता राजा सोमोऽस्माकं ब्राह्मणानाꣳ राजेत्याह। तस्मात्सोमराजानो ब्राह्मणाः।" [ ब्रा० का० १ प्र० ७ अ० ४ ] इति।

यस्मान्मन्त्रेण ब्रह्मा स्वकीयं राजानं विभज्य निर्दिष्टवांस्तस्माल्लोकेऽप्यग्निष्टोमादियागेषु सोममेव राजशब्दोपहितैः सोम राजन्नेवावरोहेत्यादिभिर्मन्त्रैरुपचरन्ति॥

कल्पः—"प्रति त्यन्नाम राज्यमधायीति वारुणीभ्यां यजमानो मुखं विमृष्टे" इति।

पाठस्तु—

प्रति त्यन्नाम राज्यमधायि स्वां तनुवं वरुणो अशिश्रेच्छुचेर्मित्रस्य व्रत्या अभूमामन्महि महत ऋतस्य नाम सर्वे व्राता वरुणस्याभूवन्वि मित्र एवैररातिमतारीदसूषुदन्त यज्ञिया ऋतेन व्यु त्रितो जरिमाणं न आनट्, इति।

ऋतस्य नामेत्यन्त आद्यो मन्त्रः। सर्वे व्राता इत्यादिर्द्वितीयः। त्यद्राज्यं महत इत्यादि जानराज्यायेत्यन्तं यत्पूर्वमभिहितं तद्राज्यं नाम नमनीयं यजमानस्य यथाऽवश्यं भवति तथा प्रत्यधायि वरुणेन प्रतिष्ठापितम्। वरुणः स्वां तनुवमशिश्रेदाश्रितवान्। वरुणो धर्मपतीनामिति मन्त्रेऽभिधानाद्धर्मपतीन्पुरुषान्प्रति यजमानस्य स्वामित्वमभ्यनुजानती वरुणस्य स्वकीया तनुः। वरुणशब्देनाग्न्यादयोऽप्युपलक्ष्यन्ते। अत एवाग्न्यादिदेवास्तत्तदनुज्ञात्रीं स्वस्वतनुमाश्रितवन्त इति द्रष्टव्यम्। वयमपि शुचेर्मित्रस्यानुज्ञया व्रत्याः कर्मयोग्या अभूम। मित्रः सत्यानामिति मन्त्रेऽभिहितत्वात्। मित्रशब्देनाग्न्यादयोऽप्युपलक्ष्यन्ते। अत एवाग्न्यादिदेवैरनुज्ञाता वयं महत ऋतस्य प्रौढस्य यज्ञस्य नामामन्महि राजसूयं कर्म कुर्म इति नामधेयं सर्वदा मन्यामहे। किं च। ऋत्विजः सर्वे वरुणस्यानुज्ञया व्राताः कर्मयोग्या अभूवन्। मित्रश्चैवैरस्मान्प्रति रक्षकत्वेनाऽऽगमनैररातिं वैरिणं विशेषेणातारीद्वयं यथा वैरिणमतिलङ्घयामस्तथाऽकरोत्। यज्ञिया ऋत्विज ऋतेन यज्ञेनासूषुदन्त रक्षितवन्तः। त्रिभिर्ब्राह्मणादिभिर्वर्णैर्यागेषु विस्तार्यत इति त्रितोऽग्निः। स नोऽस्माकं

१ क. घ. ङ. च. 'यि प्र'। २ ख. 'म्। स च व'।

जरिमाणं जरया शैथिल्यं व्यु विशेषेणोद्धृत्याऽऽनडायुष्यं व्यापितवान्भवति दीर्घायुष्यं कृतवानित्यर्थः ॥

तदिदं मन्त्रद्वयं पादशो व्याचष्टे—

"प्रति त्यन्नाम राज्यमधायीत्याह (२)। राज्यमेवास्मिन्प्रतिदधाति। स्वां तनुवं वरुणो अशिश्रेदित्याह। वरुणसवमेवावरुन्धे। शुचेर्मित्रस्य व्रत्या अभूमेत्याह। शुचिमेवैनं व्रत्यं करोति। अमन्महि महत ऋतस्य नामेत्याह। मनुत एवैनम्। सर्वे व्राता वरुणस्याभूवन्नित्याह। सर्वव्रातमेवैनं करोति। वि मित्र एवैररातिमतारीदित्याह (३)। अरातिमेवैनं तारयति। असूषुदन्त यज्ञिया ऋतेनेत्याह। स्वदयत्येवैनम्। व्यु त्रितो जरिमाणं न आनडित्याह। आयुरेवास्मिन्दधाति।" [ब्रा० का० १ प्र० ७ अ० ४] इति।

वरुणसवं वरुणस्यानुज्ञाम्। एनं राजसूयं मनुत एव पुनः पुनः कर्तुमिच्छत्येव। सर्वेऽध्वर्युप्रभृतयो व्राता व्रतयोग्या यस्य यजमानस्यासौ सर्वव्रातः। एनं यजमानमरातिं तारयति वैर्यतिक्रमं कारयत्येव। एनं यज्ञं स्वदयत्येव स्वादू करोत्यविघ्नेन पालयतीत्यर्थः ॥

मुखमार्जनं विधत्ते—

"द्वाभ्यां विमृष्टे। द्विपाद्यजमानः प्रतिष्ठित्यै।" [ब्रा० का० १ प्र० ७ अ० ४] इति ॥

पुरतो निर्वाप्यस्यानुनिर्वाप्यैः सहैव स्विष्टकृदवदानं विधत्ते—

"अग्नीषोमीयस्य चैकादशकपालस्य देवसुवां च हविषामग्नये स्विष्टकृते समवद्यति। देवताभिरेवैनमुभयतः परिगृह्णाति।" [ब्रा० का० १ प्र० ७ अ० ४] इति।

एकत्राग्नीषोमौ देवता, इतरत्राष्टावग्न्यादिदेवताः। एवमुभयतो देवताभिर्यज्ञस्य परिग्रहः ॥

कल्पः—"विष्णोः क्रमोऽसीति त्रीन्विष्णुक्रमान्प्राचः क्रामति" इति।

पाठस्तु—

विष्णोः क्रमोऽसि विष्णोः क्रान्त-
मसि विष्णोर्विक्रान्तमसि ॥, इति ॥

वाजपेये रथसमीपगमने व्याख्यातम् ॥

विधत्ते—

"विष्णुक्रमान्क्रमते। विष्णुरेव भूत्वेमाँल्लोकानभिजयति (४)।" [ब्रा० का० १ प्र० ७ अ० ४] इति ॥

( राजसूयविषयाणां देवसुवां हविषामभिधानम् )

अत्र विनियोगसंग्रहः—

“ सवितेति स्वामिहस्तं ब्रह्मा गृह्णीत एष वः ।
रत्निभ्यः स्वामिनं ब्रूयात्सोमेति ब्रह्मणो जपः ॥ १ ॥
प्रतिष्ठाभ्यां मुखं स्वामी मार्ष्टि विष्णोस्त्रिभिः क्रमः ।
दशमे अनुवाकेऽस्मिन्नष्टौ मन्त्रा उदीरिताः ॥ २ ॥ ” इति ॥

अथ मीमांसा ।

एकादशाध्यायस्य तृतीयपादे चिन्तितम्—

“ नानाबीजेषु यागेषु वाग्विसर्गश्च पूर्ववत् ।
शङ्किते तद्विधौ तस्या[1]विधित्वेन तु उत्त[2]रम् ॥ ”

राजसूये नानाविधबीजयुक्ता यागाः श्रुताः—“ अग्नये गृहपतये पुरोडाशमष्टाकपालं निर्वपति कृष्णानां व्रीहीणा॰ सोमाय वनस्पतये श्यामाकं चरुम् ” इत्यादिना । प्रकृतौ प्रणीताप्रणयनकाले नियमिताया वाचो हविष्कृत आह्वानकाले विसर्गः श्रुतः । स चात्र चोदकप्राप्तः । तत्र प्रथमे चरमे वा हविष्कृदाह्वानकाले वाग्विसर्गो विकल्पित इति प्राप्ते पूर्वपक्षे चरम एवेति राद्धान्तः । अत्रेयं पूर्वपक्षिणोऽधिका शङ्का, न हस्तेन कण्डूयनं विहितं वाग्विसर्गस्तु विहित इति । तत्रेदमुत्तरम्—विहितस्य वाङ्नियमनस्या[3]वधित्वेनायं हविष्कृदाह्वानकालीनो वाग्विसर्गोऽनूद्यते, रागप्राप्तत्वान्नासौ विधीयत इति । तस्मात्प्रासनवद्विसर्गोऽपि चरम एव काले नियम्यते ।

तत्रैव चतुर्थपादे चिन्तितम्—

“ नानाबीजेषु तन्मात्रः सकृद्भूयोऽपि वा सकृत् ।
चिकीर्षैक्यात्प्रयोगाणां भिन्नत्वान्न सकृद्भवेत् ॥ ”

राजसूये नानाबीजयागेषु सोऽवघातमन्त्रः सकृदेव प्रयोक्तव्यः । कुतः । सर्वावघातविषयायामेकस्यां चिकीर्षायां प्रकृतत्वादिति प्राप्ते ब्रूमः—समन्त्रोऽवघातश्चोदकातिदेशेन प्राप्तो बीजेषु प्रयुज्यते । तण्डुलनिष्पत्तौ स कृतार्थः संपन्नः । पुनर्बीजान्तरे तण्डुलनिष्पत्तये समग्रस्यावघातस्य प्रयोक्तव्यत्वाद्सकृन्मन्त्रपाठः । अवघातप्रसङ्गात्प्रथमे प्रपाठक उदाहृतोऽप्यत्र मन्त्रविषयलाभादनुस्मारितः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डेऽष्टमप्रपाठके दशमोऽनुवाकः ॥ १० ॥

---

१ ख. 'स्यावधि' । २ क. घ. ङ. च. 'त्तमम् । ३ ङ. 'स्याविधि' ।

( राजसूयविषयाणामभिषेकार्थजलविषयमन्त्राणामभिधानम् )

( अथ प्रथमाष्टकेऽष्टमप्रपाठक एकादशोऽनुवाकः । )

---

अर्थेतः स्थापां पतिरसि वृषाऽस्यूर्मिर्वृष-
सेनोऽसि व्रजक्षितः स्थ मरुतामोजः स्थ सूर्य-
वर्चसः स्थ सूर्यत्वचसः स्थ मान्दाः स्थ
वाशाः स्थ शक्करीः स्थ विश्वभृतः स्थ जन-
भृतः स्थाग्नेस्तेजस्याः स्थापामोषधीनाꣳ रसः
स्थापो देवीर्मधुमतीरगृह्णन्नूर्जस्वती राजसूयाय
चितानाः । याभिर्मित्रावरुणावभ्यषिञ्चन्याभि-
रिन्द्रमनयन्नत्यरातीः । राष्ट्रदाः स्थ राष्ट्रं दत्त
स्वाहा राष्ट्रदाः स्थ राष्ट्रममुष्मै दत्त ( १ ) ॥

( अत्येकादश च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टकेऽ-
ष्टमप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

---

( अथ प्रथमाष्टकेऽष्टमप्रपाठक एकादशोऽनुवाकः । )

---

अर्थेत इत्यर्थ—इतः । स्थ । अपाम् । पतिः ।
असि । वृषा । असि । ऊर्मिः । वृषसेन इति वृष—
सेनः । असि । व्रजक्षित इति व्रज—क्षितः । स्थ ।
मरुताम् । ओजः । स्थ । सूर्यवर्चस इति सूर्य—
वर्चसः । स्थ । सूर्यत्वचस इति सूर्य—त्वचसः ।

( राजसूयविषयाणामभिषेकार्थजलविषयमन्त्राणामभिधानम् )

स्थ। मान्दाः। स्थ। वाशाः। स्थ। शक्करीः। स्थ। विश्वभृत इति विश्व—भृतः। स्थ। जनभृत इति जन—भृतः। स्थ। अग्नेः। तेजस्याः। स्थ। अपाम्। ओषधीनाम्। रसः। स्थ। अपः। देवीः। मधुमतीरिति मधु—मतीः। अगृह्णन्। ऊर्जस्वतीः। राजसूयायेति राज—सूयाय। चितानाः। याभिः। मित्रावरुणाविति मित्रा—वरुणौ। अभ्यषिञ्चन्नित्यभि—असिञ्चन्। याभिः। इन्द्रम्। अनयन्। अतीति। अरातीः। राष्ट्रदा इति राष्ट्र—दाः। स्थ। राष्ट्रम्। दत्त। स्वाहा। राष्ट्रदा इति राष्ट्र—दाः। स्थ। राष्ट्रम्। अमुष्मै। दत्त (१)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टकेऽष्टमप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

---

( अथ प्रथमकाण्डेऽष्टमप्रपाठक एकादशोऽनुवाकः । )

---

दशमे देवसुवां हवींष्युक्तानि । एकादशेऽभिषेकार्थजलविषया मन्त्रा उच्यन्ते ।

कल्पः—“अपां ग्रहान्गृह्णात्याग्नीध्रे वायव्यैर्गृह्यन्ते षोडश सप्तदश वा ग्रहा गृह्यन्ते तावन्त एव ग्रहा गृह्यन्ते, अर्थेतः स्थेति सारस्वतीष्वप्सु हुत्वैतेनैव मन्त्रेण गृह्णात्येवमुत्तरैर्येन जुहोति तेन गृह्णाति, अपां पतिरिति समुद्रियाः सैन्धवीर्वाऽपो वाऽन्यः पुंनदः स्यात्पुरुषे पशौ वाऽभ्यवेते प्रतीपमन्य ऊर्मिर्युध्यत्यन्वीपमन्यो वृषाऽसीति यः प्रतीपं वृषसेनोऽसीति योऽन्वीपं व्रजक्षित

---

१ ख. घ. ङ. च. वा गृं।

इति कूप्यानां मरुतामोज इति याः प्रतीपं गच्छन्ति ह्रादुनीनां वा [1]प्रभावरीः स्थेति यो उत्स्यन्दित्वा तत्रैव प्रत्यवसिच्यन्ते परिवाहिणीः स्थेति परिनदीनां सूर्यवर्चस इत्यातपति वर्ष्याणां सूर्यत्वचस इति यासु रूपाणि परिदृश्यन्ते मान्दा इति स्थावराणां वाशा इति पुष्पाणां शक्करीः स्थेति गोरुल्ब्यानां विश्वभृत इति पयसो जनभृत इति दध्नोऽग्नेस्तेजस्या इति घृतस्यापामोषधीनाꣳ रस इति मधुनोऽपो देवीर्मधुमतीरगृह्णन्निति सर्वत्र होमे ग्रहणे चानुषजति राष्ट्रदाः स्थ राष्ट्रं दत्त स्वाहेति होमसंयुक्ते राष्ट्रदाः स्थ राष्ट्रममुष्मै दत्तेति ग्रहणसंयुक्ते " इति।

सूत्रार्थो मन्त्रव्याख्यान एव स्पष्टी भविष्यति। [3]प्रभावरीः स्थ परिवाहिणीः स्थेति मन्त्रद्वयं शाखान्तरगतम् ॥

अत्र मन्त्रपाठस्तु—

अर्थेतः स्थापां पतिरसि वृषाऽस्यूर्मिर्वृषसे-
नोऽसि व्रजक्षितः स्थ मरुतामोजः स्थ सूर्य-
वर्चसः स्थ सूर्यत्वचसः स्थ मान्दाः स्थ वाशाः
स्थ शक्करीः स्थ विश्वभृतः स्थ जनभृतः स्थाग्ने-
स्तेजस्याः स्थापामोषधीनाꣳ रसः स्थापो देवी-
र्मधुमतीरगृह्णन्नूर्जस्वती राजसूयाय चितानाः।
याभिर्मित्रावरुणावभ्यषिञ्चन्याभिरिन्द्रमनयन्न-
त्यरातीः। राष्ट्रदाः स्थ राष्ट्रं दत्त स्वाहा
राष्ट्रदाः स्थ राष्ट्रममुष्मै दत्त ॥, इति ॥

हे सारस्वत्य आपो यूयमर्थेतः स्थ, अर्थं प्रयोजनमुद्दिश्य सरस्वत्या नद्याः सकाशाद्यज्ञदेशं यन्ति गच्छन्तीत्यर्थेतः, यूयं तथाविधाः स्थ। समुद्रं कांचिन्नदीं पुंनदं वा संबोध्यापां पतिरसीत्युच्यते। त्वदीयं जलं गृह्णामीत्यभिप्रायः। हे प्रतीपं युध्यन्नूर्मे त्वं वृषाऽसि सेचकोऽसि। हेऽन्वीपं युध्यन्नूर्मे त्वं वृषसेनोऽसि सेचनक्षमा सेना जलराशिरूपा यस्यासौ वृषसेनः। पुरुषे पशौ वा नदीमुत्तरीतुं प्रविष्टे सत्युपरिभागस्थ ऊर्मिः प्रवाहस्योर्म्यन्तरेण युध्यति, अधोभागस्थः प्रवाहानुकूलः सहसा गच्छन्नूर्म्यन्तरेण युध्यति, तदुभयमत्रोक्तम्। हे कूप्या

१ ख. प्रहाव॰। २ क. घ. ङ. च. यावदुत्स्य॰। ३ ख. प्रहाव॰।

( राजसूयविषयाणामभिषेकार्थजलविषयमन्त्राणामभिधानम् )

आपो यूयं व्रजक्षितः स्थ, व्रजे गोष्ठवद्बहीनां निवासयोग्ये कूपस्थाने क्षियन्ति निवसन्तीति व्रजक्षितः। हे प्रतीपगामिन्य आपो यूयं मरुतामोजः स्थ वायूनां बलरूपा भवत। आवर्तादिषु वायुना प्रतिहताः सत्यः प्रतीपं गच्छन्ति। हे आतपयुक्तवृष्टिसंबन्धिन्य आपो यूयं सूर्यवर्चसः स्थ, सूर्यवद्वर्चस्तेजो यासां ताः सूर्यवर्चसः। हे सूर्यादिप्रतिबिम्बग्राहिण्य आपो यूयं सूर्यत्वचसः स्थ, सूर्यस्य त्वक्शरीरं प्रतिबिम्बरूपेण यासु तिष्ठति ताः सूर्यत्वचसः। हे स्थावरा आपो यूयं मान्दाः स्थ गत्यभावान्मन्दरूपाः स्थ। हे नीहारगता आपो यूयं वाशाः स्थ वश्या भवत। नीहारो हि नदीप्रवाहवन्मनुष्यगतिं न प्रतिबध्नाति ततो वश्यत्वम्। गोर्गर्भवेष्टन उल्बे स्थिता हे आपो यूयं शक्करीः स्थ गर्भरक्षणे शक्ता भवत। हे क्षीरगता आपो यूयं विश्वभृतः स्थ, विश्वं बिभ्रतीति विश्वभृतः। क्षीरेण हि प्राणिजातं पुष्यते। हे दधिगता आपो यूयं जनभृतः स्थ। पूर्ववद्व्याख्येयम्। हे घृतद्रवरूपा आपो यूयमग्नेस्तेजस्याः स्थ, ज्वालारूपत्वाद्घृतमग्नेस्तेजस्तेन भवास्तेजस्याः। हे मधुद्रवरूपा आपो यूयमपामोषधीनां रसः स्थ। पुष्परसजन्यत्वादुभयसारत्वं प्रसिद्धम्। राजसूयार्थं चितानाश्चिन्तयन्त ऋत्विजोऽपोऽगृह्णन्। कीदृशीः। देवीर्दीप्यमाना मधुमतीर्मधुरा ऊर्जस्वतीर्बलप्रदाः। ता एव पुनर्विशेष्यन्ते—याभिरद्भिर्देवताः पूर्वं मित्रावरुणावभ्यषिञ्चन्पुनरपि याभिरद्भिररातीः शत्रूनतिक्रम्येन्द्रमनयंस्तादृशीरपोऽगृह्णन्नित्यन्वयः। हे आपो यूयं राष्ट्रप्रदत्वाद्यजमानाय राष्ट्रं दत्त स्वाहा तुभ्यमिदं स्वाहुतम्। हे आपो राष्ट्रप्रदत्वादमुष्मै रामयुधिष्ठिरादिवर्मणे राष्ट्रं दत्त। अत्रार्थेत्यादिषु पञ्चदशसु मन्त्रेष्वपो देवीरित्यृगियं शेषत्वेनानुषज्यते। स्वाहाकारान्तो राष्ट्रदा इति मन्त्रो होमकाले शेषत्वेनानुषज्यते। तद्रहितस्तु ग्रहणकाले॥

विधत्ते—

"अर्थेतः स्थेति जुहोति। आहुत्यैवैना निष्क्रीय गृह्णाति। अथो हविष्कृतानामेवाभिघृतानां गृह्णाति।" [ब्रा० का० १ प्र० ७ अ० ५] इति।

एनाः सरस्वत्यादिनदीगता अपो निष्क्रीय निःशेषेण क्रीत्वा। किंचाऽऽहुत्या हविष्कृता हवीरूपत्वं प्रापिता भवन्ति। आज्यहोमस्याभिघारणरूपत्वात्॥

होमादूर्ध्वमनेन मन्त्रेण ग्रहणं विधत्ते—

"वहन्तीनां गृह्णाति। एता वा अपाꣳ राष्ट्रम्। राष्ट्रमेवास्मै गृह्णाति। अथो श्रियमेवैनमभिवहन्ति।" [ब्रा० का० १ प्र० ७ अ० ५] इति।

सरस्वत्यामन्यस्यां वा नद्यां प्रवाहरूपा वहन्त्यस्तासां सकाशाद्गृही-

यात् । एता एव वहन्त्यः कूल्यारूपेण बहुविधसस्योपकारित्वादपां राष्ट्रमित्युच्यते । तद्ग्रहणेन यजमानार्थं राष्ट्रं कृतं भवति । किं चैनं यजमानं प्रति श्रियं वहन्ति ॥

स्त्रीलिङ्गपुंलिङ्गस्याभिप्रायं दर्शयति—

" अपां पतिरसीत्याह । मिथुनमेवाकः । " [ ब्रा० का० १ प्र० ७ अ० ५ ] इति ॥

यजमानस्य सस्याभिवृद्धये जलसंपत्तिं प्रदर्शयति—

" वृषाऽस्यूर्मिरित्याह ( १ ) । ऊर्मिमन्तमेवैनं करोति । " [ ब्रा० का० १ प्र० ७ अ० ५ ] इति ॥

स्वाधीनसेनायुक्तत्वं दर्शयति—

" वृषसेनोऽसीत्याह । सेनामेवास्य सꣳश्यति । " [ ब्रा० का० १ प्र० ७ अ० ५ ] इति ॥

वैश्यादिप्रजासंपत्तिं दर्शयति—

" व्रजक्षितः स्थेत्याह । एता वा अपां विशः । विशमेवास्मै पर्यूहति । " [ ब्रा० का० १ प्र० ७ अ० ५ ] इति ।

नगरस्थितवैश्यवत्कूपे सर्वदाऽवस्थानाद्वैश्यत्वम् ॥

अन्नप्राप्तिं दर्शयति—

" मरुतामोजः स्थेत्याह । अन्नं वै मरुतः । अन्नमेवावरुन्धे । " [ ब्रा० का० १ प्र० ७ अ० ५ ] इति ॥

राष्ट्रस्य वैर्यनभिभवरूपं तेजो दर्शयति—

" सूर्यवर्चसः स्थेत्याह ( २ ) । राष्ट्रमेव वर्चस्व्यकः । " [ब्रा० का० १ प्र० ७ अ० ५ ] इति ॥

सत्यानृतप्रयुक्तं स्वातन्त्र्यं दर्शयति—

" सूर्यत्वचसः स्थेत्याह । सत्यं वा एतत् । यद्वर्षति । अनृतं यदातपति वर्षति । सत्यानृते एवावरुन्धे । " [ ब्रा० का० १ प्र० ७ अ० ५ ] इति ।

आतपरहिताया वृष्टेः प्रभूतत्वेन फलपर्यन्तस्थायित्वादातपयुक्तायास्तद्वैपरीत्यम्[1] । सर्वत्र सत्यं वक्तुमनृतं वर्जयितुं क्षमत्वं तयोरवरोधः ॥

वेदनं प्रशंसति—

" नैनꣳ सत्यानृते उदिते हिꣳस्तः । य एवं वेद । " [ ब्रा० का० १ प्र० ७ अ० ५ ] इति ॥

१ क. घ. ङ. च. °त्वात्तद° ।

( राजसूयविषयाणामभिषेकार्थजलविषयमन्त्राणामभिधानम् )

स्थिरास्वप्सु घर्षणादिकं विस्रम्भेण कर्तुं शक्यत्वाद्राष्ट्रगतब्राह्मणवर्गस्य ब्रह्मवर्चसं दर्शयति—

" मान्दाः स्थेत्याह । राष्ट्रमेव ब्रह्मवर्चस्यकः ( ३ ) । " [ ब्रा० का० १ प्र० ७ अ० ५ ] इति ॥

नीहारे वश्यत्वस्य दर्शितत्वाद्राष्ट्रस्यापि वश्यत्वं दर्शयति—

" वाशाः स्थेत्याह । राष्ट्रमेव वश्यकः । " [ब्रा०का०१प्र०७अ०५]इति ॥

उल्बगतानामपां पशुसंबन्धात्पशुप्राप्तिं दर्शयति—

" शक्करीः स्थेत्याह । पशवो वै शक्करीः । पशूनेवावरुन्धे । " [ ब्रा० का० १ प्र० ७ अ० ५ ] इति ॥

क्षीरस्थजलेन क्षीरसंपत्तिं दर्शयति—

" विश्वभृतः स्थेत्याह । राष्ट्रमेव पयस्व्यकः । " [ ब्रा० का० १ प्र० ७ अ० ५ ] इति ॥

दध्न इन्द्रियप्रदत्वात्तज्जलेनेन्द्रियसंपत्तिं दर्शयति—

" जनभृतः स्थेत्याह । राष्ट्रमेवेन्द्रियाव्यकः । " [ ब्रा० का० १ प्र० ७ अ० ५ ] इति ॥

घृतस्य तेजोरूपत्वात्तेजःसमृद्धिं दर्शयति—

" अग्नेस्तेजस्याः स्थेत्याह ( ४ ) । राष्ट्रमेव तेजस्व्यकः । " [ ब्रा०का०१ प्र० ७ अ० ५ ] इति ॥

अबोषधिरसस्य मधुत्वान्मधुसंपत्तिं दर्शयति—

" अपामोषधीनाꣳ रसः स्थेत्याह । राष्ट्रमेव मधव्यमकः । " [ ब्रा० का० १ प्र० ७ अ० ५ ] इति ॥

वहन्तीनां गृह्णातीति नदीमात्रप्रवाहे जलग्रहणं यदुक्तं तस्यानुकल्पत्वं द्योतयन्मुख्यकल्पं विधत्ते—

" सारस्वतं ग्रहं गृह्णाति । एषा वा अपां पृष्ठम् । यत्सरस्वती । पृष्ठमेवैनꣳ समानानां करोति । " [ ब्रा० का० १ प्र० ७ अ० ५ ] इति ।

सरस्वत्याख्यान्नदीविशेषादानीयमानः सारस्वतः । अपां पृष्ठं पृष्ठवदुपरिवर्तिनी प्रशस्तेत्यर्थः । पृष्ठमेव करोत्युत्कृष्टमेव करोतीत्यर्थः ॥

शाखान्तरगतेनैकेन मन्त्रेण सह षोडशसंख्यां विधत्ते—

" षोडशभिर्गृह्णाति । षोडशकलो वै पुरुषः । यावानेव पुरुषः । तस्मिन्वीर्यं दधाति । " [ ब्रा० का० १ प्र० ७ अ० ५ ] इति ।

षोडशसंख्याकाः कला अवयवा यस्येति षोडशकलः । एकादशेन्द्रियैः पञ्चभूतैश्चोत्पादितत्वाच्छरीरस्य षोडशकलत्वम् ॥

अर्थेत इत्यादीनां षोडशमन्त्राणां होमशेषत्वं ग्रहणशेषत्वं च पूर्वं विहितम्, अर्थेतः स्थेति जुहोति वहन्तीनां गृह्णातीत्यभिधानात्तत्रोभयत्रावस्थितां षोडशसंख्यां समस्य प्रशंसति—

“ षोडशभिर्जुहोति षोडशभिर्गृह्णाति । द्वात्रिꣳशत्संपद्यन्ते । द्वात्रिꣳशदक्षराऽनुष्टुक् । वागनुष्टुप्सर्वाणि छन्दाꣳसि । वाचैवैनꣳ सर्वेभिश्छन्दोभिरभिषिञ्चति ( ५ ) । ” [ ब्रा० का० १ प्र० ७ अ० ५ ] इति ।

अनुष्टुप्छन्दसोऽक्षरसंघातगामित्वाद्वाग्रूपत्वम् । अनुष्टुभो वा इमानि जायन्त इति तापनीये सर्वजगद्धेतुत्वाभिधानात्सर्वच्छन्दोरूपत्वम् ॥

अत्र विनियोगसंग्रहः—

“ सारस्वतीजलेऽर्थेति होमः सामुद्रिके त्वपाम् ।
वृषाऽसीति प्रतीपोर्मावन्वीपोर्मौ पुनर्वृष ॥ १ ॥
व्रज कूप्यासु मरुतां वायुप्रतिहतास्त्वथ ।
सूर्यश्चाऽऽ(वाऽऽ)तपवृष्टासु सूर्यं बिम्बयुतासु च ॥ २ ॥
मान्दाः स्थिरासु वाशाः स्थ नीहारस्थासु शक्करीः ।
गवोल्बस्थासु विश्वेति क्षीरगासु जनेति तु ॥ ३ ॥
दधिगासु घृतस्थासु त्वग्नेर्मधुगतासु तु ।
अपामपः सर्वशेष ऋगेषा राष्ट्रदा इति ।
स्वाहान्तो होमगोऽन्यस्तु ग्रहणे दश पञ्च च ॥ ४ ॥ ” इति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डेऽष्टमप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

---

( अथ प्रथमाष्टकेऽष्टमप्रपाठके द्वादशोऽनुवाकः । )

---

देवीरापः सं मधुमतीर्मधुमतीभिः सृज्यध्वं महि वर्चः क्षत्रियाय वन्वाना अनाधृष्टाः सीदतोर्जस्वतीर्महि वर्चः क्षत्रियाय दधतीरनिभृष्ट-

मसि वाचो बन्धुस्तपोजाः सोमस्य दात्रमसि शुक्रा वः शुक्रेणोत्पुनामि चन्द्राश्चन्द्रेणामृता अमृतेन स्वाहा राजसूयाय चिताना: । सधमादो द्युम्निनीरूर्ज एता अनिभृष्टा अपस्युवो वसानः । पस्त्यासु चक्रे वरुणः सधस्थमपाꣳ शिशुः ( १ ) मातृतमास्वन्तः । क्षत्रस्योल्बमसि क्षत्रस्य योनिरस्याविन्नो अग्निर्गृहपतिराविन्न इन्द्रो वृद्धश्रवा आविन्नः पूषा विश्ववेदा आविन्नौ मित्रावरुणावृतावृधावाविन्ने द्यावापृथिवी धृतव्रते आविन्ना देव्यदितिर्विश्वरूप्याविन्नोऽयमसावामुष्यायणोऽस्यां विश्यस्मिन्राष्ट्रे महते क्षत्राय महत आधिपत्याय महते जानराज्यायैष वो भरता राजा सोमोऽस्माकं ब्राह्मणानाꣳ राजेन्द्रस्य ( २ ) वज्रोऽसि वार्त्रघ्नस्त्वयाऽयं वृत्रं वध्याच्छत्रुबाधनाः स्थ पात मा प्रत्यञ्चं पात मा तिर्यञ्चमन्वञ्चं मा पात दिग्भ्यो मा पात विश्वाभ्यो मा नाष्ट्राभ्यः पात हिरण्यवर्णावुषसां विरोकेऽयःस्थूणावुदितौ सूर्यस्याऽऽरोहतं वरुण मित्र गर्तं ततश्चक्षाथामदितिं दितिं च ( ३ ) ॥

( राजसूयविषयाणामभिषेकार्थजलसंस्कारमन्त्राणामभिधानम् )

( शिशुरिन्द्रस्यैकंचत्वारिꣳ शच्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टकेऽ-
ष्टमप्रपाठके द्वादशोऽनुवाकः ॥ १२ ॥

---

( अथ प्रथमकाण्डेऽष्टमप्रपाठके द्वादशोऽनुवाकः । )

---

देवीः । आपः । समिति । मधुमतीरिति मधु—मतीः । मधुमतीभिरिति मधु—मतीभिः । सृज्यध्वम् । महि । वर्चः । क्षत्रियाय । वन्वानाः । अनाधृष्टा इत्यना—धृष्टाः । सीदत । ऊर्जस्वतीः । महि । वर्चः । क्षत्रियाय । दधतीः । अनिभृष्टमित्यनि—भृष्टम् । असि । वाचः । बन्धुः । तपोजा इति तपः—जाः । सोमस्य । दात्रम् । असि । शुक्राः । वः । शुक्रेण । उदिति । पुनामि । चन्द्राः । चन्द्रेण । अमृताः । अमृतेन । स्वाहा । राजसूयायेति राज—सूयाय । चितानाः । सधमाद इति सध—मादः । द्युम्निनीः । ऊर्जः । एताः । अनिभृष्टा इत्यनि—भृष्टाः । अपस्युवः । वसानः । पस्त्यासु । चक्रे । वरुणः । सधस्थमिति सध—स्थम् । अपाम् । शिशुः (१) । मातृतमास्विति मातृ—तमासु । अन्तः । क्षत्रस्य । उल्बम् । असि । क्षत्रस्य । योनिः ।

( राजसूयविषयाणामभिषेकार्थजलसंस्कारमन्त्राणामभिधानम् )

असि। आविन्नः । अग्निः । गृहपतिरिति गृह—पतिः । आविन्नः । इन्द्रः। वृद्धश्रवा इति वृद्ध—श्रवाः। आविन्नः। पूषा । विश्ववेदा इति विश्व—वेदाः। आविन्नौ। मित्रावरुणाविति मित्रा—वरुणौ। ऋतावृधावित्यृत—वृधौ । आविन्ने इति। द्यावापृथिवी इति द्यावा—पृथिवी । धृतव्रते इति धृत—व्रते। आविन्ना । देवी । अदितिः। विश्वरूपीति विश्व—रूपी। आविन्नः । अयम् । असौ। आमुष्यायणः। अस्याम् । विशि । अस्मिन्। राष्ट्रे। महते। क्षत्राय । महते । आधिपत्यायेत्याधि—पत्याय। महते । जानराज्यायेति जान—राज्याय। एषः। वः। भरताः। राजा। सोमः। अस्माकम् । ब्राह्मणानाम् । राजा । इन्द्रस्य ( २ )। वज्रः। असि । वार्त्रघ्न इति वार्त्र—घ्नः। त्वया। अयम्। वृत्रम्। वध्यात्। शत्रुबाधना इति शत्रु—बाधनाः। स्थ। पात। मा। प्रत्यञ्चम् । पात। मा । तिर्यञ्चम्। अन्वञ्चम्। मा। पात। दिग्भ्य इति दिक्—भ्यः। मा। पात । विश्वाभ्यः। मा। नाष्ट्राभ्यः। पात। हिरण्यवर्णाविति हिरण्य—वर्णौ। उषसाम् । विरोक इति वि—रोके । अयःस्थूणावित्ययः—

स्थूणौ । उदिताविन्युत्—इतौ । सूर्यस्य । एति । रोहतम् । वरुण । मित्र । गर्तम् । ततः । चक्षाथाम् । अदितिम् । दितिम् । च ( ३ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टकेऽष्टमप्रपाठके द्वादशोऽनुवाकः ॥ १२ ॥

---

( अथ प्रथमकाण्डेऽष्टमप्रपाठके द्वादशोऽनुवाकः । )

---

एकादशेऽभिषेकजलमन्त्रा उक्ताः । द्वादशे तज्जलसंस्कारमन्त्रा उच्यन्ते ।

कल्पः—" देवीराप इति वैतसे सते ग्रहान्समवनीय " इति ।

अप्सु जातो वृक्षविशेषो वेतसस्तेन निर्मितं द्रोणकलशसदृशं पात्रं सतं तस्मिन्सते वायव्यैर्गृहीतास्ता अपोऽवनयेत् ।

पाठस्तु—

देवीरापः सं मधुमतीर्मधुमतीभिः सृज्यध्वं
महि वर्चः क्षत्रियाय वन्वानाः, इति ।

हे आपो देव्यो नानापात्रेषु गृहीता यूयं क्षत्रियाय राज्ञे महि वर्चो वन्वाना महत्तेजः संपादयन्त्यः परस्परं संसृज्यध्वम् । कीदृश्यः कीदृशीभिः सह, मधुमतीर्मधुरा मधुमतीभिर्मधुराभिः सह ॥

मन्त्रसामर्थ्येन परस्परं संसर्गः संपद्यत इति दर्शयति—

" देवीरापः सं मधुमतीर्मधुमतीभिः सृज्यध्वमित्याह । ब्रह्मणैवैनाः सꣳसृजति । " [ ब्रा० का० १ प्र० ७ अ० ६ ] इति ॥

कल्पः—" अनाधृष्टाः सीदतेत्यन्तरा होतुर्धिष्ण्यं ब्राह्मणाच्छंसिनश्च सादयित्वा " इति ।

पाठस्तु—

अनाधृष्टाः सीदतोर्जस्वतीर्महि
वर्चः क्षत्रियाय दधतीः, इति ।

हे आपोऽनाधृष्टाः केनाप्यतिरस्कृता ऊर्जस्वतीः सारस्वत्यः सीदत तिष्ठत । किं कुर्वत्यः । राज्ञे महद्वर्चो दधत्यः ॥

( राजसूयविषयाणामभिषेकार्थजलसंस्कारमन्त्राणामभिधानम् )

मन्त्रसामर्थ्येनैवाऽऽसामुपवेशनमपि संपद्यत इत्याह—

" अनाधृष्टाः सीदतेत्याह। ब्रह्मणैवैनाः सादयति। " [ ब्रा० का० १ प्र० ७ अ० ६ ] इति ॥

विधत्ते—

" अन्तरा होतुश्च धिष्णियं ब्राह्मणाच्छꣳसिनश्च सादयति। आग्नेयो वै होता। ऐन्द्रो ब्राह्मणाच्छꣳसी। तेजसा चैवेन्द्रियेण चोभयतो राष्ट्रं परिगृह्णाति। " [ ब्रा० का० १ प्र० ७ अ० ६ इति।

प्र वो देवायाग्नय इत्याद्याग्नेयशस्त्रपाठाद्धोताऽऽग्नेयः। इन्द्र त्वा वृषभं वयमित्याद्यैन्द्रशस्त्रपाठाद्ब्राह्मणाच्छंसिन ऐन्द्रत्वम् ॥

कल्पः—" अनिभृष्टमसीति तस्मिन्शतमानं हिरण्यमवधाय " इति।

पाठस्तु—

अनिभृष्टमसि वाचो बन्धुस्त-
पोजाः सोमस्य दात्रमसि, इति।

हे हिरण्य त्वमनिभृष्टमसि यवादिवद्वह्निसंयोगेऽपि नितरां भृष्टं नासि न भवसि। किं च, वाचो बन्धुरसि। हिरण्यवत्तया हि राजामात्यादीनां वाक्सर्वैराद्रियते। तपोजा असि संतापवतोऽग्नेर्जातोऽसि हिरण्यस्याग्निरेतस्त्वात्। तथा चाऽऽधानप्रकरणेऽग्निं प्रकृत्य श्रूयते—" तस्य रेतः परापतत्। तद्धिरण्यमभवत् " इति। सोमस्य दात्रमसि सोमस्य क्रयार्थं त्वं दत्तमसि, " हिरण्येन क्रीणाति " इति श्रुतेः ॥

कल्पः—" शुक्रा वः शुक्रेणोत्पुनामीति तेनोत्पूय " इति।

पाठस्तु—

शुक्रा वः शुक्रेणोत्पुनामि चन्द्राश्चन्द्रेणामृता
अमृतेन स्वाहा राजसूयाय चितानाः।, इति।

हे आपः शुक्रा वो दीप्तिमतीर्युष्माञ्शुक्रेण दीप्तिमता हिरण्येनोत्पुनामि। कीदृशीः कीदृशेन, चन्द्राश्चन्द्रेण। उभयोराह्लादकत्वं प्रसिद्धम्। अमृता अमृतेन। स्वादुत्वादापोऽमृताः। प्रियत्वाद्धिरण्यममृतम्। पुनरपि कीदृशीः, स्वाहाकारसंपादितहोमयुक्ताय राजसूयाय चितानाः संपादिताः ॥

विधत्ते—

" हिरण्येनोत्पुनाति । आहुत्यै हि पवित्राभ्यामुत्पुनन्ति व्यावृत्त्यै(१)। " [ ब्रा० का० १ प्र० ७ अ० ६ ] इति ।

पात्रे स्थापितं हिरण्यं दर्भेण दीर्घसूत्रेण वा प्रग्रथ्य तत्सूत्रं हस्ताभ्यां धृत्वोत्पुनीयात् । आज्यं त्वाहुत्यर्थं पवित्राभ्यामेवोत्पूयते । आपस्त्वभिषेकार्था इत्याज्याद्व्यावृत्त्यर्थं हिरण्येनोत्पवनम् ॥

हिरण्यपरिमाणं विधत्ते—

" शतमानं भवति । शतायुः पुरुषः शतेन्द्रियः । आयुष्येवेन्द्रिये प्रतितिष्ठति । " [ ब्रा० का० १ प्र० ७ अ० ६ ] इति ।

वाजपेये यूपावरोहणप्रसङ्गे वाक्यमेतद्व्याख्यातम् ॥

मन्त्रद्वयभागानामर्थो लोकसिद्ध इति दर्शयति—

" अनिभृष्टमसीत्याह । अनिभृष्टꣳ ह्येतत् । वाचो बन्धुरित्याह । वाचो ह्येष बन्धुः । तपोजा इत्याह । तपोजा ह्येतत् । सोमस्य दात्रमसीत्याह ( २ )। सोमस्य ह्येतद्दात्रम् । शुक्रा वः शुक्रेणोत्पुनामीत्याह । शुक्रा ह्यापः । शुक्रꣳ हिरण्यम् । चन्द्राश्चन्द्रेणेत्याह । चन्द्रा ह्यापः । चन्द्रꣳ हिरण्यम् । अमृता अमृतेनेत्याह । अमृता ह्यापः । अमृतꣳ हिरण्यम् ( ३ )। स्वाहा राजसूयायेत्याह । राजसूयाय ह्येना उत्पुनाति । " [ब्रा० का० १ प्र० ७ अ० ६] इति ।

राजसूयाय राजसूयान्तर्गतराजाभिषेकाय ॥

कल्पः—" सधमादो द्युम्निनीरिति चतुर्षूदपात्रेषु व्यानयति पालाश औदुम्बर आश्वत्थे नैयग्रोधे च " इति ।

पाठस्तु—

सधमादो द्युम्निनीरूर्ज एता अनिभृष्टा अपस्युवो वसानः । पस्त्यासु चक्रे वरुणः सधस्थमपाꣳ शिशुर्मातृतमास्वन्तः ।, इति ।

वरुणः पस्त्यासु गृहस्थानीयास्वप्सु अन्तर्मध्ये सधस्थं चक्रे ताभिरद्भिः सह स्थितिं कृतवान् । कीदृशीषु पस्त्यासु, मातृतमासु । अतिशयेन मातरो मातृतमा अतिस्नेहयुक्ता मातरो हि पुत्रं पालयन्ति प्रियं तद्वत्पालयित्र्य इत्यर्थः । कीदृशो वरुणः । अपां शिशुः, मातृस्थानीयानामपां पुत्रस्थानीयः । किं कुर्वन्, वसान एता अपो वस्त्रवदाच्छादयन् । कीदृशीरपः, सधमादः स्वान्तःस्थितेन वरुणेन सहैकस्मिन्देशे स्थित्वा तं वरुणं मादयित्रीर्हर्षयित्रीः, द्युम्नि-

( राजसूयविषयाणामभिषेकार्थजलसंस्कारमन्त्राणामभिधानम् )

नीर्दीप्तिमतीर्धनवतीर्वा, ऊर्जो बलहेतुभूताः, अनिभृष्टा यवादिवञ्चर्जना-योग्याः, अपस्युवः कर्माणीच्छन्तीः ॥

विधत्ते—

" सधमादो द्युम्निनीरूर्ज एता इति वारुण्यर्चा गृह्णाति। वरुणसवमेवाव-रुन्धे।" [ ब्रा० का० १ प्र० ७ अ० ६ ] इति।

वरुणसवं वरुणानुज्ञानम् ॥

ऋच एकत्वं प्रशंसति—

" एकया गृह्णाति। एकधैव यजमाने वीर्यं दधाति।" [ ब्रा० का० १ प्र० ७ अ० ६ ] इति ॥

## क्षत्रस्योल्बमसि क्षत्रस्य योनिरसि—

कल्पः—" क्षत्रस्योल्बमसीति तार्प्यं यजमानः परिधत्ते, क्षत्रस्य योनिर-सीति पाण्डुरमुष्णीषं द्वितीयं श्वेतं पाण्डुरमित्याचक्षते " इति।

तार्प्यं घृताक्तं वस्त्रम्। वाजपेये व्याख्यातौ मन्त्रौ ॥

विधत्ते—

" क्षत्रस्योल्बमसि क्षत्रस्य योनिरसीति तार्प्यं चोष्णीषं च प्रयच्छति सयोनित्वाय।" [ ब्रा० का० १ प्र० ७ अ० ६ ] इति।

यजमानो राजत्वात्क्षत्रियः। तार्प्योष्णीषयोरपि क्षत्रसंबन्धित्वे सयो-नित्वं समानजातित्वं भवति ॥

विधत्ते—

" एकशतेन दर्भपुञ्जीलैः पवयति। शतायुर्वै पुरुषः शतवीर्यः। आत्मैक-शतः ( ४ )। यावानेव पुरुषः। तस्मिन्वीर्यं दधाति।" [ ब्रा० का० १ प्र० ७ अ० ६ ] इति।

बहुभिर्दर्भनाडीभिर्युक्तमेकं काण्डं दर्भपुञ्जीलं, तादृशैरेकाधिकशतसंख्या-कैर्यजमानं शोधयेत्। शतवीर्यः शतेन्द्रिय आत्मा यजमानजीवः शताधिकामे-कत्वसंख्यां पूरयति ॥

द्रव्यत्रयभक्षणं क्रमेण विधत्ते—

" दध्याशयति। इन्द्रियमेवावरुन्धे। उदुम्बरमाशयति। अन्नाद्यस्याव-रुद्ध्यै। शष्पाण्याशयति। सुराबलिमेवैनं करोति।" [ ब्रा० का० १ प्र० ७ अ० ६ ] इति।

---

१ ख. घ. ङ. च. पाण्डर॰। २ ख. घ. पाण्डर॰।

दध्न इन्द्रियमियत्वात्तेनेन्द्रियावरोधः । उदुम्बरफलस्य मधुरत्वान्मृदुत्वा[त्]तुं योग्यत्वम् । शष्पाणि बालतृणानि व्रीहियवाङ्कुराणीत्यर्थः । तेषां [अ]राजनकत्वात्सुरात्वम् । सा च सुरा बलिः पूजा यस्य सोऽयं यजमानः [सु]राबलिः ॥

कल्पः—"आविन्नो अग्निरित्याविदो यजमानं वाचयन्बहिरुदानीय"इति।

आविद आवित्संज्ञका मन्त्राः सप्त। उदानीयाऽऽग्नीध्रीयाद्बहिर्निःसार्य ।

पाठस्तु—

आविन्नो अग्निर्गृहपतिराविन्न इन्द्रो वृद्धश्रवा आविन्नः पूषा विश्ववेदा आविन्नौ मित्राव- रुणावृतावृधावाविन्ने द्यावापृथिवी धृतव्रते आविन्ना देव्यदितिर्विश्वरूप्याविन्नोऽयमसावा- मुष्यायणोऽस्यां विश्यस्मिन्राष्ट्रे महते क्षत्राय महत आधिपत्याय महते जानराज्याय, इति ।

अग्निरिदानीं गृहपतिराविन्नोऽनेन कर्मणा गृहपतित्वं लब्धवान् । इन्द्रः [प्र]वृद्धकीर्तिं लब्धवान् । पूषा विज्ञानं लब्धवान् । मित्रावरुणौ सत्यवचनवृद्धिं लब्धवन्तौ । द्यावापृथिव्यौ नियमेन सर्वस्वव्यापाररूपं व्रतधारणं लब्धवत्यौ । अदितिर्देवमाता च सर्वदेवशरीरयुक्तत्वं लब्धवती, देवतारूपान्बहुपुत्रानुत्पा[द]यतीत्यर्थः । अयं पुरतो वर्तमानोऽसौ नरसिंहवर्माऽऽमुष्यायणोऽमुष्य राजे[न्]द्रवर्मणः पुत्रः पौत्रो वा । तादृशो यजमानोऽस्यां प्रजायामस्मिन्राष्ट्रे महद्भ्यः [क्ष]त्रत्वादिपूर्वव्याख्यातगुणेभ्यः पर्याप्तः सन्नाविन्नस्तान्गुणाँल्लब्धवानित्यर्थः ॥

एष वो भरता राजा सोमोऽ-
स्माकं ब्राह्मणानाꣳ राजा—

कल्पः—" एष वो भरता राजेत्युक्त्वा " इति ।

पूर्ववदनेन मन्त्रेण यजमानं रत्निभ्यः प्रदाय " सोमोऽस्माकं ब्राह्मणानाꣳ राजा " इति ब्रह्मा जपतीत्यर्थः ॥

विधत्ते—

" आविद एता भवन्ति । आविदमेवैनं गमयन्ति ( ५ ) । "[ ब्रा०का०१ प्र० ७ अ० ६ ] इति ।

(राजसूयविषयाणामभिषेकार्थजलसंस्कारमन्त्राणामभिधानम्)

एता आविन्न इत्याद्या आवित्संज्ञका मन्त्रवाचो वाचनीया भवन्तीत्यर्थः। तेनैनं यजमानमाविदं गृहपतित्वादिलाभं प्रापयन्तीत्यर्थः॥

आद्यमन्त्रचतुष्टयपाठं प्रशंसति—

"अग्निरेवैनं गार्हपत्येनावति। इन्द्र इन्द्रियेण। पूषा पशुभिः। मित्रावरुणौ प्राणापानाभ्याम्।" [ब्रा० का० १ प्र० ७ अ० ६] इति।

गार्हपत्यं गृहपतित्वम्। इन्द्रियेणावतीत्यनुवर्तते॥

पञ्चममन्त्रं प्रशंसति—

"इन्द्रो वृत्राय वज्रमुदयच्छत्। स दिवमलिखत्। सोऽर्यम्णः पन्था अभवत्। स आविन्ने द्यावापृथिवी धृतव्रते इति द्यावापृथिवी उपाधावत्। स आभ्यामेव प्रसूत इन्द्रो वृत्राय वज्रं प्राहरत्। आविन्ने द्यावापृथिवी धृतव्रते इति यदाह (६)। आभ्यामेव प्रसूतो यजमानो वज्रं भ्रातृव्याय प्रहरति।" [ब्रा० का० १ प्र० ७ अ० ६] इति।

इन्द्रेणोद्यतस्य वज्रस्य तीक्ष्णतया द्युलोके रेखा संपन्ना। सा च सूर्यस्य मार्गोऽभवत्। तदानीं द्यौरुत्पाटनेन क्षुब्धा यदा वज्रप्रहारायानुज्ञां दत्तवती तदा स इन्द्रोऽनेन मन्त्रेण द्यावापृथिव्यौ सेवित्वा ताभ्यामनुज्ञातो वृत्राय वज्रं प्राहरत्। एवं यजमानोऽप्यनेन मन्त्रेण वैरिणे वज्रं प्रहरति॥

षष्ठमन्त्रं प्रशंसति—

"आविन्ना देव्यदितिर्विश्वरूपीत्याह। इयं वै देव्यदितिर्विश्वरूपी। अस्यामेव प्रतितिष्ठति।" [ब्रा० का० १ प्र० ७ अ० ६] इति।

भूमिरेव कांचिन्मूर्तिं धृत्वा देवमाताऽदितिरित्युच्यते॥

सप्तममन्त्रस्य पूर्वभागं प्रशंसति—

"आविन्नोऽयमसावामुष्यायणोऽस्यां विश्यस्मिन्राष्ट्र इत्याह। विशैवैन॰ राष्ट्रेण समर्धयति। [ब्रा० का० १ प्र० ७ अ० ६] इति।

विशा करप्रदायिन्या प्रजया राष्ट्रेण सर्वसस्ययुक्तेन भूमिविशेषेण च यजमानं समर्धयत्येव॥

तस्य मन्त्रस्योत्तरभागमुत्तरौ च मन्त्रौ पूर्ववद्व्याचष्टे—

"महते क्षत्राय महत आधिपत्याय महते जानराज्यायेत्याह। आशिषमेवैतामाशास्ते। एष वो भरता राजा सोमोऽस्माकं ब्राह्मणाना॰ राजेत्याह। तस्मात्सोमराजानो ब्राह्मणाः (७)।" [ब्रा० का० १ प्र० ७ अ० ६] इति॥

कल्पः—"इन्द्रस्य वज्रोऽसि वार्त्रघ्न इति धनुर्यजमानाय प्रयच्छति" इति।

पाठस्तु—

इन्द्रस्य वज्रोऽसि वार्त्रघ्नस्त्व-
याऽयं वृत्रं वध्यात् , इति।

हे धनुस्त्वमिन्द्रस्य वज्रवत्प्रहारसाधनमसि । अतस्त्वयाऽयं यजमानो वैरिणं वध्यात् ॥

विधत्ते—

“ इन्द्रस्य वज्रोऽसि वार्त्रघ्न इति धनुः प्रयच्छति विजित्यै । ” [ ब्रा० का० १ प्र० ७ अ० ६ ] इति ॥

शत्रुबाधनाः स्थ—

कल्पः—“ शत्रुबाधनाः स्थेति त्रीन्बाणावतः ” इति।

बाणा शल्यं तद्युक्ताग्रानित्यर्थः । त्रीनिषून्प्रयच्छतीति शेषः । हे इषवो यूयं शत्रूणां बाधका भवथ ॥

विधत्ते—

“ शत्रुबाधनाः स्थेतीषून् । शत्रूनेवास्य बाधन्ते । ” [ ब्रा० का० १ प्र० ७ अ० ६ ] इति ।

प्रयच्छतीत्यनुवर्तते ॥

कल्पः—“ पात मा प्रत्यञ्चमिति प्रदीयमानाननुमन्त्रयते ” इति ।

पाठस्तु—

पात मा प्रत्यञ्चं पात मा तिर्यञ्च-
मन्वञ्चं मा पात दिग्भ्यो मा पात
विश्वाभ्यो मा नाष्ट्राभ्यः पात, इति ।

यदा वैरी पुरतः स्थित्वा बाणं मुञ्चति तदानीमयं विध्यमानो बाणस्य प्रत्यङ्मुखो भवति । पार्श्वयोः स्थित्वा बाणमोक्षणेऽयं तिर्यग्भवति । पृष्ठतः स्थित्वा बाणमोक्षणे पलायमानोऽयमन्वग्भवति । हे मदीया बाणाः प्रत्यगादिरूपं मां पात परकीयेभ्यो यथोक्तप्रकारेण मां प्रत्यागच्छद्भ्यो बाणेभ्यो रक्षत । युद्धकुशला हि स्वकीयैर्बाणैः परकीयानपसारयन्ति खण्डयन्ति वा । अतो मद्धस्तेऽवस्थिता हे बाणाः सर्वाभ्यो दिग्भ्यो मां पात । न केवलं परकीयबाणेभ्य एव रक्षणं किं तु विश्वाभ्यः सर्वाभ्यो नाष्ट्राभ्यो नाशहेतुभ्यः शत्रुकृतपीडाभ्यो मां पात ॥

(राजसूयविषयाणामभिषेकार्थजलसंस्कारमन्त्राणामभिधानम्)

मन्त्रस्य पूर्वभागं व्याचष्टे—

"पात मा प्रत्यञ्चं पात मा तिर्यञ्चमन्वञ्चं मा पातेत्याह। तिस्रो वै शरव्याः। प्रतीची तिरश्च्यनूची। ताभ्य एवैनं पान्ति।" [ब्रा० का० १ प्र० ७ अ० ६] इति।

शरव्या हिंसिकाः परकीयहेतयस्ताश्च पूर्वोक्तरीत्या प्रत्यगादिरूपाः॥

मध्यमभागं व्याचष्टे—

"दिग्भ्यो मा पातेत्याह। दिग्भ्य एवैनं पान्ति।" [ब्रा० का० १ प्र० ७ अ० ६] इति।

दूरदेशवर्तिनीषु दिक्षु स्थिताः संधिविग्रहकारिमनुष्यमुखेन(ण) वैरिणो भीषयन्ति। ताभ्यो दूरदेशवर्तिनीभ्यो दिग्भ्य एनं यजमानं हस्तस्था बाणाः पान्त्येव॥

तृतीयभागं व्याचष्टे—

"विश्वाभ्यो मा नाष्ट्राभ्यः पातेत्याह। अपरिमितादेवैनं पान्ति।" [ब्रा० का० १ प्र० ७ अ० ६] इति।

अपरिमिताद्बहुविधाद्ग्रामापहारादिरूपाद्बाधात्॥

कल्पः—"हिरण्यवर्णावित्युद्यतावभिमन्त्रयते" इति।

वेद्धुमुद्यतौ धनुर्बाणयुक्तौ यजमानहस्तौ।

पाठस्तु—

हिरण्यवर्णावुषसां विरोकेऽयःस्थूणावुदितौ
सूर्यस्याऽऽरोहतं वरुण मित्र गर्तं
ततश्चक्षाथामदितिं दितिं च॥, इति॥

हे वरुण शत्रुनिवारक वामहस्त, हे मित्र शत्रुमारक दक्षिणहस्त युवां गर्तमारोहतं, वेद्धुमुद्यतौ धनुर्बाणयुक्तौ यजमानहस्तौ रथस्योपरिभागं गर्तसदृशमारोहतं परकीयबाणेभ्यो रक्षतम्। परितश्चर्मफलकादिभिराच्छादिते सति रथस्योपरिभागो गर्तसदृशो भवति। आरोहणं कदा कर्तव्यमित्युच्यते—उषसां विरोके सूर्यस्योदितौ प्रतिदिनं यान्युषांसि सूर्योदयात्पूर्वभावीनि तेषां संबन्धिनि विशिष्ट आलोके प्रवर्तमाने सति यः सूर्यस्योदयस्तस्मिन्नुत्पन्ने सति। कीदृशौ बाहू। हिरण्यवर्णौ सुवर्णखचितकवचप्रतिमोकेन[2] हिरण्यवर्णा-

१ ख. स्थित्वा। २ क. घ. ङ. च. 'मोचके'।

समानौ। अयःस्थूणौ लोहस्तम्भवदत्यन्तदृढौ। ततो रथारोहणादूर्ध्वमदितिमखण्डितां स्वसेनां दितिं खण्डितां परसेनां च चक्षाथां क्रमेणानुग्रहनिग्रहदृष्ट्या समीक्षेथाम् ॥

विधत्ते—

" हिरण्यवर्णावुषसां विरोक इति त्रिष्टुभा बाहू उद्गृह्णाति । इन्द्रियं वै वीर्यं त्रिष्टुक् । इन्द्रियमेव वीर्यमुपरिष्टादात्मन्धत्ते ( ८ )।" [ ब्रा० का० १ प्र० ७ अ० ६ ] इति।

उद्ग्रहणमुद्यतयोरभिमन्त्रणम्। बौधायनपक्षे तु यथाब्राह्मणं बाहूद्यमनार्थ एव मन्त्रः। इन्द्रियं वीर्यं हस्तपादादिगतसामर्थ्यं, तत्सामर्थ्यप्रदत्वात्त्रिष्टुप्छन्दसस्तद्रूपत्वम् ॥

अत्र विनियोगसंग्रहः—

" देवीति वैतसे पात्रे सर्वा अपि नयेदपः।
अनेति सादयेन्मध्ये होतुर्ब्रह्माख्यधिष्ण्ययोः ॥ १ ॥
अनिभृष्टेति तास्वन्तः शतस्वर्णं विनिक्षिपेत्।
स्वर्णेनोत्पवनं शुक्राः पात्रेषु व्यानयेत्सध ॥ २ ॥
क्षत्रेति धारयेत्स्वामी ताप्योष्णीषद्वयं क्रमात्।
स्वामिनं वाचयेदाविसप्तमन्त्रान्विनिर्गतौ ॥ ३ ॥
एष वः स्वामिनं दद्यात्सोमोऽस्मा ब्रह्मणो जपः।
इन्द्र दद्यात्स्वामिनोऽन्यो धनुः शत्रिति बाणकान् ॥ ४ ॥
पातेषून्मन्त्रयेत्स्वामी हिर बाहू तथोद्यतौ।
अनुवाके द्वादशेऽस्मिन्मन्त्रा विंशतिरीरिताः ॥ ५ ॥ " इति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डेऽष्टमप्रपाठके द्वादशोऽनुवाकः ॥ १२ ॥

---

( अथ प्रथमाष्टकेऽष्टमप्रपाठके त्रयोदशोऽनुवाकः । )

---

समिधमा तिष्ठ गायत्री त्वा छन्दसामवतु

---

१ ख. 'वित्सप्त'।

त्रिवृत्स्तोमो रथंतरꣳ सामाग्निर्देवता ब्रह्म द्रविणमुग्रामा तिष्ठ त्रिष्टुप्त्वा छन्दसामवतु पञ्चदशः स्तोमो बृहत्सामेन्द्रो देवता क्षत्रं द्रविणं विराजमा तिष्ठ जगती त्वा छन्दसामवतु सप्तदशः स्तोमो वैरूपꣳ साम मरुतो देवता विड्द्रविणमुदीचीमा तिष्ठानुष्टुप्त्वा ( १ ) छन्दसामवत्वेकविꣳशः स्तोमो वैराजꣳ साम मित्रावरुणौ देवता बलं द्रविणमूर्ध्वामा तिष्ठ पङ्क्तिस्त्वा छन्दसामवतु त्रिणवत्रयास्त्रिꣳशौ स्तोमौ शाक्वररैवते सामनी बृहस्पतिर्देवता वर्चो द्रविणमीदृङ्चान्यादृङ्चैतादृङ्च प्रतिदृङ्च मितश्च संमितश्च सभराः। शुक्रज्योतिश्च चित्रज्योतिश्च सत्यज्योतिश्च ज्योतिष्माꣳश्च सत्यश्चर्तपाश्च ( २ ) अत्यꣳहाः। अग्नये स्वाहा सोमाय स्वाहा सवित्रे स्वाहा सरस्वत्यै स्वाहा पूष्णे स्वाहा बृहस्पतये स्वाहेन्द्राय स्वाहा घोषाय स्वाहा श्लोकाय स्वाहाऽꣳशाय स्वाहा भगाय स्वाहा क्षेत्रस्य पतये स्वाहा पृथिव्यै स्वाहाऽन्तरिक्षाय स्वाहा दिवे स्वाहा सूर्याय स्वाहा चन्द्रमसे स्वाहा नक्ष-

त्रेभ्यः स्वाहाऽद्भ्यः स्वाहौषधीभ्यः स्वाहा वनस्पतिभ्यः स्वाहा चराचरेभ्यः स्वाहा परिप्लवेभ्यः स्वाहा सरीसृपेभ्यः स्वाहा ( ३ ) ॥

( अनुष्टुप्त्वर्तेपाश्चे सरीसृपेभ्यः स्वाहा । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टकेऽष्टमप्रपाठके त्रयोदशोऽनुवाकः ॥ १३ ॥

---

( अथ प्रथमाष्टकेऽष्टमप्रपाठके त्रयोदशोऽनुवाकः । )

---

समिधमिति सम्—इधम् । एति । तिष्ठ । गायत्री । त्वा । छन्दसाम् । अवतु । त्रिवृदिति त्रि—वृत् । स्तोमः । रथंतरमिति रथं—तरम् । साम । अग्निः । देवता । ब्रह्म । द्रविणम् । उग्राम् । एति । तिष्ठ । त्रिष्टुप् । त्वा । छन्दसाम् । अवतु । पञ्चदश इति पञ्च—दशः । स्तोमः । बृहत् । साम । इन्द्रः । देवता । क्षत्रम् । द्रविणम् । विराजमिति वि—राजम् । एति । तिष्ठ । जगती । त्वा । छन्दसाम् । अवतु । सप्तदश इति सप्त—दशः । स्तोमः । वैरूपम् । साम । मरुतः । देवता । विट् । द्रविणम् । उदीचीम् । एति । तिष्ठ । अनुष्टुबित्यनु—स्तुप् । त्वा ( १ ) । छन्दसाम् । अवतु । एकविंश इत्येक—विंशः । स्तोमः । वैराजम् । साम । मित्रा-

वरुणाविति मित्रा—वरुणौ । देवता । बलम् । द्रविणम् । ऊर्ध्वाम् । एति । तिष्ठ । पङ्क्तिः । त्वा । छन्दसाम् । अवतु । त्रिणवत्रयस्त्रिꣳशाविति त्रिणव—त्रयस्त्रिꣳशौ । स्तोमौ । शाक्वररैवते इति शाक्वर—रैवते । सामनी इति । बृहस्पतिः । देवता । वर्चः । द्रविणम् । ईदृङ् । च । अन्यादृङ् । च । एतादृङ् । च । प्रतिदृङ्ङिति प्रति—दृङ् । च । मितः । च । संमित इति सं—मितः । च । सभरा इति स—भराः । शुक्रज्योतिरिति शुक्र—ज्योतिः । च । चित्रज्योतिरिति चित्र—ज्योतिः । च । सत्यज्योतिरिति सत्य—ज्योतिः । च । ज्योतिष्मान् । च । सत्यः । च । ऋतपा इत्यृत—पाः । च (२)। अत्यꣳहा इत्यति—अꣳहाः । अग्नये । स्वाहा । सोमाय । स्वाहा । सवित्रे । स्वाहा । सरस्वत्यै । स्वाहा । पूष्णे । स्वाहा । बृहस्पतये । स्वाहा । इन्द्राय । स्वाहा । घोषाय । स्वाहा । श्लोकाय । स्वाहा । अꣳशाय । स्वाहा । भगाय । स्वाहा । क्षेत्रस्य । पतये । स्वाहा । पृथिव्यै । स्वाहा । अन्तरिक्षाय । स्वाहा । दिवे । स्वाहा । सूर्याय । स्वाहा । चन्द्रमसे । स्वाहा । नक्षत्रेभ्यः । स्वाहा । अद्भ्य इत्यत्—भ्यः । स्वाहा ।

ओषधीभ्य इत्योषधि—भ्यः । स्वाहा । वनस्पतिभ्य इति वनस्पति—भ्यः। स्वाहा । चराचरेभ्यः । स्वाहा । परिप्लवेभ्य इति परि—प्लवेभ्यः । स्वाहा । सरीसृपेभ्यः । स्वाहा ( ३ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टकेऽष्टमप्रपाठके त्रयोदशोऽनुवाकः ॥ १३ ॥

---

( अथ प्रथमकाण्डेऽष्टमप्रपाठके त्रयोदशोऽनुवाकः । )

---

द्वादशेऽभिषेकार्थजलसंस्कारादिमन्त्रा उक्ताः । त्रयोदशे दिग्व्यास्थापनमन्त्रा उच्यन्ते ।

कल्पः—" अथैनं पञ्चभिर्दिशो व्यास्थापयति समिधमा तिष्ठेति मनसा चानु प्रक्रामति " इति ।

व्यास्थापयति विविधदिगभिमुखत्वेन विजयाय प्रस्थापयतीत्यर्थः ।

तत्र प्रथममन्त्रपाठस्तु—

समिधमा तिष्ठ गायत्री त्वा छन्दसामवतु त्रिवृत्स्तोमो रथंतरꣳ सामाग्निर्देवता ब्रह्म द्रविणम्, इति ।

समिध्यतेऽस्यामादित्य इति समित्प्राची दिक्तां दिशमातिष्ठाऽऽक्रम्य तिष्ठ । तथा स्थितं त्वां छन्दसां मध्ये गायत्री रक्षतु । स्तोमानां मध्ये त्रिवृत्स्तोमो रक्षतु । साम्नां मध्ये रथंतरं साम रक्षतु । देवानां मध्येऽग्निर्देवो रक्षतु । ब्रह्म ब्राह्मणस्त्वदीयं द्रविणं धनं रक्षतु । त्रिवृत्स्तोमस्य स्वरूपं सामब्राह्मणे समाम्नातम्—" तिसृभ्यो हिं करोति स प्रथमया तिसृभ्यो हिं करोति स मध्यमया तिसृभ्यो हिं करोति स उत्तमयोद्यती त्रिवृतो विष्टुतिः " इति ।

अयमर्थः—उपास्मै गायतेत्यादीनि तृचात्मकानि त्रीणि सूक्तानि सन्ति । तेषु तिसृभ्य ऋग्भ्यो हिं करोति गायेत् । काभिस्तिसृभिः । प्रथमया त्रिष्वपि सूक्तेषु या प्रथमा तया स उद्गाता गायेत् । तथा सति तिसृभिर्गीतं भवति । सोऽयं प्रथमः पर्यायः । द्वितीये सूक्तत्रयगतया मध्यमया गायेत् । तृतीये

( राजसूयविषयदिग्व्यास्थापनमन्त्राणामभिधानम् )

पर्याये सूक्तत्रयगतयोत्तमया गायेत् । अनेन प्रकारेण त्रिवृत्स्तोमसंबन्धिनी विशिष्टा स्तुतिः संपद्यते। सेयं स्तुतिरुद्यतीनाम्नाऽभिधीयत इति। आभि त्वा शूर नोनुम इत्यस्यामृच्युत्पन्नं साम रथंतरम् ॥

द्वितीयमन्त्रपाठस्तु—

उग्रामा तिष्ठ त्रिष्टुप्त्वा छन्दसामवतु
पञ्चदशः स्तोमो बृहत्सामेन्द्रो
देवता क्षत्रं द्रविणम् , इति।

पूर्वन्यायेन योजनीयम् । पापिनां शिक्षकेण यमेनाधिष्ठितत्वाद्दक्षिणा दिगुग्रा।

पञ्चदशस्तोम एवमाम्नातः—"पञ्चभ्यो हिं करोति स तिसृभिः स एकया स एकया पञ्चभ्यो हिं करोति स एकया स तिसृभिः स एकया पञ्चभ्यो हिं करोति स एकया स एकया स तिसृभिः पञ्चपञ्चिनी पञ्चदशस्य विष्टुतिः" इति।

पूर्वोक्तत्रिवृत्स्तोम एक एव सूक्तत्रयनिष्पाद्यः। अन्ये तु स्तोमा एकैकेनैव तृचात्मकेन सूक्तेन निष्पाद्यन्ते। तत्रायं क्रमः । प्रथमपर्याय आवृत्तिः पञ्चभिर्ऋग्भिर्गायेत्। तद्यथा—प्रथमामृचं त्रिर्गायेत्। इतरे द्वे सकृत्सकृद्गायेत्। द्वितीयपर्याये मध्यमां त्रिर्गायेत्। तृतीयपर्याय उत्तमां त्रिर्गायेत् । सेयं पञ्चदशस्तोमस्य संबन्धिनी विष्टुतिरिति। तस्याः पञ्चपञ्चिनीति नाम । त्वामिद्धि हवामह इत्येतस्यामृच्युत्पन्नं साम बृहत् ॥

तृतीयमन्त्रपाठस्तु—

विराजमा तिष्ठ जगती त्वा छन्द-
सामवतु सप्तदशः स्तोमो वैरूपꣳ साम
मरुतो देवता विड्द्रविणम् , इति।

जलाधिपेन वरुणेन पालिता सती सम्यक्फलितैः सस्यैर्विशेषेण राजत इति विराट् प्रतीची दिक्। सप्तदशस्तोम एवमाम्नातः—"पञ्चभ्यो हिं करोति स तिसृभिः स एकया स एकया पञ्चभ्यो हिं करोति स एकया स तिसृभिः स एकया सप्तभ्यो हिं करोति स एकया स तिसृभिः स तिसृभिरि*ति दशसप्ता सप्तदशस्य विष्टुतिः" इति।

---

* सर्वपुस्तकेषु इतिशब्दो वर्तते। परंतु अनुपयुक्त इति ज्ञेयम्।

---

१ क. च. °सप्त स°।

प्रथमपर्याये प्रथमामृचं त्रिर्गायेत् । द्वितीयपर्याये मध्यमां त्रिर्गायेत् । तृतीयपर्याये मध्यमामुत्तमां च त्रिर्गायेत् । सेयं सप्तदशस्तोमसंबन्धिनी त्रिष्टुतिर्दशसप्तेत्यभिधीयते । यद्याव इन्द्रेत्यस्यामृच्युत्पन्नं साम वैरूपम् ॥

चतुर्थमन्त्रपाठस्तु—

उदीचीमा तिष्ठानुष्टुप्त्वा छन्दसाम-
वत्वेकविꣳशः स्तोमो वैराजꣳ साम
मित्रावरुणौ देवता बलं द्रविणम्, इति ।

एकविंशस्तोम एवमाम्नातः—" सप्तभ्यो हिं करोति स तिसृभिः स तिसृभिः स एकया सप्तभ्यो हिं करोति स एकया स तिसृभिः स तिसृभिः सप्तभ्यो हिं करोति स तिसृभिः स एकया स तिसृभिः सप्तसप्तिन्येकविंशस्य विष्टुतिः " इति ।

प्रथमपर्याय उत्तमां सकृद्गायेत् । द्वितीयपर्याये प्रथमां, तृतीयपर्याये मध्यमां सकृद्गायेत् । सेयमेकविंशस्तोमसंबन्धिनी विष्टुतिरिति सप्तसप्तिनीत्यभिधीयत इत्यर्थः । पिबा सोममिन्द्र मन्दतु त्वेत्यस्यामृच्युत्पन्नं साम वैराजम् ॥

पञ्चममन्त्रपाठस्तु—

ऊर्ध्वामा तिष्ठ पङ्क्तिस्त्वा छन्दसामवतु
त्रिणवत्रयस्त्रिꣳशौ स्तोमौ शाक्वररैवते
सामनी बृहस्पतिर्देवता वर्चो द्रविणम्, इति ।

त्रिणवस्तोम एवमाम्नातः—" नवभ्यो हिं करोति स तिसृभिः स पञ्चभिः स एकया नवभ्यो हिं करोति स एकया स तिसृभिः स पञ्चभिर्नवभ्यो हिं करोति स पञ्चभिः स एकया स तिसृभिर्वज्रो वै त्रिणवः " इति ।

प्रथमपर्याये प्रथमां त्रिर्गायेत् । मध्यमां पञ्चकृत्वो गायेत् । उत्तमां सकृद्गायेत् । द्वितीयपर्याये प्रथमां सकृद्गायेत् । मध्यमां त्रिर्गायेत् । उत्तमां पञ्चकृत्वो गायेत् । तृतीयपर्याये प्रथमां पञ्चकृत्वो गायेत् । मध्यमां सकृद्गायेत् । उत्तमां त्रिर्गायेत्। सोऽयं त्रिरावृत्तनवसंख्योपेतत्वात्त्रिणवनामको वज्रसमानः।

त्रयस्त्रिंशस्तोम एवमाम्नातः—" एकादशभ्यो हिं करोति स तिसृभिः स सप्तभिः स एकयैकादशभ्यो हिं करोति स एकया स तिसृभिः स सप्तभिरेकादशभ्यो हिं करोति स सप्तभिः स एकया स तिसृभिरन्तो वै त्रयस्त्रिंशः " इति ।

( राजसूयविषयदिग्व्यास्थापनमन्त्राणामभिधानम् )

प्रथमपर्याये प्रथमां त्रिर्गायेत्। मध्यमां सप्तकृत्वः। उत्तमां सकृत्। द्वितीयपर्याये प्रथमां सकृद्द्वितीयां त्रिस्तृतीयां सप्तकृत्वः। तृतीयपर्याये प्रथमां सप्तकृत्वो द्वितीयां सकृत्तृतीयां त्रिरिति। सोऽयं त्रयस्त्रिंशः स्तोमानामन्तः। यत्तु वाजपेय उज्जित्यनुवाके त्रयोदशस्तोमश्चतुर्दशस्तोम इत्यादिकमाम्नातं तत्सर्वमुन्नेयस्तोमाभिप्रायेणेति द्रष्टव्यम्। उन्नयनप्रकारस्तु सामसूत्रे द्रष्टव्यः। प्रो ष्वस्मै पुरोरथमित्यस्यामृच्युत्पन्नं साम शाकरम्। रेवतीर्नः सधमाद इत्यस्यामृच्युत्पन्नं साम रैवतम्। त्रिषु मन्त्रेषु ब्राह्मणक्षत्रियवैश्या द्रव्यरक्षका उक्ताः। चतुर्थे शारीरबलस्य तद्रक्षकत्वम्। पञ्चमे वर्चसः प्रख्यातशूरनामकृतस्य तेजसो धनरक्षकत्वम्॥

विधत्ते—

“दिशो व्यास्थापयति। दिशामभिजित्यै।” [ब्रा० का० १ प्र० ७ अ० ७] इति॥

यजमानं दिक्षु प्रस्थापितवतोऽध्वर्योर्मानसमनुक्रमणं विधातुं प्रस्तौति—

“यदनु प्रक्रामेत्। अभि दिशो जयेत्। उत्तु माद्येत्।” [ब्रा० का० १ प्र० ७ अ० ७] इति।

यद्यध्वर्युर्यजमानमनु पादेन प्रक्रामेद्दिशामभिजयो भवेत्किं तून्माद्येद्बुद्धिभ्रमं प्राप्नुयात्॥

विधत्ते—

“मनसाऽनु प्रक्रामति। अभि दिशो जयति। नोन्माद्यति।” [ब्रा० का० १ प्र० ७ अ० ७] इति।

प्रक्रमणस्य कृतत्वाद्दिग्विजयः। पादेन तदकरणादुन्मादाभावः॥

समिदादीनि दिशां नामानि प्रशंसति—

“समिधमा तिष्ठेत्याह। तेज एवावरुन्धे (१)। उग्रामा तिष्ठेत्याह। इन्द्रियमेवावरुन्धे। विराजमा तिष्ठेत्याह। अन्नाद्यमेवावरुन्धे। उदीचीमा तिष्ठेत्याह। पशूनेवावरुन्धे। ऊर्ध्वामा तिष्ठेत्याह। सुवर्गमेव लोकमभिजयति।” [ब्रा० का० १ प्र० ७ अ० ७] इति।

समिच्छब्दस्य दीप्तिप्रतिपादकतया तेजःप्राप्तिः। उग्रशब्द इन्द्रियबलोपेतत्वमाचष्ट इतीन्द्रियप्राप्तिः। अन्नं वै विराडितिश्रुत्यनुसारेणान्नप्राप्तिः। “यर्हि पशुमाप्रीतमुदञ्चं नयन्ति” इति पशोरुत्तरदिक्संबन्धश्रवणात्पशुप्राप्तिः। स्वर्गलोकस्योर्ध्वभावित्वादभिजयः॥

विहितं मानसमनुक्रमणं प्रशंसति—

“ अनूज्जिहीते । सुवर्गस्य लोकस्य समष्ट्यै ( २ ) । ” [ ब्रा० का० १ प्र० ७ अ० ७ ] इति ॥

कल्पः—“ मारुतमेकविꣳशतिकपालं निर्वपति वैश्वदेवीमामिक्षां तस्यारण्येऽनुवाक्यतृतीयैर्गणैः कपालान्युपदधाति–ईदृङ्चान्यादृङ्चेत्येताभ्यां मध्येऽरण्येऽनुवाक्येन ” इति ।

पाठस्तु—

ईदृङ्चान्यादृङ्चैतादृङ्च प्रतिदृङ्च मितश्च संमितश्च सभराः । शुक्रज्योतिश्च चित्रज्योतिश्च सत्यज्योतिश्च ज्योतिष्माꣳश्च सत्यश्चर्तपाश्चात्यꣳहाः । , इति ।

ईदृङ्ङित्यादीनि मरुद्विशेषाणां नामधेयानि । तद्रूपेण भावितत्वात्कपालानामपि तन्नाम । हे प्रथमकपाल त्वमीदृङ्चासि एतन्नामकमेवासि । एवमन्यत्रापि योज्यम् ॥

विधत्ते—

“ मारुत एष भवति । अन्नं वै मरुतः । अन्नमेवावरुन्धे । ” [ ब्रा० का० १ प्र० ७ अ० ७ ] इति ।

एष पुरोडाश इत्यर्थः ॥

तस्मिन्गुणं विधत्ते—

“ एकविꣳशतिकपालो भवति प्रतिष्ठित्यै । ” [ ब्रा० का० १ प्र० ७ अ० ७ ] इति ।

एकविंशः स्तोमानां प्रतिष्ठेत्युक्तत्वात्प्रतिष्ठाहेतुत्वम् ॥

कपालोपधानमन्त्राणां शेषं पूरयितुं विधत्ते—

“ योऽरण्येऽनुवाक्यो गणः । तं मध्यत उपदधाति । ग्राम्यैरेव पशुभिरारण्यान्पशून्परिगृह्णाति । तस्माद्ग्राम्यैः पशुभिरारण्याः पशवः परिगृहीताः । ” [ ब्रा० का० १ प्र० ७ अ० ७ ] इति ।

अत्राऽऽम्नात ईदृङ्चेत्यादिः सप्तसंख्यायुक्त एको गणः । शुक्रज्योतिश्चेत्यादिः सप्तसंख्यायुक्तोऽपरो गणः । तयोर्गणयोर्मध्ये गणान्तरं प्रक्षेपणीयम् । अरण्ये गत्वाऽध्येतव्यो योऽनुवाकस्तस्मिन्ननुवाके स गण आम्नातः । तथा हि—“धुनिश्च ध्वान्तश्च ध्वनश्च ध्वनयꣳश्च । निलिम्पश्च विलिम्पश्च विक्षिपः”

( राजसूयविषयदिग्व्यास्थापनमन्त्राणामभिधानम् )

इति । एतस्य गणस्य मध्यत उपधाने सत्युभयतोऽवस्थितैर्ग्राम्यैः पशुभिः परितोऽवबध्याऽऽरण्यान्पशून्गृह्णाति । यस्मादत्रारण्यगणो मध्ये प्रक्षिप्तस्तस्माल्लोकेऽप्यरण्यवासिनो हरिणादय आनीयमानाः पलायनं वारयितुं ग्रामे परिचयवद्भिर्हरिणादिभिरुभयत एकपाशेन बद्ध्वा परिगृहीता भवन्ति ॥

कल्पः—“ अग्नये स्वाहेति षट्पार्थानि पुरस्तादभिषेकस्य जुहोति ” इति । “ इन्द्राय स्वाहेति षट्पार्थान्युपरिष्टादभिषेकस्य जुहोति ” इति च । “ पृथिव्यै स्वाहेति षड्भूतानामवेष्टीः ” इति च । “ अद्भ्यः स्वाहेति षड्भूतानामवेष्टीः ” इति च ।

एतस्मिन्नवेष्टिविनियोगेऽप्यभिषेकात्पूर्वं षट्कमेकं तत ऊर्ध्वमपरं षट्कमिति द्रष्टव्यम् ॥

पाठस्तु—

अग्नये स्वाहा सोमाय स्वाहा सवित्रे स्वाहा
सरस्वत्यै स्वाहा पूष्णे स्वाहा बृहस्पतये
स्वाहेन्द्राय स्वाहा घोषाय स्वाहा श्लोकाय
स्वाहाऽंशाय स्वाहा भगाय स्वाहा क्षेत्रस्य
पतये स्वाहा पृथिव्यै स्वाहाऽन्तरिक्षाय
स्वाहा दिवे स्वाहा सूर्याय स्वाहा चन्द्रमसे
स्वाहा नक्षत्रेभ्यः स्वाहाऽद्भ्यः स्वाहौषधीभ्यः
स्वाहा वनस्पतिभ्यः स्वाहा चराचरेभ्यः स्वाहा
परिप्लवेभ्यः स्वाहा सरीसृपेभ्यः स्वाहा॥, इति ॥

अत्र चतुर्थ्यन्तैरुक्ताः सर्वे देवताविशेषा द्रष्टव्याः ॥

तत्र पार्थानि विधातुं प्रस्तौति—

“पृथिर्वैन्यः । अभ्यषिच्यत ( ३ ) । स राष्ट्रं नाभवत् । स एतानि पार्थान्यपश्यत् । तान्यजुहोत् । तैर्वै स राष्ट्रमभवत् । ” [ ब्रा० का० १ प्र० ७ अ० ७ ] इति ।

वेनस्य पुत्रः पृथिनामा कश्चिद्राजा राजसूये पार्थहोमं विनैवाभ्यषिच्यत । ततः स राष्ट्रं न प्राप्नोत् । अतो राष्ट्रप्राप्तये पार्थसंज्ञकान्यग्नये स्वाहेत्यादीनि मन्त्रवाक्यान्य (ण्य) पश्यत् । तैर्हुत्वा राष्ट्रं प्राप्नोत् ॥

विधत्ते—

"यत्पार्थानि जुहोति । राष्ट्रमेव भवति ।" [ ब्रा० का० १ प्र० ७ अ० ७ ] इति ।

भवत्येव प्राप्नोत्येव ॥

षष्ठसप्तममन्त्रौ प्रशंसति—

"बार्हस्पत्यं पूर्वेषामुत्तमं भवति । ऐन्द्रमुत्तरेषां प्रथमम् । ब्रह्म चैवास्मै क्षत्रं च समीची दधाति । अथो ब्रह्मन्नेव क्षत्रं प्रतिष्ठापयति ( ४ )।" [ब्रा० का० १ प्र० ७ अ० ७ ] इति ।

बृहस्पतये स्वाहेत्येतन्मन्त्रवाक्यं पूर्वेषां षण्णां मन्त्राणां चरमम् । इन्द्राय स्वाहेत्येतद्वाक्यमुत्तरेषां षण्णां प्रथमम् । तथा सति बृहस्पतेरिन्द्रस्य च ब्राह्मणक्षत्रियाभिमानिदेवत्वादस्मै यजमानाय तज्जातिद्वयं समीची दधाति परस्परस्नेहयुक्तं करोतीत्यर्थः । किं च तयोर्मन्त्रयोः पूर्वोत्तरभावेन ब्राह्मणे क्षत्रियं प्रतिष्ठापयति ब्राह्मणानुकूलं करोतीत्यर्थः ॥

विधत्ते—

"षट्पुरस्तादभिषेकस्य जुहोति । षडुपरिष्टात् । द्वादश संपद्यन्ते । द्वादश मासाः संवत्सरः । संवत्सरः खलु वै देवानां पूः । देवानामेव पुरं मध्यतो व्यवसर्पति । तस्य न कुतश्चनोपाव्याधो भवति ।" [ ब्रा० का० १ प्र० ७ अ० ७ ] इति ।

वसन्ते वसन्ते देवैः[1] सोमस्य पीयमानत्वाद्भोगस्थानत्वेन संवत्सरो देवानां पुरमिव भवति । यथा पुरे पण्यवीथी व्यवस्थिताभ्यामुभयतो वाटिकाभ्यां युक्ता भवति तस्यां गच्छन्पुरुषश्चोरैरविद्धो भवति तद्वत्पार्थयोः षट्कयोर्मध्येऽभिषेकाय यजमानो देवपुरमध्ये प्रविशति तस्य कुतोऽप्यन्यस्माद्बाधो न भवति ॥

विधत्ते—

"भूतानामवेष्टीर्जुहोति । अत्रात्र वै मृत्युर्जायते । यत्र यत्रैव मृत्युर्जायते । तत एवैनमवयजते । तस्माद्राजसूयेनेजानः सर्वमायुरेति । सर्वे ह्यस्य मृत्यवोऽवेष्टाः । तस्माद्राजसूयेनेजानो नाभिचरितवै। प्रत्यगेनमभिचारः स्तृणुते (५)।" [ ब्रा० का० १ प्र० ७ अ० ७ ] इति ।

भूतानां यक्षराक्षसपिशाचादीनां मृत्युहेतूनामवयजनस्य विनाशस्य हेतव

---

१ ख. 'न्ते दे' ।

( राजसूयविषयाभिषेकाभिधानम् )

आहुतयः, पृथिव्यै स्वाहेत्यादिद्वादशमन्त्रसाध्या आहुतयो भूतानामवेष्टयस्ता जुहुयात्। अत्रात्र संध्याकाले मध्यरात्रे निर्जनदेश उच्छिष्टदेशे बाल्याद्यवस्थायां च भूतोपद्रवरूपो मृत्युरुत्पद्यते। अनेन तु होमेन तत एव देशात्कालादवस्थाविशेषाच्चैनं मृत्युमवयजते नाशयति। यस्मान्मृत्युर्नाशितस्तस्माद्राजसूयेनेष्टवतो यजमानस्यापमृत्युपरिहारेण कृत्स्नायुःप्राप्तिर्भवति। यस्माद्वैरिभिरापादितो भूताद्युपद्रवो राजसूययाजिनं न प्राप्नोति तस्मादयं नाभिचरितवै नाभिचरणीयः। स च परैः कृतोऽभिचारः प्रत्यक्कर्तुरेवाभिमुखो भूत्वा तमेनमभिचारकर्तारं स्तृणुते हिनस्ति॥

अत्र विनियोगसंग्रहः—

"दिशो व्यास्थापयेद्रूपमध्वर्युः समिपञ्चभिः।
मारुतस्य कपालानि दध्यादीह्रक्चतुर्दश॥ १॥
अग्नाभिषेकतः पूर्वं षट्पार्थान्युत्तराणि षट्।
पृथिषद्भ्द्वयं तद्वत्स्युर्भूतानामवेष्टयः॥
त्रयोदशेऽनुवाकेऽस्मिंपास्त्रित्चत्वारिंशदीरिताः॥ २॥" इति॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डेऽष्टमप्रपाठके त्रयोदशोऽनुवाकः॥ १३॥

---

( अथ प्रथमाष्टकेऽष्टमप्रपाठके चतुर्दशोऽनुवाकः। )

---

सोम॑स्य॒ त्विषि॑रसि॒ तवे॑व मे॒ त्विषि॑र्भूया॒दमृत॑मसि मृ॒त्योर्मा॑ पाहि दि॒द्योन्मा॑ पा॒ह्यवे॑ष्टा दन्दशू॒का निर॑स्तं॒ नमु॑चेः॒ शिरः॑। सोमो॒ राजा॒ वरु॑णो दे॒वा ध॑र्म॒सुव॑श्च॒ ये। ते ते॒ वाच॑ꣳ सुवन्ता॒ ते ते॒ प्रा॒णꣳ सु॑वन्ता॒ ते ते॒ चक्षुः॑ सुवन्ता॒ ते ते॒ श्रोत्र॑ꣳ सुवन्ताꣳ॒ सोम॑स्य त्वा द्यु॒म्नेना॒भि षि॑ञ्चाम्य॒ग्नेः (१) तेज॑सा॒ सूर्य॑स्य॒

वर्चसेन्द्रस्येन्द्रियेण मित्रावरुणयोर्वीर्येण मरुतामोजसा क्षत्राणां क्षत्रपतिरस्यति दिवस्पाहि समावंवृत्रन्नधरागुदीचीरहिं बुध्नियमनु संचरन्तीस्ताः पर्वतस्य वृषभस्य पृष्ठे नावश्चरन्ति स्वसिचं इयानाः । रुद्र यत्ते क्रयी परं नाम तस्मै हुतमसि यमेष्टमसि । प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव । यत्कामास्ते जुहुमस्तन्नो अस्तु वयꣳ स्याम पतयो रयीणाम् ( २ ) ॥

( अन्नस्तैकादश च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टकेऽष्टमप्रपाठके चतुर्दशोऽनुवाकः ॥ १४ ॥

---

( अथ प्रथमाष्टकेऽष्टमप्रपाठके चतुर्दशोऽनुवाकः । )

---

सोमस्य । त्विषिः । असि । तव । इव । मे । त्विषिः । भूयात् । अमृतम् । असि । मृत्योः । मा । पाहि । दिद्योत् । मा । पाहि । अवेष्टा इत्यव— इष्टाः । दन्दशूकाः । निरस्तमिति निः— अस्तम् । नमुचेः । शिरः । सोमः । राजा । वरुणः । देवाः । धर्मसुव इति धर्म—सुवः । च । ये । ते । ते ।

( राजसूयविषयाभिषेकाभिधानम् )

वाचम् । सुवन्ताम् । ते । ते । प्राणमिति प्र—अ-
नम् । सुवन्ताम् । ते । ते । चक्षुः । सुवन्ताम् । ते ।
ते । श्रोत्रम् । सुवन्ताम् । सोमस्य । त्वा । द्युम्नेन ।
अभीति । सिञ्चामि । अग्नेः ( १ ) । तेजसा । सू-
र्यस्य । वर्चसा । इन्द्रस्य । इन्द्रियेण । मित्रावरुण-
योरिति मित्रा—वरुणयोः । वीर्येण । मरुताम् ।
ओजसा । क्षत्राणाम् । क्षत्रपतिरिति क्षत्र—पतिः ।
असि । अतीति । दिवः । पाहि । समावव्रत्रन्निति
सम्—आवव्रत्रन् । अधराक् । उदीचीः । अहिम् ।
बुध्नियम् । अन्विति । संचरन्तीरिति सं—च-
रन्तीः । ताः । पर्वतस्य । वृषभस्य । पृष्ठे । नावः ।
चरन्ति । स्वसिच इति स्व—सिचः । इयानाः ।
रुद्र । यत् । ते । क्रयि । परम् । नाम । तस्मै ।
हुतम् । असि । यमेष्टमिति यम— इष्टम् । असि ।
प्रजापत इति प्रजा—पते । न । त्वत् । एतानि ।
अन्यः । विश्वा । जातानि । परीति । ता । बभूव ।
यत्कामा इति यत्—कामाः । ते । जुहुमः । तत् ।
नः । अस्तु । वयम् । स्याम । पतयः । रयी-
णाम् ( २ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टकेऽ-
ष्टमप्रपाठके चतुर्दशोऽनुवाकः ॥ १४ ॥

( अथ प्रथमकाण्डेऽष्टमप्रपाठके चतुर्दशोऽनुवाकः । )

---

त्रयोदशेऽनुवाके दिग्व्यास्थापनमुक्तम् । चतुर्दशेऽभिषेक उच्यते ।

कल्पः—" अग्रेण प्रशास्तुर्धिष्णियं खादिरीमौदुम्बरीं वाऽऽसन्दीं प्रतिष्ठाप्य सोमस्य त्विषिरसीति तस्यां शार्दूलचर्म प्राचीनग्रीवमुत्तरलोमाऽऽस्तीर्य " इति ।

पाठस्तु—

**सोमस्य त्विषिरसि तवेव मे त्विषिर्भूयात्,** इति ।

हे शार्दूलचर्म त्वं सोमस्य दीप्तिरस्यतस्तवेव मे दीप्तिर्भूयात् ॥

विधत्ते—

" सोमस्य त्विषिरसि तवेव मे त्विषिर्भूयादिति शार्दूलचर्मोपस्तृणाति । यैव सोमे त्विषिः । या शार्दूले । तामेवावरुन्धे । " [ ब्रा० का० १ प्र० ७ अ० ८ ] इति ।

शार्दूलचर्मगतां दीप्तिं दृष्ट्वा सोमदीप्तित्वेन भावनादुभयावरोधः ॥

कल्पः—" अमृतमसीति तस्मिञ्शतमानं हिरण्यं निधाय " इति ।

तस्मिञ्शार्दूलचर्मणि ॥

पाठस्तु—

**अमृतमसि मृत्योर्मा पाहि,** इति ।

हिरण्यस्यामृतत्वमसकृत्पूर्वमुक्तम् ॥

हिरण्यस्य स्थापनं तत्प्रमाणं च क्रमेण विधत्ते—

" मृत्योर्वा एष वर्णः । यच्छार्दूलः । अमृत९ हिरण्यम् । अमृतमसि मृत्योर्मा पाहीति हिरण्यमुपास्यति । अमृतमेव मृत्योरन्तर्धत्ते । शतमानं भवति ( १ ) । शतायुः पुरुषः शतेन्द्रियः । आयुष्येवेन्द्रिये प्रतितिष्ठति । " [ ब्रा० का० १ प्र० ७ अ० ८ ] इति ।

वर्णो देहः ॥

**दिद्योन्मा पाहि—**

कल्पः—" दिद्योन्मा पाहीति सौवर्णेन शतमानेन शतक्षरेण शतकृष्णलेन यजमानस्य शीर्षन्नधि निधत्ते " इति ।

हे दिद्योद्द्योतनात्मक शिरस्यभिषेकजलसेचनार्थं स्थापित शतच्छिद्रयुक्त सुवर्णपात्र त्वं मां रक्ष ॥

( राजसूयविषयाभिषेकाभिधानम् )

विधत्ते—

" दिद्योन्मा पाहीत्युपरिष्टादधिनिदधाति। उभयत एवास्मै शर्म दधाति।" [ ब्रा० का० १ प्र० ७ अ० ८ ] इति।

उभयतोऽधस्तादुपरिष्टाच्चामृतरूपस्य सुवर्णस्य स्थितत्वात्सुखं भवति ॥

## अवेष्टा दन्दशूकाः—

कल्पः—" अवेष्टा दन्दशूका इति दक्षिणत आसीनं क्लीबं सीसेन विध्यति " इति।

दन्दशूकाः सर्पा अवेष्टा विनाशिताः ॥

विधत्ते—

" अवेष्टा दंदशूका इति क्लीब॰ सीसेन विध्यति । दन्दशूकानेवावयजते। तस्मात्क्लीबं दन्दशूका दश्शुकाः। " [ ब्रा० का० १ प्र० ७ अ० ८ ] इति।

यस्मात्सर्पत्वेन भावितं सीसं क्लीबे पातितं तस्माल्लोकेऽपि क्लीबं पुंस्त्वरहितं पलायनाद्यक्षमं बहुवल्मीकोपेतेऽरण्ये गच्छन्तं सर्पा दन्दशूका दंशुका भवन्ति दंशशीला इत्यर्थः ॥

## निरस्तं नमुचेः शिरः।

कल्पः—" सव्येन पदा लोहितायसं निरस्यति निरस्तं नमुचेः शिर इति " इति।

लोहितायसं ताम्रं पूर्वं फेनेन पातितं यन्नमुचेः शिरस्तदिदं ताम्ररूपं संनिरस्तं परित्यक्तम्। एतच्च ताम्रं नापितस्योपरि प्रक्षेप्तव्यम्। अत एवाऽऽपस्तम्ब आह—" तामारोहन्यजमानोऽवेष्टा दन्दशूका इति दक्षिणेन पदा सीसं पण्डकाय प्रत्यस्यति, निरस्तं नमुचेः शिर इति सव्येन लोहितायसं केशवापाय, तौ बहिर्वेदि निरस्यतः " इति ॥

विधत्ते—

" निरस्तं नमुचेः शिर इति लोहितायसं निरस्यति। पाप्मानमेव नमुचिं निरवदयते। " [ ब्रा० का० १ प्र० ७ अ० ८ इति ॥

कल्पः—" ऊर्ध्वबाहुं तिष्ठन्तं माहेन्द्रस्य स्तोत्रं प्रत्यभिषिञ्चति सोमो राजेत्यभिमन्त्र्य सोमस्य त्वा द्युम्नेनाभिषिञ्चामीति पालाशेन पुरस्तादध्वर्युरेवमितरत्रौदुम्बरेण दक्षिणतो ब्रह्मा राजन्यो वाऽऽश्वत्थेन पश्चाद्वैश्यो नैयग्रोधेनोत्तरतो जन्यः " इति।

जन्यः सखा।

अभिमन्त्रणमन्त्रपाठस्तु—

सोमो राजा वरुणो देवा धर्मसुवश्च ये । ते ते
वाचꣳ सुवन्तां ते ते प्राणꣳ सुवन्तां ते ते चक्षुः
सुवन्तां ते ते श्रोत्रꣳ सुवन्ताम् , इति ।

यः सोमो राजा वरुणो यो राजा ये चान्ये देवा गृहपत्यग्न्यादयो धर्मसुवो धर्ममनुजानन्तः सन्ति ते सर्वे तव वाचमनुजानन्तु । एवं प्राणादिषु योज्यम् ॥

अभिषेकमन्त्रपाठस्तु—

सोमस्य त्वा द्युम्नेनाभि षिञ्चाम्यग्ने-
स्तेजसा सूर्यस्य वर्चसेन्द्रस्येन्द्रियेण
मित्रावरुणयोर्वीर्येण मरुतामोजसा, इति ।

हे यजमान त्वां सोमस्य द्युम्नेन दीप्त्याऽभिषिञ्चामि । एवमग्नेस्तेजसे-त्यादौ योज्यम् ॥

अभिमन्त्रणमन्त्रस्य प्रयोजनं दर्शयति—

"प्राणा आत्मनः पूर्वेऽभिषिच्या इत्याहुः ( २ ) । सोमो राजा वरुणः । देवा धर्मसुवश्च ये । ते ते वाचꣳ सुवन्तां ते ते प्राणꣳ सुवन्तामित्याह । प्राणा-नेवाऽऽत्मनः पूर्वानभिषिञ्चति ।" [ ब्रा० का १ प्र० ७ अ० ८ ] इति ।

आत्मनो यजमानस्य प्राणा वागादयो ये सन्ति ते यजमानाभिषेका-त्पूर्वमभिषिच्या इत्याहुरभिज्ञाः । युक्तो हि तेषाममूर्तानां मन्त्रपाठमात्रेणा-भिषेकः । मन्त्रे हि सोमादयो देवा वागादीनभिषिक्ताननुजानन्त्वित्येवाव-बुध्यते । तस्मात्तत्पाठ एवाभिषेकः । स च पाठः प्रथमतः कृत इत्यसौ पूर्वाभिषेकः ॥

अभिषेकमन्त्रे प्रथमभागस्य शाखान्तरपाठं निराकृत्यात्रत्यं पाठं विधत्ते—

" यद्ब्रूयात् । अग्नेस्त्वा तेजसाऽभिषिञ्चामीति । तेजस्व्येव स्यात् । दुश्चर्मा तु भवेत् । सोमस्य त्वा द्युम्नेनाभिषिञ्चामीत्याह । सौम्यो वै देवतया पुरुषः ( ३ ) । स्वयैवैनं देवतयाऽभिषिञ्चति ।" [ ब्रा० का० १ प्र० ७ अ० ८ ] इति ।

सोमो वै रेतोधा इत्यादौ रेतोधारिणः पुरुषस्य सोमत्वनिरूपणात्पुरुषः सोमदेवत्यः । सोमदेवतयाऽभिषेके सति लावण्यलाभाद्दुश्चर्मत्वं न भवेत् ॥

उक्तभागानां पाठं तत्तत्प्राप्त्या प्रशंसति—

" अग्नेस्तेजसेत्याह। तेज एवास्मिन्दधाति। सूर्यस्य वर्चसेत्याह। वर्च एवास्मिन्दधाति। इन्द्रस्येन्द्रियेणेत्याह। इन्द्रियमेवास्मिन्दधाति। मित्रावरुणयोर्वीर्येणेत्याह। वीर्यमेवास्मिन्दधाति। मरुतामोजसेत्याह (४)। ओज एवास्मिन्दधाति।" [ब्रा० का० १ प्र० ७ अ० ८] इति॥

## क्षत्राणां क्षत्रपतिरसि—

कल्पः—" क्षत्राणां क्षत्रपतिरसीत्यभिषिच्यमानमभिमन्त्रयते " इति।

हे यजमान त्वं क्षत्रियाणां पतिरसि। नात्र केषांचित्पतिः किं तु सर्वेषां क्षत्रियाणाम्। अनेनैवाभिप्रायेण क्षत्रशब्दस्य द्विरुक्तिः॥

मन्त्रसामर्थ्यादशेषक्षत्रियपतित्वसिद्धिं दर्शयति—

" क्षत्राणां क्षत्रपतिरसीत्याह। क्षत्राणामेवैनं क्षत्रपतिं करोति।" [ब्रा० का० १ प्र० ७ अ० ८] इति॥

## अति दिवस्पाहि—

कल्पः—" कृष्णविषाणया वासांसि विचृत[1] (त्य), एकं द्वे सर्वाणि वा, एतान्युत्कर उदस्यत्यति दिवस्पाहीति " इति।

यान्यभिषेककाले लेपलिप्तानि वस्त्राणि तेषामेव त्यागः। हे यजमान दिवो द्योतमानानन्यान्पार्थिवानातिक्रम्य त्वमेव सर्वां भूमिं पाहि॥

द्युशब्दस्येतरपुरुषपरत्वं दर्शयति—

" अति दिवस्पाहीत्याह। अत्यन्यान्पाहीति वावैतदाह। " [ब्रा० का० १ प्र० ७ अ० ८] इति॥

कल्पः—" समावववृत्रन्निति येऽभिषिच्यमानस्य लेपा व्यवस्रवन्ति तान्पात्रैरुन्मार्ष्टि " इति।

पाठस्तु—

समाववृत्रन्नधरागुदीचीरहिं बुध्नियमनु
संचरन्तीस्ताः पर्वतस्य वृषभस्य पृष्ठे
नावश्चरन्ति स्वसिच इयानाः।, इति।

या आपो लेपरूपेण स्रवन्ति अधरागधोगताः, उदीचीरूर्ध्वं गताः, समाववृत्रन्सम्यगावृत्य स्थिताः, न हीयत इत्यहिरुत्तमाङ्गं, बुध्नस्य पादस्याग्रभागो बुध्नियः, शिरःप्रभृति पादाग्रपर्यन्तमनुक्रमेण संचरन्त्यस्ता आपः पर्वतस्य

१ ख. ङ. च. विवृत।

वृषभस्य पृष्ठे पर्वतसदृशस्य वर्षणक्षमस्य मेघस्योपरि नद्यां नाव इव चरन्ति। यद्वा नावो नौयोग्या बहुलाश्चरन्ति। कीदृश्यः। स्वसिचः स्वमात्मीयं यजमानक्षेत्रं सिञ्चन्तीति स्वसिचः। इयाना आगच्छन्त्यः, बाहुल्येन सर्वत्र प्रभवन्त्य इत्यर्थः। वल्मनिरसनमन्त्रः पूर्वमाम्नातोऽपि सामर्थ्यात्पश्चात्प्रयोक्तव्यः॥

लेपोदकानामूर्ध्वाधोभागयोः सम्यगावृत्य स्थित्या राष्ट्रध्रौव्यसंपत्तिं दर्शयति—

"समावववृत्रन्नधरागुदीचीरित्याह। राष्ट्रमेवास्मिन्ध्रुवमकः।" [ब्रा०का० १ प्र० ७ अ० ८] इति॥

रुद्र यत्ते क्रयी परं नाम
तस्मै हुतमसि यमेष्टमसि—

कल्पः—"आग्नीध्रे प्रत्येकं जुहोति रुद्र यत्ते क्रयी परं नाम तस्मै हुतमसि यमेष्टमसि स्वाहेति" इति।

अत्र स्वाहाकारोऽध्याहृतः। हे रुद्र यत्तव परमुत्कृष्टं नाम शर्वादिकं नमः शिवाय पशुपतय इत्यादिश्रुतिप्रसिद्धं क्रयि जपपरान्पुरुषान्फलप्रदानेन क्रीणाति वशी करोतीति क्रयि तस्मै नाम्ने हुतमसि अभिषेकशेषभूतं पात्रस्थं जलं हुतमस्तु। तच्च यमस्येष्टमस्तु॥

विधत्ते—

"उच्छेषणेन जुहोति। उच्छेषणभागो वै रुद्रः। भागधेयेनैव रुद्रं निरवदयते (५)।" [ब्रा० का० १ प्र० ७ अ० ८] इति।

यदग्नये स्विष्टकृतेऽवद्यति भागधेयेनैव तद्रुद्रꣳ समर्धयतीति श्रुतत्वाद्रुद्रस्योच्छेषणभागत्वम्॥

तत्रैव कंचिद्विशेषं विधत्ते—

"उदङ्परेत्याऽऽग्नीध्रे जुहोति। एषा वै रुद्रस्य दिक्। स्वायामेव दिशि रुद्रं निरवदयते।" [ब्रा० का० १ प्र० ७ अ० ८] इति॥

नाम्न आहुतिप्रदानेन प्रयोजनं दर्शयति—

"रुद्र यत्ते क्रयी परं नामेत्याह। यद्वा अस्य क्रयी परं नाम। तेन वा एष हिनस्ति। यꣳ हिनस्ति। तेनैवैनꣳ सह शमयति।" [ब्रा० का० १ प्र० ७ अ० ८] इति।

एष रुद्रस्तेनैव शर्वादिनाम्ना स्वक्रोधविषयं पुरुषं हिनस्ति। तथा सति यो वध्योऽस्ति तमेनं पुरुषं तेनैव घातकेन नाम्ना सह शमयति। आहुतिदा-

( राजसूयविषयाभिषेकाभिधानम् )

नेन घातकं नाम शाम्यति, तदानीमेव वध्योऽपि शाम्यति, वध्यत्वं निवर्तेत इत्यर्थः ॥

यमेष्टमित्यस्य पदस्य तात्पर्यं दर्शयति—

"तस्मै हुतमसि यमेष्टमसीत्याह। यमादेवास्य मृत्युमवयजते (६)।" [ ब्रा० का० १ प्र० ७ अ० ८ ] इति।

यमस्येष्टसिद्धौ तदनुग्रहादेव यजमानस्यापमृत्युं विनाशयति ॥

कल्पः—"अत्रैतेषामभिषेकाणां मुख्यपात्रे संस्रावान्समवनीय प्रतिहितस्य गृहानेत्यान्वारब्धयोः प्रतिहिते च महिष्यां च जुहोति प्रजापते न त्वदेतान्यन्य इति" इति।

प्रतिहितोऽत्यन्तप्रियपुत्रस्तं च महिषीं च स्पर्शयित्वा जुहुयात्।

पाठस्तु—

प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव। यत्कामास्ते जुहुमस्तन्नो अस्तु वयꣳ स्याम पतयो रयीणाम्॥, इति ॥

हे प्रजापते त्वदन्यः कोऽपि पुरुष उत्पन्नानि तान्येतानि विश्वानि न परिबभूव परिभवितुं समर्थो नाभूत्। परिभवः सृष्टेरप्युपलक्षणम्। सृष्टिसंहारयोरशक्त इत्यर्थः। अतस्ते तव वयं यत्कामा जुहुमस्तत्फलमस्माकमस्तु। वयं धनानां पतयः स्याम ॥

विधत्ते—

"प्रजापते न त्वदेतान्यन्य इति तस्यै गृहे जुहुयात्। यां कामयेत राष्ट्रमस्यै प्रजा स्यादिति। राष्ट्रमेवास्यै प्रजा भवति।" [ ब्रा० का० १ प्र० ७ अ० ८ ] इति।

अस्यै प्रजा राष्ट्रं स्यात्। प्रियाया भार्यायाः पुत्रो राष्ट्रं पालयितुं समर्थो भूयादित्यर्थः ॥

विधत्ते—

"पर्णमयेनाध्वर्युरभिषिञ्चति। ब्रह्मवर्चसमेवास्मिन्त्विषिं दधाति। औदुम्बरेण राजन्यः। ऊर्जमेवास्मिन्नन्नाद्यं दधाति। आश्वत्थेन वैश्यः। विशमेवास्मिन्पुष्टिं दधाति। नैयग्रोधेन जन्यः। मित्राण्येवास्मै कल्पयति। अथो प्रतिष्ठित्यै (७)। [ ब्रा० का० १ प्र० ७ अ० ८ ] इति।

१ क. घ. संस्रवा°।

ब्रह्मवर्चसमेव त्विषिमध्ययनादिकृतमुत्कर्षम् । ऊर्जमेवाऽऽद्यं बलप्रदमन्नं प्रियं चान्नम् । विश्वमेव पुष्टिं करप्रदातृप्रजासंपत्तिम् ॥

अत्र विनियोगसंग्रहः—

“ सोमाऽऽसन्द्यां व्याघ्रचर्माऽऽस्तीर्यामृ स्वर्णकं क्षिपेत् ।
दिग्योद्राजा स्वर्णपात्रं दध्यान्मूर्ध्नि शतक्षरम् ॥ १ ॥
अवे रोहन्निहाऽऽसन्दीं क्लीबं सीसेन विध्यति ।
निरस्तं केशवापाय निरस्येल्लोहितायसम् ॥ २ ॥
सोमोऽध्वर्युर्मन्त्रयेत सोमस्येत्यभिषिञ्चति ।
क्षत्राभिषिक्तं संमन्त्र्य त्यजेद्दृत्रमतीत्यतः ॥ ३ ॥
समालेपान्मार्जनं स्याद्रुद्रशेषं जुहोति हि ।
प्रजापते काम्यहोमो मन्त्रा द्वादश वर्णिताः ॥ ४ ॥ ” इति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये प्रथमकाण्डेऽष्टमप्रपाठके
चतुर्दशोऽनुवाकः ॥ १४ ॥

---

( अथ प्रथमाष्टकेऽष्टमप्रपाठके पञ्चदशोऽनुवाकः । )

---

इन्द्रस्य वज्रोऽसि वार्त्रघ्नस्त्वयाऽयं वृत्रं वध्यान्मित्रावरुणयोस्त्वा प्रशास्त्रोः प्रशिषा युनज्मि यज्ञस्य योगेन विष्णोः क्रमोऽसि विष्णोः क्रान्तमसि विष्णोर्विक्रान्तमसि मरुतां प्रसवे जेषमाप्तं मनः समहमिन्द्रियेण वीर्येण पशूनां मन्युरसि तवेव मे मन्युर्भूयान्नमो मात्रे पृथिव्यै माऽहं मातरं पृथिवीꣳ हिꣳसिषं मा ( १ ) मां माता पृथिवी हिꣳसीदियदस्यायु-रस्यायुर्मे धेह्यूर्गस्यूर्जं मे धेहि युङ्ङसि

( राजसूयविषयस्य रथेन विजयस्याभिधानम् )

वर्चोऽसि वर्चो मयि धेह्यग्नये गृहपतये स्वाहा सोमाय वनस्पतये स्वाहेन्द्रस्य बलाय स्वाहा मरुतामोजसे स्वाहा हꣳसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् । नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत् ( २ ) ॥

( हिꣳसिषं मतंजास्त्रीणि च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टकेऽष्टमप्रपाठके पञ्चदशोऽनुवाकः ॥ १५ ॥

---

( अथ प्रथमाष्टकेऽष्टमप्रपाठके पञ्चदशोऽनुवाकः । )

---

इन्द्रस्य । वज्रः । असि । वार्त्रघ्न इति वार्त्र—घ्नः । त्वया । अयम् । वृत्रम् । वध्यात् । मित्रावरुणयोरिति मित्रा—वरुणयोः । त्वा । प्रशास्त्रोरिति प्र—शास्त्रोः । प्रशिषेति प्र—शिषा । युनज्मि । यज्ञस्य । योगेन । विष्णोः । क्रमः । असि । विष्णोः । क्रान्तम् । असि । विष्णोः । विक्रान्तमिति वि—क्रान्तम् । असि । मरुताम् । प्रसव इति प्र—सवे । जेषम् । आप्तम् । मनः । समिति । अहम् । इन्द्रियेण । वीर्येण । पशूनाम् । मन्युः । असि । तव । इव । मे । मन्युः । भूयात् । नमः । मात्रे । पृथिव्यै ।

मा । अहम् । मातरम् । पृथिवीम् । हिꣳसिषम् । मा ( १ ) माम् । माता । पृथिवी । हिꣳसीत् । इयत् । असि । आयुः । असि । आयुः । मे । धेहि । ऊर्क् । असि । ऊर्जम् । मे । धेहि । युङ् । असि । वर्चः । असि । वर्चः । मयि । धेहि । अग्नये । गृहपतय इति गृह—पतये । स्वाहा । सोमाय । वनस्पतये । स्वाहा । इन्द्रस्य । बलाय । स्वाहा । मरुताम् । ओजसे । स्वाहा । हꣳसः । शुचिषदिति शुचि—सत् । वसुः । अन्तरिक्षसदित्यन्तरिक्ष—सत् । होता । वेदिषदिति वेदि—सत् । अतिथिः । दुरोणसदिति दुरोण—सत् । नृषदिति नृ—सत् । वरसदिति वर—सत् । ऋतसदित्यृत—सत् । व्योमसदिति व्योम—सत् । अब्जा इत्यप्—जाः । गोजा इति गो—जाः । ऋतजा इत्यृत—जाः । अद्रिजा इत्यद्रि—जाः । ऋतम् । बृहत् ( २ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टकेऽष्टमप्रपाठके पञ्चदशोऽनुवाकः ॥ १५ ॥

---

( अथ प्रथमकाण्डेऽष्टमप्रपाठके पञ्चदशोऽनुवाकः । )

---

चतुर्दशेऽभिषेक उक्तः । पञ्चदशे रथेन विजयोऽभिधीयते ।

( राजसूयविषयस्य रथेन विजयस्याभिधानम् )

कल्पः—" इन्द्रस्य वज्रोऽसि वार्त्रघ्न इति रथमुपावहृत्य " इति।

पाठस्तु—

इन्द्रस्य वज्रोऽसि वार्त्रघ्नस्त्वयाऽयं वृत्रं वध्यात्, इति।

व्याख्यातो वाजपेये ॥

विधत्ते—

" इन्द्रस्य वज्रोऽसि वार्त्रघ्न इति रथमुपावहरति विजित्यै। " ब्रा० का० १ प्र० ७ अ० ९ ] इति।

मित्रावरुणयोस्त्वा प्रशास्त्रोः प्रशिषा युनज्मि यज्ञस्य योगेन—

कल्पः—" अथ दक्षिणं योग्यं युनक्ति मित्रावरुणयोस्त्वा प्रशास्त्रोः प्रशिषा युनज्मि यज्ञस्य योगेनेति " इति।

हे दक्षिणाश्व त्वां प्रशास्त्रोराज्ञापयित्रोर्मित्रावरुणयोः प्रशिषा प्रशासनेन यज्ञसंबन्धि(न्ध) निमित्तं रथे युनज्मि ॥

मित्रावरुणपदाभिप्रायं दर्शयति—

" मित्रावरुणयोस्त्वा प्रशास्त्रोः प्रशिषा युनज्मीत्याह। ब्रह्मणैवैनं देवताभ्यां युनक्ति। " [ ब्रा० का० १ प्र० ७ अ० ९ ] इति।

ब्रह्मणा मन्त्रेण प्रतिपादिताभ्यां मित्रावरुणदेवताभ्यां प्रशासितो युनक्ति ॥

रथस्याश्वत्रयोपेतत्वं विधत्ते—

" प्रष्टिवाहिनं युनक्ति। प्रष्टिवाही वै देवरथः। देवरथमेवास्मै युनक्ति। " [ ब्रा० का० १ प्र० ७ अ० ९ ] इति ॥

तादृशं रथं प्रकारान्तरेण प्रशंसति—

" त्रयोऽश्वा भवन्ति। रथश्चतुर्थः। द्वौ सव्येष्ठसारथी। षट्संपद्यन्ते (१)। षड्वा ऋतवः। ऋतुभिरेवैनं युनक्ति। " [ब्रा० का० १ प्र० ७ अ०९ ] इति।

सव्येष्ठेत्यत्र दक्षिणस्थेत्यध्याहार्यम्। ततः पार्श्वद्वयवर्तिनौ द्वौ सारथी संपद्येते ॥

कल्पः—" विष्णोः क्रमोऽसीति रथं यजमानोऽत्येति " इति।

पाठस्तु—

विष्णोः क्रमोऽसि विष्णोः क्रान्तमसि विष्णोर्विक्रान्तमसि, इति।

एते त्रयो मन्त्रा वाजपेये व्याख्याताः ॥

विधत्ते—

“विष्णुक्रमान्क्रमते । विष्णुरेव भूत्वेमाल्लोँकानभिजयति ।” [ब्रा०का० १ प्र० ७ अ० ९ ] इति ॥

प्रियपुत्रस्यान्वारम्भणं विधत्ते—

“ यः क्षत्रियः प्रतिहितः । सोऽन्वारभते । राष्ट्रमेव भवति । ” [ ब्रा० का० १ प्र० ७ अ० ९ ] इति ।

प्राप्नोतीत्यर्थः ॥

प्र ससाहिष इत्येतामृचं विधत्ते—

“ त्रिष्टुभाऽन्वारभते । इन्द्रियं वै त्रिष्टुक् । इन्द्रियमेव यजमाने दधाति (२)। ” [ ब्रा० का० १ प्र० ७ अ० ९ ] इति ।

सेयमृगुपानुवाक्यकाण्डे चतुर्थप्रपाठकान्ते त्वमग्ने बृहद्वय इत्यस्मिन्ननुवाके समाम्नातेति तत्रैव व्याख्यास्यते ॥

## मरुतां प्रसवे जेषम्—

कल्पः—“ मरुतां प्रसवे जेषमिति प्रयाति ” इति ।

मरुत्संज्ञकानां देवानामनुज्ञायां सत्यामहं जेष्यामि ॥

तदनुज्ञायां जयहेतुतां दर्शयति—

“ मरुतां प्रसवे जेषमित्याह । मरुद्भिरेव प्रसूत उज्जयति । ” [ ब्रा० का० १ प्र० ७ अ० ९ ] इति ॥

## आप्तं मनः—

कल्पः—“ सधनू राजन्यः पुरस्तादुत्तरतो वाऽवस्थितो भवति तस्मा एतानिषूनस्यत्याप्तं मन इति ” इति ।

मनोऽभिमतमाप्तं प्राप्तम् ॥

अमुमेवार्थं दर्शयति—

“ आप्तं मन इत्याह । यदेव मनसैप्सीत् । तदापत् । ” [ ब्रा० का० १ प्र० ७ अ० ९ ] इति ।

ऐप्सीदाप्तुमिष्टवान् । आपत्प्राप्नोति ॥

विधत्ते—

“ राजन्यं जिनाति । अनाक्रान्त एवाऽऽक्रमते । ” [ब्रा० का० १ प्र० ७ अ० ९ ] इति ।

बाणविमोकेन राजन्ये जिते सति स्वयं शत्रुणाऽनपक्रान्त एव सञ्शत्रुमाक्रान्तवान्भवति ॥

समहमिन्द्रियेण वीर्येण—

कल्पः—" तं जित्वा समहमिन्द्रियेण वीर्येणेति प्रदक्षिणमावर्तते " इति।

हस्तादीन्द्रियगतेन सामर्थ्येनाहं संगतोऽभूवम् ॥

मन्त्रपाठेन वीर्यसंगतिं दर्शयति—

" वि वा एष इन्द्रियेण वीर्येणर्ध्यते। यो राजन्यं जिनाति। समहमिन्द्रियेण वीर्येणेत्याह ( ३ )। इन्द्रियमेव वीर्यमात्मन्धत्ते। " [ ब्रा० का० १ प्र० ७ अ० ९ ] इति ॥

कल्पः—" पशूनां मन्युरसीति वाराही उपानहावुपमुच्य " इति।

पाठस्तु—

पशूनां मन्युरसि तवेव मे मन्युर्भूयात्, इति।

हे वराहचर्मनिर्मित उपानत्त्वं पशूनां मन्युरूपाऽसि। अतो यथा तव मन्युरूपत्वं तद्वन्ममापि वैरिषु मन्युर्भूयात् ॥

विधत्ते—

" पशूनां मन्युरसि तवेव मे मन्युर्भूयादिति वाराही उपानहावुपमुञ्चते। पशूनां वा एष मन्युः। यद्वराहः। तेनैव पशूनां मन्युमात्मन्धत्ते। " [ ब्रा० का० १ प्र० ७ अ० ९ ] इति।

वराहस्याभिनिवेशाधिक्यं मन्युरूपत्वम् ॥

वाराहत्वं प्रशस्योपानह उपमोकं प्रशंसति—

" अभि वा इयꣳ सुषुवाणं कामयते। तस्येश्वरेन्द्रियं वीर्यमादातोः। वाराही उपानहावुपमुञ्चते। अस्या एवान्तर्धत्ते। इन्द्रियस्य वीर्यस्यानात्यै ( ४ )। " [ ब्रा० का० १ प्र० ७ अ० ९ ] इति।

इयं भूमिः सुषुवाणमभिषिक्तमभिलक्ष्य तदीयमिन्द्रियं वीर्यमादातुं कामयते। कामयित्वा च तस्येन्द्रियं वीर्यमादातुमीश्वरा शक्ता भवति। उपानदुपमोकेन भूम्याः सकाशादन्तर्धानं कृतवान्भवति। तस्यान्तर्धानमनात्यै भूम्या वीर्यस्यास्वीकाराय भवति ॥

कल्पः—" नमो मात्र इत्यवरोक्ष्यन्पृथिवीमभिमन्त्र्य " इति।

पाठस्तु—

नमो मात्रे पृथिव्यै माऽहं मातरं

पृथिवीꣳ हिꣳसिषं मा मां
माता पृथिवी हिꣳसीत्, इति।

अन्योन्यहिंसाभावप्रार्थनं विस्पष्टम् ॥

एतदेव दर्शयति—

"नमो मात्रे पृथिव्या इत्याहाहिꣳसायै।" [ब्रा०का०१प्र०७अ०९] इति॥

कल्पः—" अवरुह्य मणीन्प्रतिमुञ्चत इयदसीति राजतमूर्गसीत्यौदुम्बरं युङ्ङसीति सौवर्णम् " इति।

औदुम्बरं ताम्रमयम्।

पाठस्तु—

इयदस्यायुरस्यायुर्मे धेह्यूर्गस्यूर्जं मे धेहि
युङ्ङसि वर्चोऽसि वर्चो मयि धेहि, इति।

हे राजतमणे त्वमियदस्येतावत्परिमाणोऽसि । अत्र तत्परिमाणं हस्तेनाभिनीयते। परिमितत्वादेवाऽऽयुःस्वरूपोऽसि तस्मादायुर्मे प्रयच्छ। हे ताम्रमण ऊर्गसि बलरूपोऽस्यतो बलं मे प्रयच्छ । हे सौवर्णमणे युङ्ङसि धारयितुं योग्योऽसि । धारिते सति च वर्चोऽसि तेजस्वी भवस्यतो मे कान्तिं प्रयच्छ ॥

मन्त्राणां पाठादेव तदुक्तफलसिद्धिं दर्शयति—

" इयदस्यायुरस्यायुर्मे धेहीत्याह । आयुरेवाऽऽत्मन्धत्ते । ऊर्गस्यूर्जं मे धेहीत्याह। ऊर्जमेवाऽऽत्मन्धत्ते। युङ्ङसि वर्चोऽसि वर्चो मयि धेहीत्याह। वर्च एवाऽऽत्मन्धत्ते।" [ ब्रा० का० १ प्र० ७ अ० ९ ] इति ॥

विधत्ते—

" एकधा ब्रह्मण उपहरति। एकधैव यजमान आयुरूर्जं वर्चो दधाति।" [ ब्रा० का० १ प्र० ७ अ० ९ ] इति।

तदिदं सूत्रकारेण स्पष्टीकृतम्—" उपहूतायामिडायामुन्मुच्य मणीन्ब्रह्मणे ददाति " इति ॥

कल्पः—" अग्नये गृहपतये स्वाहेति रथविमोचनीयान्होमान्हुत्वा " इति।

पाठस्तु—

अग्नये गृहपतये स्वाहा सोमाय

( राजसूयविषयस्य रथेन विजयस्याभिधानम् )

वनस्पतये स्वाहेन्द्रस्य बलाय
स्वाहा मरुतामोजसे स्वाहा, इति।

स्पष्टोऽर्थः ॥

विधत्ते—

"रथविमोचनीया जुहोति प्रतिष्ठित्यै (५)।" [ब्रा० का० १ प्र० ७ अ० ९] इति ॥

पाठप्राप्तामाहुतिसंख्यां प्रशंसति—

"त्रयोऽश्वा भवन्ति। रथश्चतुर्थः। तस्माच्चतुर्जुहोति।" [ब्रा० का० १ प्र० ७ अ० ९] इति ॥

कल्पः—"हꣳसः शुचिषदिति सह संग्रहीत्रा रथवाहने रथमत्यादधाति" इति।

अश्वस्य प्रग्रहं सम्यग्गृह्णातीति संग्रहीता।

पाठस्तु—

हꣳसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत्। नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत्॥, इति॥

हन्ति पृथिवीमिति हंसो रथः। शुचौ देवयजने रथवाहने च सीदतीति शुचिषत्। स्वस्योपरि यजमानं वासयतीति वसुः। तरुगुल्माद्यनवरुद्धेऽन्तरिक्षे सीदतीत्यन्तरिक्षसत्। होता होतृसमानः। तदेव कथमित्युच्यते—वेद्यां सीदतीति वेदिषत्। अतिथिसदृशश्च। तदपि कथमित्युच्यते—दुरोणेषु गृहेषु सीदतीति दुरोणसत्। यो यस्तमारोढुं नयति तस्य तस्य गृहे सीदति। नृषु मनुष्येपूपकारं कर्तुं सीदतीति नृषत्। वरे श्रेष्ठे राजादिगृहे सीदतीति वरसत्। ऋते यज्ञे वाजपेयादौ सीदतीत्यृतसत्। सूर्यं वोढुं व्योमन्याकाशे सीदतीति व्योमसत्। अप्सुयोनिर्वा अश्व इति श्रुतेरब्धो जातैरश्वैरुपेतत्वादब्जाः। गोशब्दवाच्याद्गवाज्जायत इति गोजाः। एतच्च स्पष्टस्तृतीयꣳ रथस्तृतीयमित्याम्नातम्। ऋतजाः प्रतिवाहिन ऋतार्थं यज्ञार्थं जातत्वात्। अद्रिभ्यः पाषाणसदृशेभ्यो दृढेभ्यः काष्ठेभ्यो जातत्वादद्रिजाः। ईदृशो रथो बृहत्प्रौढं राजसूयाख्यमृतं यज्ञं संपादयत्विति शेषः ॥

विधत्ते—

" यदुभौ सहावतिष्ठेताम् । समानं लोकमियाताम् । सह संग्रहीत्रा रथवाहने रथमादधाति । सुवर्गादेवैनं लोकादन्तर्दधाति । " [ ब्रा० का० १ प्र० ७ अ० ९ ] इति ।

अश्वप्रग्रहधारी यः संग्रहीता यश्च रथादवरूढो यजमानस्तावुभौ सह स्वर्गरूपायां वेद्यां यद्यवतिष्ठेतां तदानीं यज्वा चेतरश्च सदृशं लोकं प्राप्नुयातां तच्चायुक्तं, तस्माद्रथ एवावस्थितेन संग्रहीत्रा सह तं रथं रथवाहने काष्ठे स्थापयेत् । तथा सति संग्रहीता वेदिरूपात्स्वर्गादन्तर्हितो भवति ॥

मन्त्रं विनियुङ्क्ते—

" हꣳसः शुचिषदित्यादधाति । ब्रह्मणैवैनमुपावहरति । ब्रह्मणा दधाति ।" [ ब्रा० का० १ प्र० ७ अ० ९ ] इति ।

पूर्वमिन्द्रस्य वज्रोऽसीति मन्त्रेणैवैनं रथमुपावहृतवान् , तस्मादिदानीमपि हंस इति मन्त्रेण रथमाधातुं युक्तम् ॥

मन्त्रगतच्छन्दोविशेषं प्रशंसति—

" अतिच्छन्दसा दधाति । अतिच्छन्दा वै सर्वाणि छन्दाꣳसि । सर्वेभिरेवैनं छन्दोभिरादधाति । वर्ष्म वा एषा छन्दसाम् । यदतिच्छन्दाः । यदतिच्छन्दसा दधाति । वर्ष्मैवैनꣳ समानानां करोति ( ६ ) । " [ ब्रा० का० १ प्र० ७ अ० ९ ) इति ।

हंसमन्त्रस्य च्छन्दोऽतिजगती । सा च गायत्र्यादीन्यल्पच्छन्दांस्यतिक्रम्य वर्तत इति तस्या अतिच्छन्दस्त्वम् । अत एव च्छन्दसां तत्रान्तर्भावात्सर्वच्छन्दोरूपत्वम् । तथा सत्यनया रथ आहिते सति सर्वैश्छन्दोभिराहितो भवति । किं च । एषाऽतिजगती सर्वेषां छन्दसां शरीरम् , अत्रत्यैरक्षरैः कैश्चित्कचित्कस्यचिच्छन्दसः संपादयितुं शक्यत्वात् । तथा सत्यनया रथाधाने यजमानः सर्वेषां समानानां शरीरस्थानीयो भवति ॥

अत्र विनियोगसंग्रहः—

" इन्द्रेति रथमाहृत्य मित्रेत्येतं युनक्ति हि ।
विष्णोस्त्रिभी रथं गत्वा मर्वारुह्य प्रयाति सः ॥ १ ॥
आमं क्षत्र इषुं मुक्त्वा संप्रदक्षिणमाव्रजेत् ।
पश्चित्युपानहौ धृत्वा नमो भूम्यभिमन्त्रणम् ॥ २ ॥
इयन्मणिं राजतं चोर्ध्वधनात्यौदुम्बरं मणिम् ।

( राजसूयविषयस्य विजयादूर्ध्वमासनोपविष्टस्य सर्वैः सेव्यत्वस्य वर्णनम् )

युङ्सौवर्णं चाग्नं हुत्वा चतस्रो रथमोचनीः ॥ ३ ॥
हंसो रथं स्थापयीत मन्त्रा अष्टादशेरिताः ॥ ४ ॥" इति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये प्रथमकाण्डेऽष्टमप्रपाठके
पञ्चदशोऽनुवाकः ॥ १५ ॥

---

( अथ प्रथमाष्टकेऽष्टमप्रपाठके षोडशोऽनुवाकः । )

---

मित्रोऽसि वरुणोऽसि समहं विश्वैर्देवैः क्षत्रस्य नाभिरसि क्षत्रस्य योनिरसि स्योनामा सीद सुषदामा सीद मा त्वा हिꣳसीन्मा मा हिꣳसीन्नि षसाद धृतव्रतो वरुणः पस्त्यास्वा साम्राज्याय सुक्रतुर्ब्रह्मा३न्त्वꣳ राजन्ब्रह्माऽसि सविताऽसि सत्यसवो ब्रह्मा३न्त्वꣳ राजन्ब्रह्माऽसीन्द्रोऽसि सत्यौजाः ( १ ) ब्रह्मा३न्त्वꣳ राजन्ब्रह्माऽसि मित्रोऽसि सुशेवो ब्रह्मा३न्त्वꣳ राजन्ब्रह्माऽसि वरुणोऽसि सत्यधर्मेन्द्रस्य वज्रोऽसि वार्त्रघ्नस्तेन मे रध्य दिशोऽभ्ययꣳ राजाऽभूत्सुश्लोकाँ३ सुमङ्गलाँ३ सत्यराजा३न् । अपां नप्त्रे स्वाहोर्जो नप्त्रे स्वाहाऽग्नये गृहपतये स्वाहा ( २ ) ॥

( सत्यौजाश्चत्वारिꣳशच्च ) ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टकेऽष्टमप्रपाठके षोडशोऽनुवाकः ॥ १६ ॥

( राजसूयविषयस्य विजयादूर्ध्वमासनोपविष्टस्य सर्वैः सेव्यत्वस्य वर्णनम् )
( अथ प्रथमाष्टकेऽष्टमप्रपाठके षोडशोऽनुवाकः । )

---

मित्रः । असि । वरुणः । असि । समिति । अहम् । विश्वैः । देवैः । क्षत्रस्य । नाभिः । असि । क्षत्रस्य । योनिः । असि । स्योनाम् । एति । सीद । सुषदामिति सु—सदाम् । एति । सीद । मा । त्वा । हिꣳसीत् । मा । मा । हिꣳसीत् । नीति । ससाद । धृतव्रत इति धृत—व्रतः । वरुणः । पस्त्यासु । एति । साम्राज्यायेति साम्—राज्याय । सुक्रतुरिति सु—क्रतुः । ब्रह्मा३न् । त्वम् । राजन् । ब्रह्मा । असि । सविता । असि । सत्यसव इति सत्य—सवः । ब्रह्मा३न् । त्वम् । राजन् । ब्रह्मा । असि । इन्द्रः । असि । सत्यौजा इति सत्य—ओजाः ( १ )। ब्रह्मा३न् । त्वम् । राजन् । ब्रह्मा । असि । मित्रः । असि । सुशेव इति सु—शेवः । ब्रह्मा३न् । त्वम् । राजन् । ब्रह्मा । असि । वरुणः । असि । सत्यधर्मेति सत्य—धर्मा । इन्द्रस्य । वज्रः । असि । वार्त्रघ्न इति वार्त्र—घ्नः । तेन । मे । रध्य । दिशः । अभीति । अयम् । राजा । अभूत् । सुश्लोका३ँ इति सु—श्लोका३ँ । सुमङ्गला३ँ इति सु—मङ्गला३ँ । सत्यराजा३निति

(राजसूयविषयस्य विजयादूर्ध्वमासनोपविष्टस्य सर्वैः सेव्यत्वस्य वर्णनम्)

सत्य—राजा३न्। अपाम्। नप्त्रे। स्वाहा। ऊर्जः। नप्त्रे। स्वाहा। अग्नये। गृहपतय इति गृह—पतये। स्वाहा॥ २॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टकेऽष्टमप्रपाठके षोडशोऽनुवाकः॥ १६॥

---

(अथ प्रथमकाण्डेऽष्टमप्रपाठके षोडशोऽनुवाकः।)

---

पञ्चदशे दिग्विजयोऽभिहितः। षोडशे विजयादूर्ध्वमासन उपविश्य सर्वैः सेव्यत्वं वर्ण्यते।

मित्रोऽसि वरुणोऽसि—

कल्पः—"मित्रोऽसीति दक्षिणं बाहुं यजमान उपावहरते वरुणोऽसीति सव्यम्" इति।

पूर्वं हिरण्यवर्णावुपसामिति मन्त्रेण यजमानस्य बाहू उद्गृहीतौ तयोरिदानीमधस्तादुपावहरणमुच्यते। हे दक्षिणबाहो त्वं मित्रोऽसि मित्रवद्भोजनादाविष्टार्थप्रापकत्वात्। हे वामबाहो त्वं वरुणोऽसि शौचादावनिष्टनिवारकत्वात्॥

समहं विश्वैर्देवैः—

कल्पः—"समहं विश्वैर्देवैरिति वैश्वदेव्या[मा]मिक्षायां हस्तावुपावहरते" इति।

अहं सर्वैर्देवैः संगच्छेयम् (य)॥

मित्रशब्दस्य सूर्यवाचित्वात्तन्नाम्ना व्यवहृतस्य दक्षिणबाहोरहोरूपत्वं वरुणशब्दस्यान्धकारवदावरकवाचित्वात्तन्नाम्ना व्यवहृतस्य रात्रिरूपत्वमिति व्याचष्टे—

"मित्रोऽसि वरुणोऽसीत्याह। मैत्रं वा अहः। वारुणी रात्रिः। अहोरात्राभ्यामेवैनमुपावहरति।" [ब्रा० का० १ प्र० ७ अ० १०] इति॥

मित्रावरुणयोरनेकदेवरूपत्वात्सर्वदेवसंबन्धिन्यामामिक्षायां मित्रावरुणात्मकत्वेन निरूपितयोर्हस्तयोरुपावहरणं युक्तमित्येतद्दर्शयति—

" मित्रोऽसि वरुणोऽसीत्याह । मैत्रो वै दक्षिणः । वारुणः सव्यः । वैश्वदेव्यामिक्षा । स्वमेवैनौ भागधेयमुपावहरति।"[ब्रा०का०१प्र०७अ०१०]इति ॥

विश्वैर्देवैरितिपदोच्चारणेन तत्संबन्धिनीनां प्रजानां यजमानभोग्यत्वं संपद्यत इत्यभिप्रेत्य व्याचष्टे—

" समहं विश्वैर्देवैरित्याह ( १ ) । वैश्वदेव्यो वै प्रजाः । ता एवाऽऽद्याः कुरुते । " [ ब्रा० का० १ प्र० ७ अ० १० ] इति ॥

कल्पः—" खादिरीमासन्दीं प्रतिष्ठाप्य क्षत्रस्य नाभिरसीति तस्यां कृत्यधीवासमास्तीर्य " इति ।

कृत्यधीवासं चर्मपटः ।

पाठस्तु—

क्षत्रस्य नाभिरसि क्षत्रस्य योनिरसि, इति ।

हे कृत्यधीवास क्षत्रस्योपवेशनाय त्वं नाभिवन्मध्यस्थानमसि । मातृवद्धारकत्वेन क्षत्रस्य योनिः कारणमसि ॥

विधत्ते—

"क्षत्रस्य नाभिरसि क्षत्रस्य योनिरसीत्यधीवासमास्तृणाति सयोनित्वाय।" [ ब्रा० का० १ प्र० ७ अ० १० ] इति ।

योनिरसीति चर्मपटस्य कारणत्वेन भावनया सकारणत्वं क्षत्रस्य संपद्यते ॥

स्योनामा सीद सुषदामा सीद मा
त्वा हिꣳसीन्मा मा हिꣳसीत्—

कल्पः—" स्योनामा सीद सुषदामा सीदेति तामासाद्य यजमानो मा त्वा हिꣳसीन्मा मा हिꣳसीदित्युपविशति " इति ।

हे मदीयशरीर स्योनां सुखकरीमेनामासन्दीं प्रत्यासीद समीपस्थं भव । सुषदां सुखेनोपवेष्टुं योग्यामासीद । इयमासन्दी त्वां शरीरं मा हिंसीत् । मामपि शरीरस्वामिनं मा हिंसीत् ॥

मन्त्रद्वयार्थस्य विस्पष्टतां दर्शयति—

" स्योनामा सीद सुषदामा सीदेत्याह । यथायजुरेवैतत् । मा त्वा हिꣳसीन्मा मा हिꣳसीदित्याहाहिꣳसायै । " [ब्रा० का० १प्र०७अ० १०] इति॥

कल्पः—" निषसाद धृतव्रत इत्यासीनमनुमन्त्रयते " इति ।

पाठस्तु—

( राजसूयविषयस्य विजयादूर्ध्वमासनोपविष्टस्य सर्वैः सेव्यत्वस्य वर्णनम् )

नि षसाद धृतव्रतो वरुणः पस्त्या-
स्वा साम्राज्याय सुक्रतुः, इति।

अयं यजमानो धृतव्रतः स्वीकृतयज्ञो वरुणोऽनिष्टनिवारको भूत्वा निषसादास्यामासन्द्यामुपविवेश। पस्त्यासु बहुषु वैरिगृहेष्वागत्य साम्राज्यं कर्तुं सुक्रतुः शोभनसंकल्पो भवतु॥

साम्राज्यमुद्दिश्य सम्यक्संकल्पसिद्धिमेव दर्शयति—

"निषसाद धृतव्रतो वरुणः पस्त्यास्वा साम्राज्याय सुक्रतुरित्याह। साम्राज्यमेवैनꣳ सुक्रतुं करोति।" [ ब्रा० का० १ प्र० ७ अ० १० ] इति॥

कल्पः—"तमृत्विजो रत्निनश्च सर्वतः पर्युपविशन्ति पुरस्तादध्वर्युर्दक्षिणतो ब्रह्मा पश्चाद्धोतोत्तरत उद्गाता, उपविष्टेषु ब्रह्मा३न् ओमित्यध्वर्युं राजा मन्त्रयते त्वꣳ राजन्ब्रह्माऽसीतीतरः प्रत्याहैवं ब्रह्माणं होतारमुद्गातारं चोत्तरोत्तरेणेतरे प्रत्याहुः" इति।

एतेषामष्टानां मन्त्राणां पाठस्तु—

ब्रह्मा३न्त्वꣳ राजन्ब्रह्माऽसि सविताऽसि सत्य-
सवो ब्रह्मा३न्त्वꣳ राजन्ब्रह्माऽसीन्द्रोऽसि
सत्यौजा ब्रह्मा३न्त्वꣳ राजन्ब्रह्माऽसि मि-
त्रोऽसि सुशेवो ब्रह्मा३न्त्वꣳ राजन्ब्र-
ह्माऽसि वरुणोऽसि सत्यधर्मा, इति।

दूरादाह्वातुं प्लुतिः। हे राजंस्त्वमेव ब्रह्माऽसि ब्राह्मणोऽसि न त्वहम्। कुतः। यतस्त्वमेव सविताऽसि ब्राह्मणधर्मान्पालयन्नस्माकमनुष्ठानायानुज्ञाताऽसि। सत्यसवस्त्वममोघानुज्ञः। अतो ब्राह्मणवर्णाश्रमधर्माणां त्वदधीनत्वात्त्वमेव ब्रह्मा। तथेन्द्रोऽसि परमैश्वर्यवानसि। सत्यौजा अमोघवीर्योऽसि। तथा मित्रोऽसि शिष्टपरिपालनाय देव( मित्र )नामाऽसि। सुशेवः सुष्ठु सेवितुं योग्योऽसि। तथा वरुणोऽस्यनिष्टनिवारकोऽसि। सत्यधर्मा शास्त्रीयधर्मयुक्तोऽसि। यथा लोके परराष्ट्रं जित्वा समागत्य सिंहासने समासीनं राजानमथ उपविष्टाः पुरोहितादयो बहुभिराशीर्भिः स्तुतिभिश्च स्तुवन्ति तद्वदत्रापि सेवोपचारः क्रियते। एतयाऽऽशीर्वादरूपया सेवया ब्राह्मणेषु यत्सामर्थ्यं शापानुग्रहरूपं तद्राजनि प्रतिष्ठापितं भवति। तदेतदभिप्रेत्य वाजसनेयिनो

१ क. °ह्वानं प्लु°।

बृहदारण्यके क्षत्रियसृष्टिप्रस्तावे समामनन्ति—"क्षत्रात्परं नास्ति तस्माद्ब्राह्मणः क्षत्रियमधस्तादुपास्ते राजसूये क्षत्र एव तद्यशो दधाति" इति ॥

यथोक्तार्थपरत्वेन मन्त्रान्व्याचष्टे—

"ब्रह्मा३न्त्वꣳ राजन्ब्रह्माऽसि सविताऽसि सत्यसव इत्याह । सवितारमेवैनꣳ सत्यसवं करोति (२) । ब्रह्मा३न्त्वꣳ राजन्ब्रह्माऽसीन्द्रोऽसि सत्यौजा इत्याह । इन्द्रमेवैनꣳ सत्यौजसं करोति । ब्रह्मा३न्त्वꣳ राजन्ब्रह्माऽसि मित्रोऽसि सुशेव इत्याह । मित्रमेवैनꣳ सुशेवं करोति । ब्रह्मा३न्त्वꣳ राजन्ब्रह्माऽसि वरुणोऽसि सत्यधर्मेत्याह । वरुणमेवैनꣳ सत्यधर्माणं करोति ।" [ब्रा० का० १ प्र० ७ अ० १०] इति ॥

सवितेन्द्रो मित्र इति देवतापदानामुच्चारणेन तद्देवताप्रियाणां छन्दसामुच्चारणं संपद्यत इति दर्शयति—

"सविताऽसि सत्यसव इत्याह । गायत्रीमेवैतेनाभिव्याहरति । इन्द्रोऽसि सत्यौजा इत्याह । त्रिष्टुभमेवैतेनाभिव्याहरति (३) । मित्रोऽसि सुशेव इत्याह । जगतीमेवैतेनाभिव्याहरति । सत्यमेता देवताः । सत्यमेतानि छन्दाꣳसि । सत्यमेवावरुन्धे ।" [ब्रा० का० १ प्र० ७ अ० १०] इति ।

एता इन्द्रादयो देवताः सत्यं पालयन्त्येतानि गायत्र्यादिच्छन्दांसि च सत्यममोघं फलं प्रयच्छन्ति । अत उभयोः सत्यरूपत्वादिन्द्रादिपदोच्चारणेन गायत्र्याद्युच्चारणसिद्धिः । तेन यजमानः सत्यवादित्वमेव सर्वतः संपादयति ॥

वरुणपदोच्चारणेनानुष्टुबुच्चारणसिद्धिं दर्शयति—

"वरुणोऽसि सत्यधर्मेत्याह । अनुष्टुभमेवैतेनाभिव्याहरति । सत्यानृते वा अनुष्टुप् । सत्यानृते वरुणः । सत्यानृते एवावरुन्धे (४) ।" [ब्रा० का० १ प्र० ७ अ० १०] इति ।

विश्वे देवस्य नेतुरित्यस्यामनुष्टुभि प्रथमपादः सप्ताक्षर इत्यनृतत्वम् । उत्तरे त्रयः पादा अष्टाक्षरा इति सत्यत्वम् । एतच्च "एकस्मादक्षरादनाप्तं प्रथमं पदम्" इत्यादिब्राह्मणेनैव दर्शितम् । वरुणोऽपि क्वचिदनिष्टकारित्वादनृतरूपः । क्वचित्तन्निवर्तकत्वात्सत्यरूपः । एतच्च "वरुणो वा एतं गृह्णाति योऽश्वं प्रतिगृह्णाति यावतोऽश्वान्प्रतिगृह्णीयात्तावतो वारुणान्चतुष्कपालान्निर्वपेद्वरुणमेव स्वेन भागधेयेनोपधावति स एवैनं वरुणपाशान्मुञ्चति" इत्यादिषु ब्राह्मणेषु स्पष्टं द्रष्टव्यम् । अत उभयरूपत्वसाम्याद्वरुणपदोच्चारणेनानुष्टुबुच्चारिता भवति । तेन च यजमानोऽनृतं त्यक्तुं सत्यं वक्तुं च समर्थत्वात्सत्यानृते स्वाधीने करोति ॥

( राजसूयविषयस्य विजयादूर्ध्वमासनोपविष्टस्य सर्वैः सेव्यत्वस्य वर्णनम् )

वेदनं प्रशंसति—

"नैनꣳ सत्यानृते उदिते हिꣳस्तः। य एवं वेद।" [ ब्रा० का० १ प्र० ७ अ० १० ] इति॥

कल्पः—"इन्द्रस्य वज्रोऽसीति स्फ्यं ब्रह्मा राज्ञे प्रयच्छति" इति।

पाठस्तु—

## इन्द्रस्य वज्रोऽसि वार्त्रघ्नस्तेन मे रध्य, इति।

हे स्फ्य वज्रतृतीयांशत्वात्त्वं वज्रोऽसि, स्फ्यस्तृतीयमिति श्रुतेः। यतो विरोधिघाती त्वं तेन कारणेन मे मदर्थं रध्य द्यूतस्थानपरिलेखनरूपं कार्यं साधय॥

विधत्ते—

"इन्द्रस्य वज्रोऽसि वार्त्रघ्न इति स्फ्यं प्रयच्छति। वज्रो वै स्फ्यः। वज्रेणैवास्मा अवरपरꣳ रन्धयति। एवꣳ हि तच्छ्रेयः। यदस्मा एते रध्येयुः।" [ ब्रा० का० १ प्र० ७ अ० १० ] इति।

रध्येत्युच्चारणेनास्मै यजमानायावरं परं चापेक्षितं सर्वकार्यं रन्धयति साधयति। यद्यदि यजमानायैते कार्यविशेषा रध्येयुः सिध्येयुः। एवं सति श्रेयो हि तत्प्रशस्ततरं खलु॥

## दिशोऽभ्ययꣳ राजाऽभूत्—

कल्पः—"दिशोऽभ्ययꣳ राजाऽभूदिति पञ्चाक्षान्राज्ञे प्रयच्छति" इति।

अयं यजमान ऊर्ध्वदिक्सहिताः पञ्च दिशोऽभिलक्ष्य राजाऽभूत्॥

विधत्ते—

"दिशोऽभ्ययꣳ राजाऽभूदिति पञ्चाक्षान्प्रयच्छति। एते वै सर्वेऽयाः। अपराजायिनमेवैनं करोति (५)।" [ ब्रा० का०१प्र०७ अ०१० ] इति।

अक्षाः कपर्दकाः सुवर्णनिर्मिताः। विभीतकफलानि सौवर्णानीत्येके। ते चाक्षा द्यूतस्थाने निवपनीयाः। तथा चाऽऽपस्तम्बेन दर्शितम्—"अक्षावापोऽधिदेवनमुद्धत्यावोक्ष्याक्षान्निवपेत्सौवर्णान्परःशतान्परःसहस्रान्वा" इति। तेभ्यः पञ्चाक्षानुद्धृत्य जितवानयं राजेत्यभिप्रायेण तस्मै राज्ञे दद्यात्। एत एव पञ्चाक्षा अयाः सर्वे संपद्यन्ते। अयशब्दोऽक्षवाची। पञ्चदिग्वर्त्यक्षाभिप्रायेण पञ्चाक्षाणां दत्तत्वाद्राशिस्थाः सर्वेऽप्यक्षा दत्ता भवन्ति। तथा सत्येनं यजमानमपराजायिनं कदाचिदपि पराजयरहितमेव करोति॥

विधत्ते—

" ओदनमुदुब्रुवते । परमेष्ठी वा एषः । यदोदनः । परमामेवैन श्रियं गमयति । " [ ब्रा० का० १ प्र० ७ अ० १० ] इति ।

अधिदेवनकाल ओदनं पणत्वेन सर्वे परस्परं ब्रूयुः । अन्नाद्धि प्रजाः प्रजायन्त इति श्रुतेरोदनः परमेष्ठिरूपः । तथा सत्योदनपणप्रतिज्ञया परमां श्रियं यजमानः प्राप्नोति ॥

सुश्लोकाँ३ सुमङ्गलाँ३ सत्यराजा३न् ।

कल्पः—" मङ्गल्यनाम्नो राजाऽऽह्वयति सुश्लोकाँ३ इति संग्रहीतारं सुमङ्गलाँ३ इति भागदुघं सत्यराजा३निति क्षत्तारम् " इति ।

शोभनः श्लोकः स्तुतिर्यस्यासौ सुश्लोकः कोशाध्यक्षोऽश्वप्रग्रहधारी वा । तावुभावपि स्वस्वकार्यं सम्यगनुतिष्ठन्तौ शोभनस्तुतियुक्तौ भवतः । शोभनं मङ्गलं मर्यादानुल्लङ्घनेन प्रजाभ्यः करादानरूपं यस्य भागदुघस्य सोऽयं सुमङ्गलः । सत्यस्यावश्यंभाविनोऽन्तःपुररक्षणस्य स्वामी क्षत्ता सत्यराजा । एतेषां संबोधनानि प्लुतयश्च दूराद्धानार्थाः । द्वयोः सानुनासिकत्वं सांप्रदायिकम् ॥

स्वकीयाः संग्रहीत्रादयः सुश्लोकादयो भूयासुरित्येवमाशीःपरतया व्याचष्टे—

" सुश्लोकाँ३ सुमङ्गलाँ३ सत्यराजा३नित्याह । आशिषमेवैतामाशास्ते । " [ ब्रा० का० १ प्र० ७ अ० १० ] इति ॥

विधत्ते—

" शौनःशेपमाख्यापयते । वरुणपाशादेवैनं मुञ्चति । " [ ब्रा० का० १ प्र० ७ अ० १० ] इति ।

शुनःशेपेन दृष्टं शस्त्रं शौनःशेपं, तदध्वर्युर्होतारं वाचयेत्, तेन यजमानं वरुणपाशान्मोचयतीति ॥

तत्र ऋक्संख्यां विधत्ते—

" परःशतं भवति । शतायुः पुरुषः शतेन्द्रियः । आयुष्येवेन्द्रिये प्रतितिष्ठति । " [ ब्रा० का० १ प्र० ७ अ० १० ] इति ।

परःशतं शतादधिकम् । ऋक्संख्या चाऽऽपस्तम्बेन स्पष्टीकृता—" शौनःशेपमाख्यापयत ऋचो गाथामिश्राः परःशताः परःसहस्रा वा " इति ॥

विधत्ते—

" मारुतस्य चैकविंशतिकपालस्य वैश्वदेव्यै चाऽऽमिक्षाया अग्नये स्विष्टकृते समवद्यति । देवताभिरेवैनमुभयतः परिगृह्णाति । " [ब्रा० का० १ प्र० ७ अ० १० ] इति ।

( राजसूयविषयस्य विजयादूर्ध्वमासनोपविष्टस्य सर्वैः सेव्यत्वस्य वर्णनम् )

समवद्यति समस्यैकीकृत्यावद्येत् । तेनोभयतः कर्मद्वयेऽवस्थिताभिर्देवताभिरेवैनं यजमानमुभयोः पार्श्वयोः पालितवान्भवति ॥

अपां नप्त्रे स्वाहोर्जो नप्त्रे स्वाहाऽग्नये गृहपतये स्वाहा ॥

कल्पः—" अवभृथेन प्रचर्यापां नप्त्रे स्वाहेत्यप्सु जुहोत्यूर्जो नप्त्रे स्वाहेत्यन्तरा दर्भस्तम्बे स्थाणौ वल्मीकवपायां वा हुत्वाऽग्नये गृहपतये स्वाहेति प्रत्येत्य गार्हपत्ये हुत्वा " इति ।

अपां नप्त्रे नपातयित्रे विनाशमकुर्वते वह्नये । न खल्वग्निरपो नाशयति किं तूत्पादयति । अग्नेराप इति सृष्टिप्रकरणे श्रवणात् । ऊर्जो बलस्य नपातयित्रे वह्नय ऊर्जो नप्त्रे । उदराग्निना भुक्तेऽन्ने जीर्णे सति बलं वर्धते न तद्विनाश्यते ॥

विधत्ते—

" अपां नप्त्रे स्वाहोर्जो नप्त्रे स्वाहाऽग्नये गृहपतये स्वाहेति तिस्र आहुतीर्जुहोति । त्रय इमे लोकाः । एष्वेव लोकेषु प्रतितिष्ठति ( ६ ) । " [ ब्रा० का० १ प्र० ७ अ० १० ] इति ॥

अत्र विनियोगसंग्रहः—

" बाहू अधो हरेद्वाभ्यां मित्रेति वरुणेति च ।
स्वाम्युपाहृत्य बाहू सं वैश्वदेव्यां प्रसादयेत् ॥ १ ॥
क्षत्राऽऽसन्द्यां तु खादिर्यां कृत्यधीवाससंस्तृतिः ।
स्योना स्वामी समागत्य मा त्वा तत्रोपसीदति ॥ २ ॥
नि षोपविष्टं संमन्त्र्य ब्रह्मा३नध्वर्युमीरयेत् ।
प्रत्याह सोऽपि त्वमिति ब्रह्मा होता च सामगः ॥ ३ ॥
राज्ञोक्ता उत्तरं प्राहुरिन्द्र स्फ्यं स्वामिनेऽर्पयेत् ।
दिशोऽक्षान्दापयेत्पञ्च सुश्लोक इति च क्रमात् ॥ ४ ॥
संग्रहीता भागदुघः क्षत्ता चाऽऽहूयते त्रिभिः ।
अपां जुहोत्यप्सु दर्भे गार्हपत्ये त्रिभिः क्रमात् ॥
अनुवाके षोडशेऽस्मिंस्त्रयोविंशतिरीरिताः ॥ ५ ॥ " इति ॥

अथ मीमांसा ।

तृतीयाध्यायस्य तृतीयपादे चिन्तितम्—

" राजसूयेऽभिषेच्याख्ये यागे ये देवनादयः ।
तच्छेषास्तेऽखिलार्था वा तच्छेषास्तस्य संनिधेः ॥

राजसूयकथंभावानुवृत्तेः सर्वशेषता ।
कल्प्याऽऽकाङ्क्षाऽभिषेच्यस्य प्रक्रिया प्रबला ततः ॥ ”

राजसूये पञ्चिष्टिसोमयागा बहवः प्रधानभूताः । तत्राभिषेचनीयाख्यः कश्चित्सोमयागः । तत्संनिधौ देवनादयः श्रूयन्ते—“ अक्षैर्दीव्यति राजन्यं जिनाति शौनःशेपमाख्यापयते ” इति । जिनाति जयति । बह्वृचब्राह्मणे समाम्नातं शुनःशेपविषयमुपाख्यानं शौनःशेपम् । तत्र संनिधिबलाद्देवनादयोऽभिषेचनीयाङ्गमिति चेन्मैवम् । राजसूयस्य कथंभावाकाङ्क्षायामनुवृत्तायां विहिता देवनादयः प्रकरणेन राजसूयशेषाः । राजसूयश्च बहुयागात्मक इत्यत्र सर्वशेषत्वम् । न चाभिषेचनीयस्य काचिदाकाङ्क्षा देवनादिष्वस्ति । ज्योतिष्टोमविकृतित्वेनातिदिष्टैः प्राकृताङ्गैरेव तदाकाङ्क्षानिवृत्तेः । संनिहितविधिबलादाकाङ्क्षोत्थाप्यत इति चेत् । अत एवाऽऽकाङ्क्षारूपमवान्तरप्रकरणमादौ परिकल्प्य तद्द्वारा वाक्यलिङ्गश्रुतिकल्पनया संनिधिर्विप्रकृष्यते । राजसूयाकाङ्क्षारूपं तु महाप्रकरणं क्लृप्तत्वादेकया कक्ष्यया संनिकृष्यते । तस्मात्प्रकरणेन संनिधिबाधात्सर्वशेषा देवनादयः ।

पञ्चमाध्यायस्य द्वितीयपादे चिन्तितम्—

“ अभिषेच्यप्राकृताङ्गसमाप्तौ देवनादिकम् ।
मध्ये वा पूर्ववत्सर्वसमाप्तौ देवनादयः ॥
अभिषेकोऽपकृष्टोऽस्मात्पूर्वं प्रत्यक्षपाठतः ।
देवनाद्यास्ततो मध्ये माहेन्द्रस्तोत्रतः पुरा ॥ ”

राजसूये सोमयागस्याभिषेचनीयस्य संनिधौ देवनशौनःशेपोपाख्यानाभिषेकाः क्रमेणाऽऽम्नाताः । तत्राभिषेचनीये चोदकप्राप्तमङ्गजातं नारिष्ठन्यायेन प्रथमं संपाद्य पश्चाद्देवनादयः कार्या इति प्राप्ते ब्रूमः—माहेन्द्रस्य स्तोत्रं प्रत्यभिषिच्यत इति वाक्येन तस्य सोमयागस्य मध्येऽभिषेकोऽपकृष्टः । अभिषेकात्पूर्वभावित्वं विदेवनादीनां प्रत्यक्षपाठप्राप्तम् । ततो माहेन्द्रस्तोत्रादपि पूर्वस्मिन्काले प्रयाजाघारवद्विदेवनादीनामपकर्षः कर्तव्यः ।

चतुर्थाध्यायस्य चतुर्थपादे चिन्तितम्—

“ एकस्यैवाभिषेच्यस्य तदङ्गं निखिलस्य वा ।
राजसूयस्यापकर्षादाद्यः प्रक्रिययोत्तरः ॥ ”

यदेतद्देवनादिकमङ्गमित्युक्तं तदेतदभिषेचनीयस्य सोमयागस्यैकस्यैवाङ्गम् । कुतः । अपकर्षात् । यद्यप्यभिषेचनीयविधेरूर्ध्वं तत्संनिधौ देवनादय आम्नातास्तथाऽप्यभिषेचनीयमध्ये तेऽपकृष्यन्ते । माहेन्द्रस्य स्तोत्रं प्रत्यभिषिच्यत

( राजसूयविषयाणां संसृपां दशसंख्याकहविषां विधिः )

इति वाक्येन राज्ञो यजमानस्याभिषेको माध्यंदिनसवने स्तोत्रकालेऽपकृष्यते। तस्मिन्नपकृष्टे सति ततः पूर्वमाम्नातानां विदेवनादीनामर्थसिद्धोऽपकर्षः। ततो माहेन्द्रस्तोत्रादिवदभिषेचनीयप्रयोगान्तःपातित्वाद्देवनादिकमभिषेचनीयस्यैवाङ्गमिति प्राप्ते ब्रूमः—किं तदङ्गत्वे संनिधिः प्रमाणं किं वा प्रयोगपरिकल्पितमवान्तरप्रकरणम्। उभयथाऽपि प्रत्यक्षस्य महाप्रकरणस्य प्रबलत्वाद्देवनादिकं राजसूयस्याङ्गम्। राजसूयशब्दश्चानुमत्यादीन्सर्वान्यागानभिधत्ते। तस्मात्सर्वेषामेतदङ्गम्। अनुष्ठानं तु राजसूयमध्ये क्वचिदपेक्षितमिति वचनबलादभिषेचनीयगतमाहेन्द्रस्तोत्रकाले तदनुष्ठीयते॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डेऽष्टमप्रपाठके षोडशोऽनुवाकः॥ १६॥

---

( अथ प्रथमाष्टकेऽष्टमप्रपाठके सप्तदशोऽनुवाकः। )

---

आग्नेयमष्टाकपालं निर्वपति हिरण्यं दक्षिणा सारस्वतं चरुं वत्सतरी दक्षिणा सावित्रं द्वादशकपालमुपध्वस्तो दक्षिणा पौष्णं चरुꣳ श्यामो दक्षिणा बार्हस्पत्यं चरुꣳ शितिपृष्ठो दक्षिणैन्द्रमेकादशकपालमृषभो दक्षिणा वारुणं दशकपालं महानिरष्टो दक्षिणा सौम्यं चरुं बभ्रुर्दक्षिणा त्वाष्ट्रमष्टाकपालꣳ शुण्ठो दक्षिणा वैष्णवं त्रिकपालं वामनो दक्षिणा (१)॥

( आग्नेयꣳ हिरण्यꣳ सारस्वतं द्विचत्वारिꣳशत्। )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टकेऽष्टमप्रपाठके सप्तदशोऽनुवाकः॥ १७॥

---

( राजसूयविषयाणां संसृपां दशसंख्याकहविषां विधिः )

( अथ प्रथमाष्टकेऽष्टमप्रपाठके सप्तदशोऽनुवाकः । )

---

आग्नेयम् । अष्टाकपालमित्यष्टा—कपालम् । निर्रितिं । वपति । हिरण्यम् । दक्षिणा । सारस्वतम् । चरुम् । वत्सतरी । दक्षिणा । सावित्रम् । द्वादशकपालमिति द्वादश—कपालम् । उपध्वस्त इत्युप—ध्वस्तः । दक्षिणा । पौष्णम् । चरुम् । श्यामः । दक्षिणा । बार्हस्पत्यम् । चरुम् । शितिपृष्ठ इति शिति—पृष्ठः । दक्षिणा । ऐन्द्रम् । एकादशकपालमित्येकादश—कपालम् । ऋषभः । दक्षिणा । वारुणम् । दशकपालमिति दश—कपालम् । महानिरष्ट इति महा—निरष्टः । दक्षिणा । सौम्यम् । चरुम् । बभ्रुः । दक्षिणा । त्वाष्ट्रम् । अष्टाकपालमित्यष्टा—कपालम् । शुण्ठः । दक्षिणा । वैष्णवम् । त्रिकपालमिति त्रि—कपालम् । वामनः । दक्षिणा ( १ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टकेऽष्टमप्रपाठके सप्तदशोऽनुवाकः ॥ १७ ॥

---

( अथ प्रथमकाण्डेऽष्टमप्रपाठके सप्तदशोऽनुवाकः । )

---

षोडशे जितवतो राज्ञ इतरसेव्यत्वरूप उपचारो वर्णितः । सप्तदशे संसृपां हवींषि दशसंख्याकानि विधीयन्ते—

( राजसूयविषयाणां संसृपां दशसंख्याकहविषां विधिः )

आग्नेयमष्टाकपालं निर्वपति हिरण्यं दक्षिणा सारस्वतं चरुं वत्सतरी दक्षिणा सावित्रं द्वादशकपालमुपध्वस्तो दक्षिणा पौष्णं चरुꣳ श्यामो दक्षिणा बार्हस्पत्यं चरुꣳ शितिपृष्ठो दक्षिणैन्द्रमेकादशकपालमृषभो दक्षिणा वारुणं दशकपालं महानिरष्टो दक्षिणा सौम्यं चरुं बभ्रुर्दक्षिणा त्वाष्ट्रमष्टाकपालꣳ शुण्ठो दक्षिणा वैष्णवं त्रिकपालं वामनो दक्षिणा ॥ , इति ॥

उपरतस्तनपाना वत्सतरी। शुक्लकायः शुण्ठः ॥

तान्येतानि हवींषि प्रशंसति—

“ वरुणस्य सुषुवाणस्य दशधेन्द्रियं वीर्यं परापतत्। तत्संꣳसृद्भिरनु समसर्पत्। तत्संꣳसृपाꣳ संꣳसृप्त्वम्। अग्निना देवेन प्रथमेऽहन्ननु प्रायुङ्क्त। सरस्वत्या वाचा द्वितीये। सवित्रा प्रसवेन तृतीये। पूष्णा पशुभिश्चतुर्थे। बृहस्पतिना ब्रह्मणा पञ्चमे। इन्द्रेण देवेन षष्ठे। वरुणेन स्वया देवतया सप्तमे (१)। सोमेन राज्ञाऽष्टमे। त्वष्ट्रा रूपेण नवमे। विष्णुना यज्ञेनाऽऽप्नोत्। यत्संꣳसृपो भवन्ति। इन्द्रियमेव तद्वीर्यं यजमान आप्नोति। ” [ ब्रा० का० १ प्र० ८ अ० १ ] इति।

सुषुवाणस्य सुष्ठु सोममभिषेचनीयकर्मण्यभिषुतवतो वरुणस्येन्द्रियसामर्थ्यं दशधा भूत्वा परापतद्विनष्टम्। स च वरुणस्तदिन्द्रियं संसृप्शब्दाभिहितैर्यथोक्तहविर्भिरनुक्रमेण सम्यक्प्राप्तवान्। सम्यक्सृप्यते प्राप्यते वीर्यमाभिरग्न्यादिभिर्देवताभिरिति संसृपो देवतास्तासां हवींष्यपि तन्नामकानि। स वरुणः प्रथमेऽहनि देवेन द्योतनात्मकेनाग्निना सहाष्टाकपालं प्रायुङ्क्ताऽऽग्नेयमष्टाकपालं निरवपदित्यर्थः। द्वितीयेऽहनि वाग्रूपया सरस्वत्या चरुं निरवपत्। तृतीये प्रसवकारणेन सवित्रा सह द्वादशकपालं निरवपत्। चतुर्थे पशुभिरुपलक्षितेन पूष्णा सह चरुं निरवपत्। पञ्चमे ब्राह्मणाभिमानिना बृहस्पतिना सह चरुं निरवपत्। षष्ठे द्योतनात्मकेनेन्द्रेण सहैकादशकपालं निरवपत्। सप्तमे स्वकीयदेवतारूपेणातीतकल्पगतवरुणेन सह दशकपालं निरवपत्। अष्टमे राज्ञा

१ ख. घ. ङ. च. 'न्द्रियं सा'।

यजमानेन सोमेन सह चरुं निरवपत् । नवमे रूपवता त्वष्ट्रा सहाष्टाकपालं निरवपत् । दशमे यज्ञरूपेण विष्णुना सह त्रिकपालं निरुप्य तदिन्द्रियमाप्नोत् । यदि यजमानस्यापि संसृपो यागा भवेयुस्तदाऽसौ यजमान इन्द्रियसामर्थ्यं प्राप्नोतीति । उत्पत्तिविधिभिर्विहितानां संसृपामनेनार्थवादेन भिन्नदिनानुष्ठानविधिरुन्नेयः ॥

अन्यं प्रकारविशेषं विधत्ते—

" पूर्वा पूर्वा वेदिर्भवति । इन्द्रियस्य वीर्यस्यावरुद्ध्यै । " [ब्रा० का० १ प्र० ८ अ० १ ] इति ।

पूर्वा पूर्वदिग्गता दिनभेदेन बहुवेदित्वद्योतनार्था वीप्सा । तत्प्रकारश्चाऽऽपस्तम्बेन स्पष्टीकृतः—" श्वोभूते परेण सौमिकदेवयजनं दशभिः सप्तभिर्वा संसृपां हविर्भिर्यजत आग्नेयमष्टाकपालमिति पूर्वं पूर्वं देवयजनमध्यवस्यति यत्र + पूर्वस्याऽऽहवनीयस्तत्रोत्तरस्य गार्हपत्य उत्तमायाः प्राग्वंश आहवनीयो बहिर्गार्हपत्यः " इति ॥

अष्टमनवमदशमानां हविषां स्वस्वदिनेषु कंचित्कालविशेषं विधत्ते—

" पुरस्तादुपसदा१ँ सौम्येन प्रचरति । सोमो वै रेतोधाः । रेत एव तद्दधाति । अन्तरा त्वाष्ट्रेण । रेत एव हितं त्वष्टा रूपाणि विकरोति । उपरिष्टाद्वैष्णवेन । यज्ञो वै विष्णुः । यज्ञ एवान्ततः प्रतितिष्ठति ( २ ) । " [ ब्रा० का० १ प्र० ८ अ० १ ] इति ।

अभिषेचनीयात्सोमयागादूर्ध्वं दशपेयः सोमयागः कर्तव्यः । तस्य च संसृज्यागसंबन्धिनि सप्तमेऽहन्येका दीक्षा कर्तव्या । तत ऊर्ध्वं त्रिषु दिनेषूपसदः कर्तव्याः । तत्र प्रथमोपसद्दिन उपसद्यागात्पूर्वं सौम्याख्येन संसृपाऽष्टमहविषा प्रचरेत् । मध्यमोपसद्दिने पौर्वाह्णिकापराह्णिकोपसदोर्मध्ये त्वाष्ट्रेण नवमहविषा प्रचरेत् । तृतीयोपसद्दिने पौर्वाह्णिकापराह्णिकोपसदावनुष्ठायोपरिष्टाद्वैष्णवेन दशमहविषा प्रचरेत् । सोमस्य रेतोधारणहेतुत्वात्प्रथमतस्तत्प्रयोगे यजमानो रेतो दधाति । ततस्त्वष्टुः प्रयोगे सति धृतं रेतोऽवष्टभ्य त्वष्टा रूपाणि विविधानि करोति । विष्णोर्यज्ञरूपत्वादन्ते तद्धविःप्रयोगे सति यजमानो राजसूयादूर्ध्वमपि यज्ञानुष्ठान एव प्रतिष्ठितो भवति । दशपेयतन्त्रमध्ये त्रयाणां हविषामनुष्ठानमापस्तम्बेन स्पष्टीकृतम् । अपराह्णे दशपेयस्य तन्त्रं

+ ख. पुस्तकटिप्पण्यां " पूर्व आहवनीयस्तत्रोत्तरो गार्हपत्यः " इति पाठः ।

१ क. पूर्वपूर्वदे' । २ ख. घ. च. पूर्वदे' ।

( राजसूयविषयस्य दशपेयस्याभिधानम् )

प्रक्रमयतीत्युपक्रम्यैवं पठ्यते—"एका दीक्षा तिस्र उपसदः पुरस्तादुपसदाꣳ सौम्यं चरुं निर्वपति अन्तरा त्वाष्ट्रमष्टाकपालमुपरिष्टाद्वैष्णवं त्रिकपालम्" इति॥

अथ मीमांसा।

चतुर्थाध्यायस्य चतुर्थपादे चिन्तितम्—

"किं पुरस्तादुपसदां सौम्येन प्रचरेदिति।
अङ्गाङ्गिभावः कालो वा वाक्यादाद्यः प्रतीयते॥
पुरस्तादिति कालोऽत्र भावी(ति) कालविधिस्ततः।
नाङ्गं कस्यापि सौम्यादि प्रधानमितरेष्टिवत्॥"

राजसूये संसृप्शब्दवाच्यान्याग्नेयाष्टाकपालादीनि दश हवींष्याम्नातानि। तेष्वष्टमनवमदशमानि सौम्यत्वाष्ट्रवैष्णवानि। तद्विषयमिदं वाक्यमाम्नायते—"पुरस्तादुपसदाꣳ सौम्येन प्रचरति। अन्तरा त्वाष्ट्रेण। उपरिष्टाद्वैष्णवेन" इति। योऽयं राजसूये सोमयागस्तस्मिन्नुपदिष्टानामुपसदामादिमध्यावसानेषु सौम्यादीनां त्रयाणामनुष्ठानमनेन वाक्येन चोद्यते। ततो वाक्यात्सौम्यादीन्युपसदामङ्गानीति प्राप्ते ब्रूमः—उपसदामिति षष्ठ्याः कालवाचिना पुरस्तादिति शब्देनान्वयात्सौम्यादीनां कालविशेषसंबन्धपरमिदं वाक्यं न त्वङ्गाङ्गिभावपरम्। ततो न कस्याप्यङ्गं सौम्यादिकं किं त्वनुमत्यादिवत्प्रधानम्॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डेऽष्टमप्रपाठके सप्तदशोऽनुवाकः॥ १७॥

---

( अथ प्रथमाष्टकेऽष्टमप्रपाठकेऽष्टादशोऽनुवाकः। )

---

सद्यो दीक्षयन्ति सद्यः सोमं क्रीणन्ति पुण्डरिस्रजां प्र यच्छति दशभिर्वत्सतरैः सोमं क्रीणाति दशपेयो भवति शतं ब्राह्मणाः पिबन्ति सप्तदशꣳ स्तोत्रं भवति प्राकाशावं-

---

१ ख. किं त्वनु।

ध्वर्यवे ददाति स्रजमुद्गात्रे रुक्मः होत्रेऽश्वं प्रस्तोतृप्रतिहर्तृभ्यां द्वादश पष्ठौहीर्ब्रह्मणे वशां मैत्रावरुणायर्षभं ब्राह्मणाच्छः सिने वाससी नेष्टापोतृभ्याः स्थूरि यवाचितमच्छावाकाया- नड्वाहमग्नीधे भार्गवो होता भवति श्राय- न्तीयं ब्रह्मसामं भवति वारवन्तीयमग्निष्टोम- सामः सारस्वतीरपो गृह्णाति ( १ ) ॥

( वारवन्तीयं चत्वारि च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टकेऽ- ष्टमप्रपाठकेऽष्टादशोऽनुवाकः ॥ १८ ॥

---

( अथ प्रथमाष्टकेऽष्टमप्रपाठकेऽष्टादशोऽनुवाकः । )

---

सद्यः । दीक्षयन्ति । सद्यः । सोमम् । क्रीणन्ति । पुडरिस्रजाम् । प्रेति । यच्छति । दशभिरिति दश— भिः । वत्सतरैः । सोमम् । क्रीणाति । दशपेय इति दश—पेयः । भवति । शतम् । ब्राह्मणाः । पिबन्ति। सप्तदशमिति सप्त—दशम् । स्तोत्रम् । भवति । प्रा- काशौ । अध्वर्यवे । ददाति । स्रजम्। उद्गात्र इत्युत्— गात्रे । रुक्मम् । होत्रे । अश्वम् । प्रस्तोतृप्रतिहर्तृभ्या- मिति प्रस्तोतृप्रतिहर्तृ—भ्याम् । द्वादश । पष्ठौहीः ।

ब्रह्मणे। वशाम्। मैत्रावरुणायेति मैत्रा—वरुणाय। ऋषभम्। ब्राह्मणाच्छंसिने। वाससी इति। नेष्टापोतृभ्यामिति नेष्टापोतृ—भ्याम्। स्थूरि। यवाचितमिति यव—आचितम्। अच्छावाकाय। अनड्वाहम्। अग्नीध इत्यग्नि—इधे। भार्गवः। होता। भवति। श्रायन्तीयम्। ब्रह्मसाममिति ब्रह्म—सामम्। भवति। वारवन्तीयमिति वार—वन्तीयम्। अग्निष्टोमसाममित्यग्निष्टोम—सामम्। सारस्वतीः। अपः। गृह्णाति॥ १॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टकेऽष्टमप्रपाठकेऽष्टादशोऽनुवाकः॥ १८॥

---

(अथ प्रथमकाण्डेऽष्टमप्रपाठकेऽष्टादशोऽनुवाकः।)

---

सप्तदशे संसृपां हवींष्युक्तानि। अष्टादशे दशपेय उच्यते। तत्र दीक्षासोमक्रययोश्चोदकप्राप्तं दिनभेदमपवदितुं विधत्ते—

सद्यो दीक्षयन्ति सद्यः सोमं क्रीणन्ति, इति।

प्रकृतावप्सु स्नात्यपोऽश्नातीति यद्विहितं तदपवदितुं विधत्ते—

पुण्डरिस्रजां प्र यच्छति, इति।

तदेतत्सूत्रकारः स्पष्टी चकार—"अपो दीक्षायाः स्थाने द्वादशपुण्डरीकां स्रजं प्रतिमुञ्चते" इति।

प्रतिमोचयेदित्यर्थः॥

तदेतत्प्रशंसति—

"जामि वा एतत्कुर्वन्ति। यत्सद्यो दीक्षयन्ति सद्यः सोमं क्रीणन्ति।

पुण्डरिस्रजां प्र यच्छत्यजामित्वाय । अङ्गिरसः सुवर्गं लोकं यन्तः । अप्सु दीक्षातपसी प्रावेशयन् । तत्पुण्डरीकमभवत् । यत्पुण्डरिस्रजां प्रयच्छति । साक्षादेव दीक्षातपसी अवरुन्धे । " [ ब्रा० का० १ प्र० ८ अ० २ ] इति ॥

चोदकप्राप्तानि हिरण्यवासःप्रभृतीनि दशविधक्रयद्रव्याण्यपवदितुं विधत्ते—

दशभिर्वत्सतरैः सोमं क्रीणाति, इति ।

वत्सतरा उपरतस्तनपानाः । अत एव सूत्रकारो विशिनष्टि—" दशभिर्वत्सतरैः सोमं क्रीणाति " इति ॥

अत्र संख्यां प्रशंसति—

" दशभिर्वत्सतरैः सोमं क्रीणाति । दशाक्षरा विराट् ( १ ) । अन्नं विराट् । विराजैवान्नाद्यमवरुन्धे । " [ ब्रा०का० १ प्र० ८अ० २ ] इति ॥

साण्डत्वं विधाय प्रशंसति—

" मुष्करा भवन्ति सेन्द्रत्वाय । " [ ब्रा० का० १ प्र० ८अ० २ ] इति ।

सेन्द्रत्वमिन्द्रियसामर्थ्यसहितत्वम् ॥

प्रधानं कर्म विधत्ते—

दशपेयो भवति, इति ।

दशसु वैकृतचमसेषु पातव्यः सोमरसो यस्मिन्क्रतौ स क्रतुर्दशपेयः । यद्वा—एकैकस्मिन्पात्रे दशभिर्ब्राह्मणैः पातव्यः सोमो यस्मिन्स दशपेयः । एतदेवाभिप्रेत्य सूत्रकार आह—" श्वोभूते पात्रसंसादनकाले दश चमसानधिकान्प्रयुनक्ति तानुन्नयनकाल उन्नयति भक्षणकाले दश दशैकैकस्मिंश्चमसे ब्राह्मणाः सोमपाः सोमं भक्षयन्ति " इति ॥

तं विधिं प्रशंसति—

" दशपेयो भवति । अन्नाद्यस्यावरुद्ध्यै । " [ब्रा०का०१प्र०८अ०२]इति॥

विधत्ते—

शतं ब्राह्मणाः पिबन्ति, इति ।

एकैकस्मिन्पात्रे दश दश ब्राह्मणा इति मिलित्वा शतं ब्राह्मणाः पिबन्ति ॥

प्रशंसति—

" शतं ब्राह्मणाः पिबन्ति । शतायुः पुरुषः शतेन्द्रियः । आयुष्येवेन्द्रिये प्रतितिष्ठति । " [ ब्रा० का० १ प्र० ८ अ० २ ] इति ॥

विधत्ते—

सप्तदशः स्तोत्रं भवति, इति ।

( राजसूयविषयस्य दशपेयस्याभिधानम् )

अस्मिन्क्रतौ यद्यत्स्तोत्रं तस्य सर्वस्य सप्तदशस्तोमत्वमेव कुर्यात् ॥

प्रशंसति—

" सप्तदशꣳ स्तोत्रं भवति । सप्तदशः प्रजापतिः ( २ ) । प्रजापतेराप्त्यै ।" [ ब्रा० का० १ प्र० ८ अ० २ ] इति ॥

विधत्ते—

प्राकाशावध्वर्यवे ददाति, इति ।

प्राकाशौ सुवर्णदर्पणौ ॥

प्रशंसति—

" प्राकाशावध्वर्यवे ददाति । प्रकाशमेवैनं गमयति ।" [ ब्रा० का० १ प्र० ८ अ० २ ] इति ॥

हिरण्यस्रजो दानं विधत्ते—

स्रजमुद्गात्रे, इति ।

तथा च सूत्रकारः—" दक्षिणाकाले हिरण्यप्राकाशावध्वर्यवे ददाति हिरण्यस्रजमुद्गात्रे " इति ॥

प्रशंसति—

" स्रजमुद्गात्रे । व्येवास्मै वासयति ।" [ ब्रा०का०१प्र०८अ०२ ] इति ।

अस्य यजमानस्य व्येव विशिष्टमेव दुकूलादिकं वासयति उत्तरीयत्वेनाऽऽच्छादयति ॥

वर्तुलस्य स्वर्णाभरणस्य दानं विधत्ते—

रुक्मꣳ होत्रे, इति ॥

प्रशंसति—

" रुक्मꣳ होत्रे । आदित्यमेवास्मा उन्नयति ।" [ ब्रा० का० १ प्र० ८ अ० २ ] इति ।

उदयं प्रापयतीत्यर्थः ॥

विधत्ते—

अश्वं प्रस्तोतृप्रातिहर्तृभ्याम्, इति ।

ददातीत्यनुषज्यते । द्वाभ्यामेकद्रव्यदानं वाचनिकम् ॥

प्रशंसति—

---

१ ख. °स्तोत्रत्व° ।

" अश्वं प्रस्तोतृप्रतिहर्तृभ्याम् । प्राजापत्यो वा अश्वः । प्रजापतेराप्त्यै ( ३ ) ।" [ ब्रा० का० १ प्र० ८ अ० २ ] इति ।

अश्वमेधप्रकरणे प्रजापतेरक्ष्यश्वयत्तत्परापतदिति श्रुतेरश्वस्य प्राजापत्यत्वम् ॥

बालगर्भिणीनां गवां दानं विधत्ते—

द्वादश पष्ठौहीर्ब्रह्मणे, इति ॥

वत्सद्वाराऽभिवृद्धिसूचनादायुष्याभिवृद्ध्या प्रशंसति—

" द्वादश पष्ठौहीर्ब्रह्मणे । आयुरेवावरुन्धे ।" [ ब्रा० का० १ प्र० ८ अ० २ ] इति ॥

वन्ध्याया गोर्दानं विधत्ते—

वशां मैत्रावरुणाय, इति ॥

वशाशब्देन बुद्धिस्थं वशित्वमभिप्रेत्य प्रशंसति—

" वशां मैत्रावरुणाय । राष्ट्रमेव वश्यकः ।" [ ब्रा० का० १ प्र० ८ अ० २ ] इति ॥

रेतःसेचनसमर्थस्य गोर्दानं विधत्ते—

ऋषभं ब्राह्मणाच्छंसिने, इति ॥

ऋषभशब्देन बुद्धिस्थमिन्द्रियमित्यभिप्रेत्य प्रशंसति—

" ऋषभं ब्राह्मणाच्छंसिने । राष्ट्रमेवेन्द्रियाव्यकः ।" [ ब्रा० का० १ प्र० ८ अ० २ ] इति ॥

द्वाभ्यां प्रत्येकं वस्त्रदानं विधत्ते—

वाससी नेष्टापोतृभ्याम्, इति ॥

धौतवस्त्रयोः शुद्धिहेतुत्वमभिप्रेत्य प्रशंसति—

" वाससी नेष्टापोतृभ्याम् । पवित्रे एवास्यैते ।" [ ब्रा० का० १ प्र० ८ अ० २ ] इति ॥

स्थूलस्य यवपूर्णशकटस्य दानं विधत्ते—

स्थूरि यवाचितमच्छावाकाय, इति ॥

वारुणं यवमयं चरुमिति श्रुतत्वाद्यवप्रियं वरुणं स्वकीयभागप्रदानेन स्वकीयदेशान्ताद्बहिर्निःसारितवान्भवतीत्याभिमेत्य प्रशंसति—

" स्थूरि यवाचितमच्छावाकाय । अन्तत एव वरुणमवयजते ( ४ ) ।" [ ब्रा० का० १प्र० ८ अ० २ ] इति ॥

( राजसूयविषयस्य दशपेयस्याभिधानम् )

विधत्ते—

अनड्वाहमग्नीधे, इति ॥

वह्निद्वारकेणोभयोः संबन्धेन प्रशंसति—

“ अनड्वाहमग्नीधे। वह्निर्वा अनड्वान्। वह्निरग्नीत्। वह्निनैव वह्नि यज्ञस्यावरुन्धे।” [ ब्रा० का० १ प्र० ८ अ० २ ] इति।

दर्शपूर्णमासयोराग्नेयहविर्युक्तस्य शकटस्य वहनादनड्वान्वह्निः। अग्नेरिन्धनादाग्नीध्रोऽपि वह्निः। उभयोः संबन्धे सति वह्निरूपेणानडुहा यज्ञस्य वह्नि वाहकमाग्नीध्राख्यमृत्विग्जातं स्वाधीनं करोति ॥

चोदकप्राप्तं होतृसामान्यादिकं बाधितुं विशेषान्विधत्ते—

भार्गवो होता भवति श्रायन्तीयं ब्रह्मसामं भवति वारवन्तीयमग्निष्टोमसामꣳ सारस्वतीरपो गृह्णाति॥, इति ॥

प्रकृतौ यः कोऽपि होतेत्यत्रापि तत्प्राप्तौ भृगुगोत्रोत्पन्न एवेति विशेष्यते। प्रकृतौ ब्राह्मणाच्छंसिनं प्रत्याज्यस्तोत्रे गायत्रसाम्नो विहितत्वात्तदपवादाय श्रायन्तीयं सामात्र विधीयते। श्रायन्त इव सूर्यमित्यस्यामृच्युत्पन्नं साम श्रायन्तीयम्। प्रकृतौ यज्ञायज्ञियस्याग्निष्टोमसामत्वात्तदपोह्य वारवन्तीयं साम विधीयते। अश्वं न त्वा वारवन्तमित्यस्यामृच्युत्पन्नं वारवन्तीयं साम। प्रकृतौ वहन्तीनां गृह्णातीति प्रवाहमात्रगतानामपां वसतीवरित्वादत्रापि तत्प्राप्तौ सरस्वतीगता एवाऽऽपो विधीयन्ते ॥

इन्द्रवीर्यत्वेन त्रयं प्रशंसति—

“ इन्द्रस्य सुषुवाणस्य त्रेधेन्द्रियं वीर्यं परापतत्। भृगुस्तृतीयमभवत्। श्रायन्तीयं तृतीयम्। सरस्वती तृतीयम्। भार्गवो होता भवति। श्रायन्तीयं ब्रह्मसामं भवति। वारवन्तीयमग्निष्टोमसामम्। सारस्वतीरपो गृह्णाति। इन्द्रियस्य वीर्यस्यावरुद्ध्यै।” [ ब्रा० का० १ प्र० ८ अ० २ ] इति ॥

वारवन्तीयस्येन्द्रवीर्यत्वाभावेनात्र स्तुतेरप्रतीतत्वात्तेन सह स्तोतुं श्रायन्तीयमपि पुनरुपादत्ते—

“ श्रायन्तीयं ब्रह्मसामं भवति। इन्द्रियमेवास्मिन्वीर्यꣳ श्रयति। वारव-

---

१ ख. घ. च. इन्द्रियवी°। २ घ. ङ. च. °स्येन्द्रियवी°।

न्तीयमग्निष्टोमसामम् । इन्द्रियमेवास्मिन्वीर्यं वारयति ( ९ ) । " [ ब्रा०का०१ प्र० ८ अ० २ ] इति ।

सामनाम्नि श्रयतिधातोः प्रतीतत्वाद्यजमानेन वीर्यमाश्रीयते । द्वितीयनाम्नि वारयितृत्वप्रतीतेरस्मिन्यजमाने प्रयुक्तं वैरिवीर्यं निवारितं भवति ॥

अथ मीमांसा ।

एकादशाध्यायस्य द्वितीयपादे चिन्तितम्—

" दशपेये चाभिषेचनीये तन्त्रं भिदाऽथ वा ।
क्रयसाहित्यतस्तन्त्रं कालभेदेन भिन्नता ॥ "

राजसूये दशपेयाभिषेचनीयसंज्ञकौ द्वौ सोमयागौ । तयोरङ्गानुष्ठानं तन्त्रेण कार्यम् । कुतः, क्रयस्याभिन्नत्वात् " सह सोमौ क्रीणाति " [ इति । ] अभिषेचनीयस्य यदा सोमक्रयस्तदैव दशपेयस्यापि सोमे क्रेतव्ये सति क्रयात्पूर्वभाविनां दशपेयाङ्गानामपकर्षात्तन्त्रं स्यादिति प्राप्ते ब्रूमः—भिन्नकालीनयोरभिषेचनीयदशपेययोरङ्गानां भेदो युक्तः । संसृप्शब्दवाच्याभ्यो दशभ्य इष्टिभ्य ऊर्ध्वमपराह्णे दशपेयस्योपक्रमः । ताभ्यः प्राचीनेऽत्यन्तव्यवहिते कालेऽभिषेचनीयः । न च क्रयसाहित्यमस्ति, " सद्यो दीक्षयन्ति सद्यः सोमं क्रीणन्ति " इति दशपेये क्रयस्य सद्यस्कालत्वाभिधानात् । सह सोमावितिवचनेन क्रयार्थसंवादे साहित्यं विवक्षितम् । तस्मादुभयोरङ्गानां भेदः ।

तृतीयाध्यायस्य पञ्चमपादे चिन्तितम्—

" राजसूये क्वचित्कर्तुश्चमसो दशभिर्जनैः ।
भक्ष्यः किं तत्र राजन्या भक्षका ब्राह्मणा उत ॥
आद्यो भागा(ना)त्संख्ययैकजातेर्विप्राः शतं दश ।
चमसानद्युरित्युक्त्या राजपात्रं च विप्रगम् ॥ "

राजसूये दशपेयनामके यागे श्रूयते—" दश दशैकैकं चमसमनुसर्पन्ति " इति । तत्र यजमानस्य राजन्यस्य यश्चमसः सोऽयं राजन्यैरेव दशभिर्भक्षणीयः। दशेतिसंख्या(ख्य)या जात्येकत्वप्रतिभानात् । तथा हि—दशपेयस्य ज्योतिष्टोमविकृतित्वात्प्रकृतं धर्मजातं चोदकेन प्राप्तम् । प्रकृतौ च यजमानचमसस्य भिन्नजातिभिर्भक्षणं नास्तीत्यत्रापि तथैव प्राप्तम् । यद्यत्र दशेति विशेषो विधीयते तर्हि प्राकृतं भक्षकसंख्यामात्रं निवर्त्यतां न त्वेकजातीयत्वम् । तस्माद्राजन्यो यजमानो राजन्यैर्नवभिः सह भक्षयेदिति प्राप्ते ब्रूमः—प्रकृतितः प्राप्तेषु दशसु चमसेषु भक्षणायानुसर्पतां पुरुषाणां दश दशेतिवीप्सया प्रतिच-

( राजसूयसंबन्धिनां दिशामवेष्टयः पशुद्वयं सात्वदूतहवींषि चेत्येतेषां विधिः )

मसं दशसंख्यां विधायार्थसिद्धां शतसंख्यामनूद्य संख्येयानां सर्वेषां ब्राह्मण्यं विधीयते "शतं ब्राह्मणाः पिबन्ति" इति । तथा सति यजमानस्यापि राजन्यस्य यत्र भक्षो नास्ति तत्र कुतोऽन्ये राजन्या भक्षयेयुः । तस्माद्ब्राह्मणा एव भक्षकाः ।

दशमाध्यायस्य तृतीयपादे चिन्तितम्—

"किं प्राकाशौ बाधकौ स्तः कृत्स्नस्याऽऽध्वर्यवस्य वा ।
ददातियोगात्कृत्स्नस्य न विशिष्टेन योगतः ॥"

राजसूये श्रूयते—"हिरण्मयौ प्राकाशावध्वर्यवे ददाति" इति । प्राकाशौ दीपस्तम्बावित्येके । दर्पणावित्यपरे । तौ किं प्राकृतस्य दक्षिणाद्रव्यस्य बाधकौ, उताध्वर्युभागस्यैव । तत्र प्राकाशौ ददातीतिकर्मकारकवाचिद्वितीयाश्रुतिकृतेन दानसंबन्धेन प्राकाशावध्वर्यवे इतिवाक्यकृते पुरुषसंबन्धेऽपोदिते सति देयद्रव्यप्रतीतेर्देयान्तरस्य कृत्स्नस्य बाध इति पूर्वः पक्षः । अध्वर्यवे ददातीतिसंप्रदानकारकवाचिचतुर्थीश्रुतिकृतस्य दानक्रियासंबन्धस्यापवदितुमशक्यत्वात्संप्रदानविशिष्टदानक्रियासंबन्धेऽपि द्वितीयाश्रुतेरविरोधादध्वर्युभागस्यैव बाध इति राद्धान्तः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डेऽष्टमप्रपाठकेऽष्टादशोऽनुवाकः ॥ १८ ॥

---

( अथ प्रथमाष्टकेऽष्टमप्रपाठक एकोनविंशोऽनुवाकः । )

---

आग्नेयमष्टाकपालं निर्वपति हिरण्यं दक्षि-
णैन्द्रमेकादशकपालमृषभो दक्षिणा वैश्वदेवं
चरुं पिशङ्गी पष्ठौही दक्षिणा मैत्रावरुणीमा-
मिक्षां वशा दक्षिणा बार्हस्पत्यं चरुꣳ शिंति-
पृष्ठो दक्षिणाऽऽदित्यां मल्हां गर्भिणीमा लं-

१ ख. °न्धे चोदि° ।

भते मारुतीं पृश्निं पष्ठौहीमश्विभ्यां पूष्णे पुरोडाशं द्वादशकपालं निर्वपति सरस्वते सत्यवाचे चरुꣳ सवित्रे सत्यप्रसवाय पुरोडाशं द्वादशकपालं तिसृधन्वꣳ शुष्कदृतिर्दक्षिणा ( १ ) ॥

( आग्नेयꣳ हिरण्यमैन्द्रं वैश्वदेवं पिशङ्गीं सप्तचत्वारिꣳशत् । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टकेऽष्टमप्रपाठक एकोनविंशोऽनुवाकः ॥ १९ ॥

---

( अथ प्रथमाष्टकेऽष्टमप्रपाठक एकोनविंशोऽनुवाकः । )

---

आग्नेयम् । अष्टाकपालमित्यष्टा—कपालम् । निरिति । वपति । हिरण्यम् । दक्षिणा । ऐन्द्रम् । एकादशकपालमित्येकादश—कपालम् । ऋषभः । दक्षिणा । वैश्वदेवमिति वैश्व—देवम् । चरुम् । पिशङ्गी । पष्ठौही । दक्षिणा । मैत्रावरुणीमिति मैत्रा—वरुणीम् । आमिक्षाम् । वशा । दक्षिणा । बार्हस्पत्यम् । चरुम् । शितिपृष्ठ इति शिति—पृष्ठः । दक्षिणा । आदित्याम् । मल्हाम् । गर्भिणीम् । एति । लभते । मारुतीम् । पृश्निम् । पष्ठौहीम् । अश्विभ्यामित्यश्वि—भ्याम् । पूष्णे । पुरोडाशम् । द्वादशकपालमिति द्वादश—कपालम् । निरिति ।

( राजसूयसंबन्धिनां दिशामवेष्टयः पशुद्वयं सात्यदूतहवींषि चेत्येतेषां विधिः )

वपति। सरस्वते। सत्यवाच इति सत्य—वाचे। चरुम्। सवित्रे। सत्यप्रसवायेति सत्य—प्रसवाय। पुरोडाशम्। द्वादशकपालमिति द्वादश—कपालम्। तिसृधन्वमिति तिसृ—धन्वम्। शुष्कदृतिरिति शुष्क—दृतिः। दक्षिणा (१)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टकेऽष्टमप्रपाठक एकोनविंशोऽनुवाकः॥१९॥

---

( अथ प्रथमकाण्डेऽष्टमप्रपाठक एकोनविंशोऽनुवाकः। )

---

अष्टादशे दशपेयोऽभिहितः। एकोनविंशे दिशामवेष्टयः पशुद्वयं सात्यदूतानां हवींषि च विधीयन्ते। तत्राऽऽदौ पञ्च हवींषि विधत्ते—

आग्नेयमष्टाकपालं निर्वपति हिरण्यं दक्षिणैन्द्रमेकादशकपालमृषभो दक्षिणा वैश्वदेवं चरुं पिशङ्गी पष्ठौही दक्षिणा मैत्रावरुणीमामिक्षां वशा दक्षिणा बार्हस्पत्यं चरुꣳ शितिपृष्ठो दक्षिणा, इति।

पिशङ्गी पिङ्गलवर्णा॥

दिग्व्यास्थापनप्रयुक्तोन्मादपरिहारेणावेष्टिविधिं प्रस्तौति—

"ईश्वरो वा एष दिशोऽनून्मदितोः। यं दिशोऽनु व्यास्थापयन्ति। दिशामवेष्टयो भवन्ति। दिक्ष्वेव प्रतितिष्ठत्यनुन्मादाय।" [ ब्रा० का० १ प्र० ८ अ० ३ ] इति।

यं यजमानमध्वर्युः प्रस्थापयत्येष यजमानो दिशोऽनुप्राप्य दिग्भ्रमेणोन्मदितोरुन्मत्तो भवितुमीश्वरः प्रभुर्भवति॥

विधिवाक्यावगतं देवतापञ्चकं प्रशंसति—

"पञ्च देवता यजति। पञ्च दिशः। दिक्ष्वेव प्रतितिष्ठति।" [ब्रा० का० १ प्र० ८ अ० ३ इति ॥

आग्नेयादीनां चतुर्णां मध्य एकैकयागादूर्ध्वं पञ्चमहविषि अभिघारणं विधत्ते—

"हविषो हविष इष्ट्वा बार्हस्पत्यमभिघारयति। यजमानदेवत्यो वै बृहस्पतिः। यजमानमेव तेजसा समर्धयति (१)।" [ब्रा० का० १ प्र० ८ अ० ३] इति।

यजमानस्य देवता उक्ता अग्न्यादयश्चतस्रस्ताभ्यो हितो यजमानदेवत्यः ॥
अवेष्टीर्विधाय द्विपशुयुक्तं पशुबन्धकर्म विधत्ते—

आदित्यां मल्हां गर्भिणीमा लभते
मारुतीं पृश्निं पष्ठौहीम्, इति।

अदितिर्देवता यस्याः सेत्यादित्या मल्हा मणिला गलस्तनयुक्तेत्यर्थः। पृश्निरल्पतनुः श्वेतवर्णा वा ॥

अदितेर्भूमित्वेन राष्ट्रत्वं मरुतां च वैश्यत्वमसकृदुक्तं तदेतदभिप्रेत्य प्रशंसति—

"आदित्यां मल्हां गर्भिणीमालभते। मारुतीं पृश्निं पष्ठौहीम्। विशं चैवास्मै राष्ट्रं च समीची दधाति।" [ब्रा० का० १ प्र० ८ अ० ३] इति।

करप्रदानेन विशः सम्यक्त्वं सस्यनिष्पादकत्वेन राष्ट्रस्य सम्यक्त्वम् ॥

पाठप्राप्तं क्रमं प्रशंसति—

"आदित्यया पूर्वया प्रचरति। मारुत्योत्तरया। राष्ट्र एव विशमनुबध्नाति।" [ब्रा० का० १ प्र० ८ अ० ३] इति ॥

आश्रावणस्य चोदकप्राप्तमुच्चध्वनित्वमादित्ययागेऽनूद्यापवदितुं विधत्ते—

"उच्चैरादित्याया आ श्रावयति। उपांशु मारुत्यै। तस्माद्राष्ट्रं विशमतिवदति।" [ब्रा० का० १ प्र० ८ अ० ३] इति।

यस्माद्राष्ट्ररूपायामादित्येष्टावुच्चध्वनिर्विड्रूपायां मारुतीष्टावुपांशुध्वनिस्तस्माल्लोकेऽपि राष्ट्रमुज्जित्य तत्पालको राजादिः सहस्रकरदानाय विशमतिवदति निर्भर्त्सयतीत्यर्थः ॥

पूर्वोक्तं पशुविशेषणं प्रशंसति—

"गर्भिण्यादित्या भवति (२)। इन्द्रियं वै गर्भः। राष्ट्रमेवेन्द्रियाव्यकः।

---

१ क. 'स्माच्चोदके'। घ. ङ. च. 'स्माच्चोदकोऽपि'।

( राजसूयसंबन्धिनां दिशामवेष्टयः पशुद्वयं सात्यदूतहवींषि चेत्येतेषां विधिः )
अगर्भा मारुती। विड्वै मरुतः। विशमेव निरिन्द्रियामकः। " [ ब्रा० का० १ प्र० ८ अ० ३ ] इति।

गर्भस्येन्द्रियकार्यत्वादिन्द्रियत्वं तेन गर्भेण राष्ट्रगता ब्राह्मणक्षत्रियप्रजा इन्द्रियुक्ता भवन्ति। मारुत्या गर्भराहित्येन वैश्या निरिन्द्रिया इतरापेक्षया क्षीणसामर्थ्या भवन्ति। ननु पष्ठौही बालगर्भिणीत्यसकृदुक्तं कथमगर्भा मारुतीतीहोच्यते। नायं दोषः। पञ्चवर्षाया अपि पष्ठौहीशब्दवाच्यत्वात्॥

पशुबन्धं विधाय सात्यदूतानां हवींषि विधत्ते—

अश्विभ्यां पूष्णे पुरोडाशं द्वादशकपालं निर्वपति सरस्वते सत्यवाचे चरु सवित्रे सत्यप्रसवाय पुरोडाशं द्वादशकपालं तिसृधन्व शुष्कदृतिर्दक्षिणा ॥, इति॥

पूष्णे चेति देवतासमुच्चयो द्रष्टव्यः। सत्यं वक्तीति सत्यवाक्तस्मै सरस्वन्नामकाय देवाय। सत्यप्रसवायामोघानुज्ञाय। तिसृभिरिषुभिर्युक्तं धनुस्तिसृधन्वं तत्प्रक्षेपाय निर्मिता शुष्कदृतिः। तदुभयमत्र देयम्॥

तेषु हविःषु प्रथमं प्रशंसति—

" देवासुराः संयत्ता आसन्। ते देवा अश्विनोः पूषन्वाचः सत्य संनिधाय। अनृतेनासुरानभ्यभवन्। तेऽश्विभ्यां पूष्णे पुरोडाशं द्वादशकपालं निरवपन्। ततो वै ते वाचः सत्यमवारुन्धत ( ३ )। यदश्विभ्यां पूष्णे पुरोडाशं द्वादशकपालं निर्वपति। अनृतेनैव भ्रातृव्यानभिभूय। वाचः सत्यमवरुन्धे। " [ ब्रा० का० १ प्र० ८ अ० ३ ] इति।

वाचः संबन्धि यत्सत्यमनृतपरित्यागेन भाषणं तत्सर्वं स्वकीयमश्विनोः पूष्णि च निक्षेपरूपेणावस्थाप्य युष्मान्न हनिष्याम इत्यनृतेन वचनेनासुराणामग्रे भाषां कृत्वा तद्विश्वासेन युद्धसंनाहं परित्यज्य कदाचिन्निद्राणानसुरान्निहतवन्तः। ततोऽनृतदोषपरिहारक्षमं पूर्वनिक्षिप्तं वाचः सत्यं ग्रहीतुमश्विनोः पूष्णः स्वोत्कोचरूपं पुरोडाशं निरुप्य तत्सत्यं स्वाधीनं कृतवन्तः। तद्वद्यजमानस्यापि द्रष्टव्यम्॥

द्वितीयं हविः प्रशंसति—

" सरस्वते सत्यवाचे चरुम्। पूर्वमेवोदितम्। उत्तरेणाभिगृणाति। " [ ब्रा० का० १ प्र० ८ अ० ३ इति॥

पूर्वं प्रथमहविःप्रशंसार्थं वाचः सत्यमवरुन्ध इति यदुक्तं तदेवोत्तरेण सत्यवाच इत्यनेन देवताविशेषणेन विधिवाक्यविशेषो गृणाति उच्चारयति। अतोऽनेनापि यागेन सत्यस्वीकार एव दृढो भवतीत्यभिप्रायः ॥

सत्यप्रसवायेत्येतद्विशेषणं प्रशंसति—

" सवित्रे सत्यप्रसवाय पुरोडाशं द्वादशकपालं प्रसूत्यै । " [ ब्रा० का० १ प्र० ८ अ० ३ ] इति ॥

विधत्ते—

" दूतान्प्रहिणोति । आविद एता भवन्ति । आविदमेवैनं गमयन्ति । अथो दूतेभ्य एव न छिद्यते । " [ ब्रा० का० १ प्र० ८ अ० ३ ] इति ।

प्रतिराजभ्यो दूतान्प्रेषयति । एते दूता आविदो भवन्त्येतदीयं शासनमा समन्ताद्वेदयन्ति ख्यापयन्तीत्याविदः । तेन दूतप्रेषणेनैनं यजमानमाविदं गमयन्ति आ समन्ताद्वेद्यते ख्याप्यत इत्यावित्कीर्तिस्तां प्रापयन्ति । किं चायं दूतेभ्यो न विच्छिद्यते सर्वतः प्रेषयितुं कदाचिद्दूता न लभ्यन्त इत्येवं विच्छेदो न भवति किं तु सर्वदा बहवो दूताः संनिहिता वर्तन्ते । दूतप्रेषणप्रकारः सूत्रकारेण स्पष्टीकृतः—" तान्यभ्यवस्नाय प्रतिराजभ्यः प्रहिणोत्यभ्यषिक्षि राजाऽभूवमित्यावेदयते " इति । तानि तिसृधन्वादीनि दक्षिणाद्रव्याण्यभ्यवस्नायाभित आक्रम्य स्नात्वा तानि प्रतिराजभ्यो दर्शयितुं दूतहस्ते दत्त्वा प्रेषयति । स च दूतो राज्ञ एतद्वचनं तेषामग्रे कथयति अभिषिक्तोऽस्मि युष्माकं सर्वेषां राजाऽभूवमिति ॥

दक्षिणां प्रशंसति—

" तिसृधन्वꣳ शुष्कदृतिर्दक्षिणा समृद्ध्यै ( ४ ) । " [ ब्रा० का० १ प्र० ८ अ० ३ ] इति ॥

अथ मीमांसा ।

द्वितीयाध्यायस्य तृतीयपादे चिन्तितम्—

" राजसूयं प्रकृत्येष्टिरवेष्ट्याख्या श्रुताऽत्र तु ।
विप्रक्षत्रियविड्भेदाद्धविषां व्यत्ययः क्रमे ॥
विप्रादेरनुवादः स्यात्प्रापणं वाऽनुवादगीः ।
व्यत्ययाय त्रयाणां च राजत्वात्प्राप्तिरस्ति हि ॥
न राज्ययोगाद्राजत्वं क्षत्रियत्वकृतं ततः ।
अप्राप्तप्रापणात्त ( णं त )स्मान्न रथंतरतुल्यता ॥ "

---

१ क. घ. ङ. च. 'वति प्रा' ।

राजसूयप्रकरणे काचिदिष्टिरवेष्टिनामिका श्रूयते—“ आग्नेयमष्टाकपालं निर्वपति हिरण्यं दक्षिणैन्द्रमेकादशकपालमृषभो दक्षिणा वैश्वदेवं चरुं पिशङ्गी पष्ठौही दक्षिणा मैत्रावरुणीमामिक्षां वशा दक्षिणा बार्हस्पत्यं चरुꣳ शितिपृष्ठो दक्षिणा ” इति। तस्यामेवेष्टौ हविषां क्रमव्यत्ययः श्रूयते—“ यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्यतो निधायाऽऽहुतिमाहुतिं हुत्वा तमभिघारयेत्, यदि राजन्य ऐन्द्रं, यदि वैश्यो वैश्वदेवम् ” इति। तत्र यथा पूर्वाधिकरण ऐन्द्रवायवाग्रत्वं व्यवस्थापयितुं यदिशब्दयुक्तेन वाक्येन रथंतरं निमित्तत्वेनानूदितम्, एवमत्रापि पञ्चमस्थाने श्रूयमाणं बार्हस्पत्यं चरुं मध्ये तृतीयस्थाने स्थापयितुं यदि ब्राह्मण इत्येतन्निमित्ततयाऽनूद्यते। द्वितीयस्थाने श्रुतस्यैन्द्रस्य तृतीयत्वेन स्थापयितुं यदि राजन्य इत्यनुवादः। वैश्वदेवस्य तृतीयस्थाने श्रवणात्तत्र मध्ये निधानविधिर्नित्यानुवादः। ननु राजकर्तृकराजसूये ब्राह्मणवैश्ययोः प्राप्त्यभावान्नानुवादो युक्त इति चेन्न, तयोरपि राज्ययोगेन राजशब्दार्थत्वादिति प्राप्ते ब्रूमः—राजशब्दः क्षत्रियजातौ रूढः, न तु राज्ययोगस्तस्य प्रवृत्तिनिमित्तम्, प्रत्युत राज्यशब्दस्य राजयोगः प्रवृत्तिनिमित्तम्। राज्ञः कर्मेति विगृह्य राजप्रातिपदिकस्योपरि प्रत्ययविशेषविधानात्। ब्राह्मणवैश्ययोः प्रजापालने राज्यशब्द औपचारिकः। तस्मादवेष्टौ ब्राह्मणवैश्यौ पूर्वमप्राप्तावनेन प्राप्येते। ननु राजसूयस्य राजकर्मत्वात्तदन्तर्गताया अवेष्टेरपि तथात्वात्तस्यां ब्राह्मणवैश्ययोः प्रापणमयुक्तमिति चेन्मैवम्। अन्तरवेष्टौ तदसंभवेऽपि राजसूयाद्बहिः प्रयुज्यमानायामवेष्टौ तत्संभवात्। तस्मादत्र ब्राह्मणादिकर्तृकं यथोक्तगुणविशिष्टं कर्मान्तरं विधीयत इति न रथंतरादितुल्यत्वम्। यदिशब्दस्तु निपातत्वादनर्थकोऽर्थान्तरवाची वेत्युन्नेयम्।

एकादशाध्यायस्य चतुर्थपादे चिन्तितम्—

“ अवेष्टावङ्गतन्त्रत्वं भेदो वा लिङ्गतोऽग्रिमः।
नोत्पत्तौ दक्षिणाभेदाल्लिङ्गं बाह्यप्रयोगगम्॥ ”

राजसूयप्रकरणे श्रूयते—“ दिशामवेष्टयो भवन्ति ” इति। ताश्चावेष्टय उत्पत्तिवाक्यैरेवमाम्नायन्ते—“ आग्नेयमष्टाकपालं निर्वपति हिरण्यं दक्षिणैन्द्रमेकादशकपालमृषभो दक्षिणा वैश्वदेवं चरुं पिशङ्गी पष्ठौही दक्षिणा मैत्रावरुणीमामिक्षां वशा दक्षिणा बार्हस्पत्यं चरुꣳ शितिपृष्ठो दक्षिणा ” इति। तास्ववेष्टिषु तन्त्रेणाङ्गानुष्ठानम्। कुतः। तल्लिङ्गात् “ यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्ये निधायाऽऽहुतिमाहुतिं हुत्वा तमभिघारयेद्यदि राजन्य ऐन्द्रं

यदि वैश्यो वैश्वदेवम्" इति । तत्र मध्ये निधानं प्रयोगैक्यनिमित्तमिति लिङ्गं, तदैक्याच्च तत्त्वमिति प्राप्ते ब्रूमः—उत्पत्तिगतेन दक्षिणाभेदेन प्रयोगभेदावगमादङ्गानां भेदः । लिङ्गं तु बहिष्प्रयोगविषयम् । अस्ति च प्रयोगद्वयम् । राजसूयप्रकरणपाठादन्तःप्रयोग एकः । न च प्रकरणादुत्कर्षः कर्तुं शक्यः । राजसूयाङ्गभूतदिग्व्यास्थापनानिमित्तोन्मादपरिहाररूपेणार्थवादेन तत्संबन्धावगमात् । तथा च श्रूयते—" ईश्वरो वा एष दिशोऽनून्मदितोः । यं दिशोऽनु व्यास्थापयन्ति । दिशामवेष्टयो भवन्ति । दिक्ष्वेव प्रतितिष्ठत्यनुन्मादाय ।" इति । राजसूयाद्बहिष्प्रयोगस्त्वेतयाऽन्नाद्यकामं याजयेदिति विहितः । न चासौ राजसूयान्तःपाती । यदि ब्राह्मण इत्यादिना वर्णत्रयसंयोगावगमात् । राजसूये च ब्राह्मणवैश्ययोरनधिकारात् । तस्माद्बहिष्प्रयोगे तत्त्वमन्तःप्रयोगे भेद इति निर्णयः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डेऽष्टमप्रपाठक एकोनविंशोऽनुवाकः ॥ १९ ॥

---

( अथ प्रथमाष्टकेऽष्टमप्रपाठके विंशोऽनुवाकः । )

---

आग्नेयमष्टाकपालं निर्वपति सौम्यं चरुꣳ सावित्रं द्वादशकपालं बार्हस्पत्यं चरुं त्वाष्ट्रमष्टाकपालं वैश्वानरं द्वादशकपालं दक्षिणो रथवाहनवाहो दक्षिणा सारस्वतं चरुं निर्वपति पौष्णं चरुं मैत्रं चरुं वारुणं चरुं क्षैत्रपत्यं चरुमादित्यं चरुमुत्तरो रथवाहनवाहो दक्षिणा ( १ ) ॥

( आग्नेयꣳ सौम्यं बार्हस्पत्यं चतुस्त्रिꣳशत् । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टकेऽष्टमप्रपाठके विंशोऽनुवाकः ॥ २० ॥

( अथ प्रथमाष्टकेऽष्टमप्रपाठके विंशोऽनुवाकः । )

आग्नेयम् । अष्टाकपालमित्यष्टा—कपालम् । निरिति । वपति । सौम्यम् । चरुम् । सावित्रम् । द्वादशकपालमिति द्वादश—कपालम् । बार्हस्पत्यम् । चरुम् । त्वाष्ट्रम् । अष्टाकपालमित्यष्टा—कपालम् । वैश्वानरम् । द्वादशकपालमिति द्वादश—कपालम् । दक्षिणः । रथवाहनवाह इति रथवाहन—वाहः । दक्षिणा । सारस्वतम् । चरुम् । निरिति । वपति । पौष्णम् । चरुम् । मैत्रम् । चरुम् । वारुणम् । चरुम् । क्षैत्रपत्यमिति क्षैत्र—पत्यम् । चरुम् । आदित्यम् । चरुम् । उत्तर इत्युत्—तरः । रथवाहनवाह इति रथवाहन—वाहः । दक्षिणा ( १ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टकेऽष्टमप्रपाठके विंशोऽनुवाकः ॥ २० ॥

( अथ प्रथमकाण्डेऽष्टमप्रपाठके विंशोऽनुवाकः । )

एकोनविंशे दिशामवेष्टयः पशुबन्धः सात्यदूतानां हवींषि चोक्तानि । अथ विंशे प्रयुजां हवींष्युच्यन्ते । तत्प्रकारः सूत्रकारेण दर्शितः—" अपराह्णे षड्भिः प्रयुजां हविर्भिर्यजत आग्नेयमष्टाकपालमिति दक्षिणो रथवाहनवाहो दक्षिणा श्वोभूते षड्भिरुत्तरो रथवाहनवाहः " इति ।

तान्येतानि हवींषि विधत्ते—

आग्नेयमष्टाकपालं निर्वपति सौम्यं चरुꣳ

सावित्रं द्वादशकपालं बार्हस्पत्यं चरुं त्वा-
ष्ट्रमष्टाकपालं वैश्वानरं द्वादशकपालं दक्षि-
णो रथवाहनवाहो दक्षिणा सारस्वतं
चरुं निर्वपति पौष्णं चरुं मैत्रं चरुं
वारुणं चरुं क्षैत्रपत्यं चरुमादित्यं चरु-
मुत्तरो रथवाहनवाहो दक्षिणा ॥, इति ॥

रथस्य वाहनं रथवाहनमन्यच्छकटं यस्मिञ्शकटे रथस्योपयोगाग्रमवस्थाप्यते। तस्य रथवाहनस्य शकटस्य वाहको दक्षिणो यो बलीवर्दोऽग्नौ पूर्वषट्के दातव्यः। एवमुत्तरषट्केऽपि योज्यम् ॥

अत्र पूर्वषट्कगतं प्रथमं हविः प्रशंसति—

“आग्नेयमष्टाकपालं निर्वपति । तस्माच्छिशिरे कुरुपञ्चालाः प्राञ्चो यान्ति।” [ ब्रा० का० १ प्र० ८ अ० ४ ] इति।

उपरिष्टात्परकीयपक्षा उपन्यस्यन्ते “ मासि मास्येतानि हवींषि निरुप्याणीत्याहुः ” इति, तत्पक्षानुसारेण फाल्गुनमासमारभ्य क्रमेणैकैकस्मिन्मास एकैकं हविर्निर्वपणीयम्। तथा हि—फाल्गुन्याः पौर्णमास्याः प्रागेव राजसूयमुपक्रम्य पवित्रनामकमग्निष्टोममानुमतादीनि चानुष्ठाय फाल्गुन्यां पौर्णमास्यामारभ्य वैश्वदेववरुणप्रघाससाकमेधांश्चतुर्षु चतुर्षु मासेषु निष्पाद्य द्वितीयस्यां फाल्गुन्यां पौर्णमास्यां शुनासीरीयेन्द्रतुरीयादिकमनुष्ठायोत्तरदिनेषु देविकादीनि यथोक्तक्रमेण रत्निनां हवींषि चानुष्ठाय फाल्गुनामावास्यायामभिषेचनीयार्थं दीक्षयित्वा तस्य दीक्षा वर्धनीयाः। तथा चाऽऽपस्तम्ब आह— “तथाऽभिषेचनीयस्योक्थ्यस्य दीक्षाः प्रवर्धयति यथा संवत्सरस्य दशरात्रेऽवशिष्टे दशपेयो भविष्यति ” इति। स च दशपेयः संवत्सरे दशरात्रोऽवशेष्य पञ्चम्यामुपक्रम्यते पञ्चभिर्दिनैर्निष्पाद्यत्वेन नवम्यां समाप्यते दशम्यां प्रातः सात्यदूतानि निरुप्यापराह्णे प्रयुजां हवींष्युपक्रमितव्यानि। तथा सत्याग्नेयस्य फाल्गुनरूपो द्वितीयः शिशिरमासः प्राप्यते। तस्मिञ्शिशिरे तन्निर्वापाच्छिशिरद्वारा तद्धविः स्तूयते। कुरुपञ्चालदेशवर्तिनो राजानः प्राच्येषु देशेषु सस्याभिवृद्धिमवगत्य दिग्विजयाय प्राञ्चः प्रयान्ति। यस्मादाग्नेययागकालः शिशिरः सस्याभिवृद्धिहेतुस्तस्मात्प्राञ्चो यान्तीत्येवं स्तुतिः ॥

---

१ क. घ. ङ. च. ‘त्वा ताश्च दी’।

( राजसूयविषयाणां प्रयुजां हविषामभिधानम् )

द्वितीयं हविः प्रशंसति—

" सौम्यं चरुम्। तस्माद्वसन्तं व्यवसायाऽऽदयन्ति। " [ ब्रा० का० १ प्र० ८ अ० ४ ] इति।

उक्तक्रमेण वासन्तिकयोः प्रथममासि सौम्यं चरुं निर्वपति। यस्मादस्य देवता सोमोऽत्र चरुणेज्यते तस्मात्प्रथमो वसन्तमास आगतोऽयमिति निश्चित्य प्राग्देशं जेतुं गता राजानस्तत्रत्यं धान्यं सर्वमुपहृत्य स्वसेनामादयन्ति वसन्तः समुपस्थितः सम्यक्पक्कं समृद्धमन्नं कामं भुञ्जतामिति वदन्तो हस्तेन सर्वां सेनां प्रेरयन्ति ॥

तृतीयं हविः प्रशंसति—

" सावित्रं द्वादशकपालम्। तस्मात्पुरस्ताद्यवानाꣳ सवित्रा विरुन्धते। " [ब्रा० का० १ प्र० ८ अ० ४ ] इति।

यस्माद्द्वितीये वसन्तमासे सावित्रयागः कृतस्तस्मात्पुरस्तात्पूर्वस्यां दिशि गता राजानः सवित्राऽनुज्ञाताः सन्तो यवानां विरुन्धते यवादीनि धान्यानि परकीयाणि विशेषेणावरुन्धते यथा कृषीवला न गृह्णन्ति तद्वदवरोधं कुर्वते ॥

चतुर्थं प्रशंसति—

" बार्हस्पत्यं चरुम्। सवित्रैव विरुध्य। ब्रह्मणा यवानादधते। " [ ब्रा० का० १ प्र० ८ अ० ४ ] इति।

यस्मात्प्रथमे ग्रीष्मे मासि बार्हस्पत्ययागः कृतस्तस्माद्ब्रह्मणा बृहस्पतिनाऽनुज्ञाताः सन्तो यवानादधते पूर्वं सवितृप्रसादाद्ये यवाः परदेशवर्तिभ्यः कृषीवलेभ्योऽवरुद्धास्तान्सर्वानानीय स्वगृहेषु स्थापयन्ति ॥

पञ्चमं प्रशंसति—

" त्वाष्ट्रमष्टाकपालम् ( १ )। रूपाण्येव तेन कुर्वते। " [ ब्रा० का० १ प्र० ८ अ० ४ ] इति।

यस्माद्द्वितीये ग्रीष्मे मासि त्वाष्ट्रयागः कृतस्तेन कारणेन रूपनिर्मात्रा त्वष्ट्राऽनुज्ञाताः सन्तो रूपाण्येव परकीयधान्यानां यथेष्टभोजनेन पुष्टिमन्त्येव शरीराणि कुर्वते ॥

षष्ठं प्रशंसति—

" वैश्वानरं द्वादशकपालम्। तस्माज्जघन्ये नैदाघे प्रत्यञ्चः कुरुपञ्चाला यान्ति। " [ ब्रा० का० १ प्र० ८अ० ४ ] इति।

यस्माद्वार्षिके प्रथमे मासि वैश्वानरयागः कृतस्तस्माद्वैश्वानरेणानुज्ञाता

जघन्ये नैदाघे द्वितीयस्मिन्ग्रीष्ममासेऽपगते सति वर्षर्तुप्रथममासे परकीयराष्ट्रं सर्वात्मना विनाश्य स्वदेशं प्रति प्रत्यङ्मुखाः कुरुपञ्चाला राजानो यान्ति। तदेतदुपलक्षणं सर्वेऽपि राजान उक्तरीत्या कुर्वन्तीति द्रष्टव्यम् ॥

उत्तरषट्कस्य प्रथमं हविः प्रशंसति—

"सारस्वतं चरुं निर्वपति। तस्मात्प्रावृषि सर्वा वाचो वदन्ति।" [ ब्रा० का० १ प्र० ८ अ० ४ ] इति।

यस्माद्द्वितीये वार्षिकमासि सारस्वतयागः कृतस्तस्मात्प्रावृषि वृष्ट्या संतुष्टाः कृषीवलास्त्वया कृषिकार्यं मया कृषिकार्यं क्रियते बीजानि सन्ति के वाऽनड्वाह इत्यादिकाः सर्वा वाचः परस्परं वदन्ति ॥

उत्तरहविःपञ्चकं प्रशंसति—

"पौष्णेन व्यवस्यन्ति। मैत्रेण कृषन्ते। वारुणेन विधृता आसते। क्षैत्रपत्येन पाचयन्ते। आदित्येनाऽऽदधते।" [ ब्रा० का० १ प्र० ८ अ० ४ ] इति।

शारदे प्रथमे मासि पौष्णयागस्य कृतत्वात्तेन पौष्णेन व्यवस्यन्ति पूषदेवताया अनुग्रहेण पुष्टिमानेतावतीं भूमिं कृषामीत्यादिनिश्चयं कुर्वन्ति। शारदे द्वितीये मासि मैत्रयागस्य कृतत्वान्मित्रदेवताया अनुग्रहेण निर्विघ्नाः कृषन्ति। हैमन्ते प्रथमे मासि वारुणयागस्य कृतत्वाद्वरुणदेवताया अनुग्रहेण गोमयादिकं प्रक्षिप्य नीरपूर्णं क्षेत्रं विशेषेण धृतवन्तः पोषयन्त आसते। हैमन्ते द्वितीये मासि क्षैत्रपत्ययागस्य कृतत्वात्क्षेत्रपतिदेवताया अनुग्रहेण सस्यमध्ये यथेष्टमुत्पन्नं निरर्थकं तृणादिकमुन्मूल्य फलपाकं संपादयन्ति। शैशिरे प्रथमे मास्यादित्ययागस्य कृतत्वाददितिदेवताया अनुग्रहेण पक्वानि धान्यानि स्वगृहेष्वादधते ॥

यथोक्तं प्रतिमासनिर्वापं परपक्षत्वेनोपन्यस्यति—

"मासि मास्येतानि हवीꣳषि निरुप्याणीत्याहुः। तेनैवर्तून्प्रयुङ्क्त इति।" [ ब्रा० का० १ प्र० ८ अ० ४ ] इति।

तेनैव प्रतिमासं पृथङ्निर्वापेणैव सर्वानृतून्प्रयुक्तवान्भवति ऋतुधर्मान्यथायथं प्रयुक्तवान्भवति। यस्मादृतुप्रयोगस्तेषु संपद्यते तस्मादेतानि प्रयुजां हवींषीत्यभिप्रायः ॥

तं पक्षं निराकृत्य पक्षान्तरं विधत्ते—

"अथो खल्वाहुः। कः संवत्सरं जीविष्यतीति। षडेव पूर्वेद्युर्निरुप्याणि। षडुत्तरेद्युः। तेनैवर्तून्प्रयुङ्क्ते। [ ब्रा० का० १ प्र० ८ अ० ४ ] इति।

( सौत्रामणीमन्त्रपशुहविषामभिधानम् )

आयुष्परिमाणस्यावगन्तुमशक्यत्वाद्धर्मस्य त्वरिता गतिरितिन्यायेन दिनद्वये निरूप्याणि। तथा सति षट्संख्यायाः षड्वा ऋतव इतिश्रुत्यनुसारेण ऋतुप्रयोगसिद्धिः। प्रयुजां हविष्ट्वमप्युपपन्नमित्यभिप्रायः॥

दक्षिणाद्वयं प्रशंसति—

"दक्षिणो रथवाहनवाहः पूर्वेषां दक्षिणा। उत्तर उत्तरेषाम्। संवत्सरस्यैवान्तौ युनक्ति। सुवर्गस्य लोकस्य समष्ट्यै (३)।" [ब्रा० का० १ प्र० ८ अ० ४] इति।

शकटयुगस्योभयोरन्तयोर्बद्धावेतावनड्वाहौ तयोर्दानेन संवत्सरस्योभयोर्मासषट्कयोरन्तौ संपादितवान्भवति, तेन स्वर्गः प्राप्यते॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डेऽष्टमप्रपाठके विंशोऽनुवाकः॥ २०॥

---

( अथ प्रथमाष्टकेऽष्टमप्रपाठक एकविंशोऽनुवाकः। )

---

स्वाद्वीं त्वां स्वादुना तीव्रां तीव्रेणामृताममृतेन सृजामि सꣳ सोमेन सोमोऽस्यश्विभ्यां पच्यस्व सरस्वत्यै पच्यस्वेन्द्राय सुत्राम्णे पच्यस्व पुनातु ते परिस्रुतꣳ सोमꣳ सूर्यस्य दुहिता। वारेण शश्वता तना। वायुः पूतः पवित्रेण प्रत्यङ्सोमो अतिद्रुतः। इन्द्रस्य युज्यः सखा। कुविदङ्ग यवमन्तो यवं चिद्यथा दान्त्यनुपूर्वं वियूय। इहेहैषां कृणुत भोजनानि (१) ये बर्हिषो नमोवृक्तिं न जग्मुः। आश्विनं धूम्रमा लभते सारस्वतं मेषमैन्द्रमृ-

षभमैन्द्रमेकादशकपालं निर्वपति सावित्रं द्वादशकपालं वारुणं दशकपालꣳ सोमप्रतीकाः पितरस्तृप्णुत वडबा दक्षिणा ( २ )॥

( भोजनानि षड्विꣳशतिश्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टकेऽष्टमप्रपाठक एकविंशोऽनुवाकः ॥ २१ ॥

---

( अथ प्रथमाष्टकेऽष्टमप्रपाठक एकविंशोऽनुवाकः । )

---

स्वाद्वीम् । त्वा । स्वादुना । तीव्राम् । तीव्रेण । अमृताम् । अमृतेन । सृजामि । समिति । सोमेन । सोमः । असि । अश्विभ्यामित्यश्वि—भ्याम् । पच्यस्व । सरस्वत्यै । पच्यस्व । इन्द्राय । सुत्राम्ण इति सु—त्राम्णे । पच्यस्व । पुनातु । ते । परिस्रुतमिति परि—स्रुतम् । सोमम् । सूर्यस्य । दुहिता । वारेण । शश्वता । तना । वायुः । पूतः । पवित्रेण । प्रत्यङ् । सोमः । अतिद्रुत इत्यति—द्रुतः । इन्द्रस्य । युज्यः । सखा । कुवित् । अङ्ग । यवमन्त इति यव—मन्तः । यवम् । चित् । यथा । दान्ति । अनुपूर्वमित्यनु—पूर्वम् । वियूयेति वि—यूय । इहेहेतीह—इह । एषाम् । कृणुत । भोजनानि ( १ ) । ये । बर्हिषः । नमोवृक्ति-

( सौत्रामणीमन्त्रपशुहविषामभिधानम् )

मिति नमः—वृक्तिम्। न। जग्मुः। आश्विनम्। धूम्रम्। एति। लभते। सारस्वतम्। मेषम्। ऐन्द्रम्। ऋषभम्। ऐन्द्रम्। एकादशकपालमित्येकादश—कपालम्। निरिति। वपति। सावित्रम्। द्वादशकपालमिति द्वादश—कपालम्। वारुणम्। दशकपालमिति दश—कपालम्। सोमप्रतीका इति सोम—प्रतीकाः। पितरः। तृप्णुत। वडबा। दक्षिणा (२)॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टकेऽष्टमप्रपाठक एकविंशोऽनुवाकः॥ २१॥

---

( अथ प्रथमकाण्डेऽष्टमप्रपाठक एकविंशोऽनुवाकः। )

विंशेऽनुवाके प्रयुजां हवींष्युक्तानि। एकविंशे सौत्रामण्या मन्त्राः पशवो हवींषि चोच्यन्ते।

कल्पः—"अग्रेण गार्हपत्यमवटं खात्वा तस्मिन्सुरायाः कल्पेन सुरां संदधाति परिस्रुद्भवति स्वाद्वीं त्वा स्वादुनेति शष्पैः सुरां संसृजति" इति।

पाठस्तु—

स्वाद्वीं त्वा स्वादुना तीव्रां तीव्रेणामृताममृतेन सृजामि सꣳ सोमेन सोमोऽस्यश्विभ्यां पच्यस्व सरस्वत्यै पच्यस्वेन्द्राय सुत्राम्णे पच्यस्व, इति।

हे सुरे स्वाद्वीं त्वा स्वादुना सोमेन संसृजामि। अत्र सोमशब्देन व्रीहियवाद्यङ्कुरं शष्पशब्दाभिधेयं बालतृणमु(णं चो)पलक्ष्यते। सोमस्यौषधिराजत्वेनोपलक्षयितुं शक्यते (त्वात्)। कीदृशीं त्वां तीव्रामुग्रगन्धाम्, अमृताममृतवदाप्यायनकारिणीम्। अत एव बलीवर्दाश्वादीनाप्यायितुं पाययन्ति। कीदृशेन सोमेन

तीव्रेण वमनाद्युपयुक्तौषधित्वेन तीव्रत्वम्। अमृतेन "अपाम सोमममृता अभूम" इत्यादिश्रुतेनामृतत्वप्रापकेन(ण) । एवंविधसोमात्मकेन शष्पेण संसृष्टत्वात्त्वं सोमोऽसीति। तस्माद्देवतात्रयार्थं त्वं पच्यस्व। सुत्राम्णे सुष्ठु रक्षकाय ॥

सक्तुप्रभृतिकद्रव्यविधानाय प्रस्तौति—

" इन्द्रस्य सुषुवाणस्य दशधेन्द्रियं वीर्यं पराऽपतत् । स यत्प्रथमं निरष्ठीवत्। तत्कलमभवत् । यद्द्वितीयम् । तद्बदरम् । यत्तृतीयम्। तत्कर्कन्धु। यन्नस्तः। स सिꣳहः। यदक्ष्योः ( १ )। स शार्दूलः । यत्कर्णयोः । स वृकः। य ऊर्ध्वः। स सोमः। याऽवाची। सा सुरा। "[ब्रा० का० १ प्र० ८ अ० ५ ] इति।

सोममभिषुतवत इन्द्रस्य सामर्थ्यं दशधा भिन्नं सत्पतितमभूत्। युक्तं चैतत् । अभिषवस्य वधरूपत्वात् । घ्नन्ति वा एतत्सोमं यदभिषुण्वन्तीति श्रुतेः । स चेन्द्रो वक्त्रेण त्रिवारं निष्ठीवनं कृतवान् । तेन द्रव्यत्रयमभूत्। प्रथमनिष्ठीवनेन कलं बालखर्जूरफलमभूत् । बदरं क्रमुकपरिमितं सूक्ष्मं बदरीफलम्। कर्कन्धु हरीतकीपरिमितं स्थूलं बदरिफलम् । तदेतत्त्रयं मुखच्छिद्रान्निःसृतम्। यत्तु वीर्यं नासिकाछिद्राभ्यां निःसृतं स सिंहमृगोऽभूत् । यच्चाक्षिच्छिद्राभ्यां निःसृतं स शार्दूलोऽभवत् । यदपि कर्णच्छिद्राभ्यां निर्गतं स वृक आरण्यश्वाऽभूत्। यो वीर्यभागो मूर्धच्छिद्रादूर्ध्वो निर्गतः स सोमोऽभवत् । या च वीर्यकला पायुगुह्याभ्यामवाची निर्गता सा सुराऽभवत् । यद्यपि कलादीन्यष्टैव द्रव्याणि तथाऽपि च्छिद्रदशकान्निर्गतत्वेन दशधा वीर्यपातोऽभिहितः ॥

द्रव्याणि विधत्ते—

" त्रयाः सक्तवो भवन्ति। इन्द्रियस्यावरुद्ध्यै। त्रयाणि लोमानि ( २ )। त्विषिमेवावरुन्धे। त्रयो ग्रहाः। वीर्यमेवावरुन्धे। " [ ब्रा० का० १ प्र० ८ अ० ५ ] इति।

त्रयास्त्रिविधाः सक्तवो भवेयुः कर्तव्या इत्यर्थः । कलैर्बदरैः कर्कन्धुभिश्च निष्पाद्यत्वात्त्रिविधाः । सक्तूनामिन्द्रियाभिवृद्धिहेतुत्वादिन्द्रियसंपत्तिः । त्रयाणि सिंहशार्दूलवृकाणां संबन्धीनि त्रीणि त्रिविधानि लोमानि संपाद्यानि। त्रयस्त्रिसंख्याका अश्विसरस्वतीसुत्रामदेवताका ग्रहा ग्रहीतव्याः । लोमभिस्त्विषिर्दीप्तिः संपद्यते ग्रहैश्च वीर्यम् ॥

सौत्रामण्या द्रव्यान्तरत्वशङ्कां वारयन्सक्तुत्रयादीनि द्रव्याणि प्रशंसति—

" नाम्ना दशमी। नव वै पुरुषे प्राणाः। नाभिर्दशमी । प्राणा इन्द्रियं

( सौत्रामणीमन्त्रपशुहविषामभिधानम् )

वीर्यम्। प्राणानेवेन्द्रियं वीर्यं यजमान आत्मन्धत्ते। " [ ब्रा० का० १ प्र० ८ अ० ५ ] इति।

सक्तुत्रयलोमत्रयग्रहत्रयैर्निष्पन्ना नवसंख्या। तत्र सौत्रामणीदशमीत्वं नामरूपेणैव न तु द्रव्यरूपेण यथोक्तद्रव्यनिष्पाद्यकर्मसंघनामत्वात्। पुरुषेऽपि मुख्यच्छिद्राणि शिरसि सप्ताधो द्वे इति नवसंख्याकानि प्राणाधारत्वात्प्राणा इत्युच्यन्ते। नाभिस्तु दशमी। सा च छिद्राभासरूपत्वान्न मुख्यच्छिद्रम्। यथा सौत्रामणी न द्रव्यं तद्वत्। नवच्छिद्रगताश्च प्राणा इन्द्रियशब्देन वीर्यशब्देन चोच्यन्ते। अतोऽत्र द्रव्यगतया नवसंख्यया प्राणानिन्द्रियं वीर्यं च यजमाने संपादयति॥

विधत्ते—

" सीसेन क्लीबाच्छष्पाणि क्रीणाति। न वा एतदयो न हिरण्यम् ( ३ )। यत्सीसम्। न स्त्री न पुमान्। यत्क्लीबः। न सोमो न सुरा। यत्सौत्रामणी समृद्ध्यै। " [ ब्रा० का० १ प्र० ८ अ० ५ ] इति।

सीसक्लीबशष्पाणामन्तरालवर्तित्वं साम्यम्। सीसमयसोऽधिकं हिरण्यात्तु न्यूनम्। क्लीबोऽपि स्त्रिया अधिकः पुरुषात्तु न्यूनः। शष्पाण्यपि सुराजनकत्वात्सुराया अधिकानि सोमवत्पूतत्वाभावात्ततो न्यूनानि। तान्येतानि सौत्रामणीहेतुतया तच्छब्देन निर्दिश्यन्ते॥

सोमेन संसृजामीत्यस्याभिप्रायं दर्शयति—

" स्वाद्वीं त्वा स्वादुनेत्याह। सोममेवैनां करोति। " [ ब्रा० का० १ प्र० ८ अ० ५ ] इति॥

देवतार्थपाकस्य प्रसिद्धतां दर्शयति—

" सोमोऽस्यश्विभ्यां पच्यस्व सरस्वत्यै पच्यस्वेन्द्राय सुत्राम्णे पच्यस्वेत्याह। एताभ्यो ह्येषा देवताभ्यः पच्यते। " [ ब्रा० का० १ प्र० ८ अ० ५ ] इति॥

शष्पैः संसृष्टायास्त्रिषु दिनेषु तथैव निवासं विधत्ते—

" तिस्रः सꣳसृष्टा वसति (४)। तिस्रो हि रात्रीः क्रीतः सोमो वसति। " [ ब्रा० का० १ प्र० ८ अ० ५ ] इति।

क्रीतसोमस्य त्रिरात्रवासोऽन्यत्र प्रसिद्धः। तथा च श्रूयते—" तꣳ सोममाह्रियमाणं गन्धर्वो विश्वावसुः पर्यमुष्णात्स तिस्रो रात्रीः परिमुषितोऽवसत्तस्मात्तिस्रो रात्रीः क्रीतः सोमो वसति " इति॥

१ ख. घ. ङ. च. न च च्छि°।

कल्पः—" पुनातु ते परिस्रुतमिति वालमयेन पवित्रेण सुरां पावयति " इति ।

यथा शुद्ध्यर्थं जलं वस्त्रेण गालितं भवति तद्वदियं वालपवित्रेण गालिता कार्या ।

पाठस्तु—

पुनातु ते परिस्रुतꣳ सोमꣳ सूर्यस्य
दुहिता । वारेण शश्वता तना । वायुः
पूतः पवित्रेण प्रत्यङ्ङ् सोमो अति-
द्रुतः । इन्द्रस्य युज्यः सखा । , इति ।

हे इन्द्र ते त्वदर्थं सूर्यस्य दुहिता सुरां पावयतु सूर्यसंबन्धिनी दुहितृस्थानीया दीप्तिः परिस्रुतं द्रवीभूतं सोमं पूर्वमन्त्रेण सोमीकृतं सुराद्रव्यं वारेण वालजन्येन पवित्रेण पुनातु शोधयतु । कीदृशेन वारेण, शश्वता शाश्वतेन दृढेन, तना विस्तीर्णेन । पवित्रेणानेन पूतः सोमो वायुवच्छीघ्रगामी भूत्वा प्रत्यङ्ङधोवर्ती पात्राभिमुखः सन्नभितः शीघ्रं द्रुतोऽभवत् । कीदृशः सोमः, इन्द्रस्य युज्यो योग्यः सखा ॥

विधत्ते—

" पुनातु ते परिस्रुतमिति यजुषा पुनाति व्यावृत्त्यै । " [ ब्रा० का० १ प्र० ८ अ० ५ ] इति ।

लौकिकजलादिकं न मन्त्रेणाऽऽविलं पुनन्तीति ततो व्यावृत्तिर्भवति ॥

साधनं विधत्ते—

" पवित्रेण पुनाति । पवित्रेण हि सोमं पुनन्ति । " [ ब्रा० का० १ प्र० ८ अ० ५ ] इति ।

दशापवित्रेण सोमस्य शोधनं प्रसिद्धम् ॥

सोमसाम्याय वालस्वीकार इति दर्शयति—

" वारेण शश्वता तनेत्याह । वारेण हि सोमं पुनन्ति । " [ ब्रा० का० १ प्र० ८ अ० ५ ] इति ।

वालेन सोमशोधनं सोमप्रकरणे सूत्रकारेण दर्शितम्—" शुक्लामूर्णास्तुकां यजमानः प्रयच्छति तां स काले दशापवित्रस्य नाभिं कुरुते " इति ॥

१ क. घ. ङ. च. 'सिः सु'। २ क. 'मानाय प्र'।

(सौत्रामणीमन्त्रपशुहविषामभिधानम्)

वायुः पूत इत्यस्या ऋचः प्रयोगं पुरुषभेदेन व्यवस्थापयति—

"वायुः पूतः पवित्रेणेति नैतया पुनीयात्। व्यृद्धा ह्येषा। अतिपवितस्यैतया पुनीयात्।" [ब्रा० का० १ प्र० ८ अ० ५] इति।

द्विविधो हि सोमपाः सोमवामी जीर्णसोमश्चेति। तत्र सोमवामिनः सोमो बहिर्निर्गत इति प्राङ्सोमो अतिद्रुत इत्येतादृशः पाठस्तस्मिन्युक्तः प्रत्यङ्ङि-त्यस्यार्थस्य तस्मिन्नभावात्, तं प्रत्येषा व्यृद्धा समृद्धिहीना। यस्त्वतिपवितो जीर्णसोमस्तं प्रत्यर्थसद्भावात्समृद्धैव। तदेतत्सूत्रकारेण विशदीकृतम्—"प्राङ्-सोमो अतिद्रुत इति सोमवामिनः प्रत्यङ्सोमो अतिद्रुत इति सोमाति-पवितस्य" इति॥

कल्पः—"अपरस्मिन्खरे सुराग्रहान्गृह्णाति कुविदङ्गेति" इति।

पाठस्तु—

कुविदङ्ग यवमन्तो यवं चिद्यथा
दान्त्यनुपूर्वं वियूय। इहेहैषां
कृणुत भोजनानि ये बर्हिषो
नमोवृक्तिं न जग्मुः।, इति।

अङ्गशब्दः प्रियसंबोधनवाची। हे प्रिया अश्विसरस्वतीसुत्रामेन्द्रा ये यज्वानो बर्हिषो यागस्य नमोवृक्तिं नमस्कारविनाशं न जग्मुर्न प्रापुः किं त्वत्यन्तश्रद्धालवोऽनुतिष्ठन्ति तेषामेषां यज्वनां हविर्विषयाणि भोजनानीहेह कृणुत। ग्रहणपात्राणामनेकत्वाद्वीप्सा। तत्रोपमानमुच्यते। कुविच्छब्दो बह्व-र्थवाची। चिच्छब्दः समुच्चये। यथा लोके यवमन्तो यवादिधान्योपेताः कृषिकाः कुविद्यवंचिद्बहुलं यवमन्यानि च गोधूमप्रियंग्वादिधान्यान्यनुपूर्वं तत्परीक्षाक्रमेण वियूयेदं पक्वमिदमपक्वमिति पृथक्कृत्य दान्ति लुनन्ति तथा यूयमपि नमस्कारादिरहितो नास्तिकोऽयं यज्वा श्रद्धालुरयं यज्वेति विविच्य श्रद्धालोर्हवींषि भुङ्ध्वम्॥

विधत्ते—

"कुविदङ्गेत्यनिरुक्तया प्राजापत्यया गृह्णाति (५)। अनिरुक्तः प्रजा-पतिः। प्रजापतेराप्त्यै।" [ब्रा० का० १ प्र० ८ अ० ५] इति।

अस्यामृचि प्रस्तुतान्यश्विसरस्वत्यादिनामानि न श्रुतानि किं त्वङ्गेति साधारणशब्दः श्रुतस्तस्मादत्रेयं देवतेतिविशेषनिरुक्तवर्जितेयमृक्। प्रजाप-तिर्जगदीश्वरोऽपि मूर्तिरहितत्वादनिरुक्तः। अत एव जगत्कारणप्रतिपादनपरे

नासदासीयसूक्ते श्रूयते—"को अद्धा वेद क इह प्रवोचत्। कुत आजाता कुत इयं विसृष्टिः" इति। "यो अस्याध्यक्षः परमे व्योमन्। सो अङ्ग वेद यदि वा न वेद" इति च। अतो निरुक्तराहित्यसाम्यादस्याः प्राजापत्यत्वम् ॥

अत्र ग्रहाणां भिन्नत्वेन मन्त्रान्तरप्रसक्तिं वारयितुं विधत्ते—

" एकयर्चा गृह्णाति। एकधैव यजमाने वीर्यं दधाति।" [ ब्रा० का० १ प्र० ८ अ० ५ ] इति ॥

मन्त्रानुक्त्वा पशून्विधत्ते—

आश्विनं धूम्रमा लभते सार-
स्वतं मेषमैन्द्रमृषभम्, इति।

मलिनश्वैत्यवर्णोपेतो धूम्रः ॥

अत्रत्या देवताः प्रशंसति—

" आश्विनं धूम्रमालभते। अश्विनौ वै देवानां भिषजौ। ताभ्यामेवास्मै भेषजं करोति। सारस्वतं मेषम्। वाग्वै सरस्वती। वाचैवैनं भिषज्यति। ऐन्द्रमृषभꣳ सेन्द्रत्वाय (६)।" [ ब्रा० का० १ प्र० ८ अ० ५ ] इति ॥

पशून्विधाय पुरोडाशान्विधत्ते—

ऐन्द्रमेकादशकपालं निर्वपति सावित्रं द्वाद-
शकपालं वारुणं दशकपालम्, इति ॥

सोमप्रतीकाः पितरस्तृप्णुत—

कल्पः—" दक्षिणेऽग्नौ शतातृण्णां स्थालीं प्रबद्धां धारयति तस्या बिल उदीचीनदशं पवित्रं वितत्य यन्मे मनः परागतमिति तस्मिञ्शतमानं हिरण्यं निधाय सोमप्रतीकाः पितरस्तृप्णुतेति तस्मिन्सुराशेषमानयति" इति।

सोमप्रतीकाः सोमप्रमुखाः ॥

दक्षिणां विधत्ते—

वडबा दक्षिणा ॥, इति ॥

अश्वस्य योषिद्वडवेति ॥

पशुभेदेन प्रसक्तं यूपभेदमपोह्य[1] यूपैक्यं विधत्ते—

" यत्त्रिषु यूपेष्वालभेत। बहिर्धाऽस्मादिन्द्रियं वीर्यं दध्यात्। भ्रातृव्यमस्मै जनयेत्। एकयूप आलभते। एकधैवास्मिन्निन्द्रियं वीर्यं दधाति। नास्मै भ्रातृव्यं जनयति।" [ ब्रा० का० १ प्र० ८ अ० ६ ] इति।

---

१ ख. 'पोह्य'।

( सौत्रामणीमन्त्रपशुहविषामभिधानम् )

अस्माद्बहिर्वा यजमानशरीराद्बहिर्देशे ॥

प्रकृतौ यद्देवत्यः पशुस्तद्देवत्यः पुरोडाश इत्यभिधानादत्रापि तत्प्राप्तौ निषेधति—

" नैतेषां पशूनां पुरोडाशा भवन्ति। ग्रहपुरोडाशा ह्येते। " [ ब्रा० का० १ प्र० ८ अ० ६ ] इति।

ग्रहा एवात्र पुरोडाशस्थानीया इत्यर्थः ॥

यदुक्तं सूत्रकारेण " सर्वेषामेका पुरोरुगेका पुरोनुवाक्यैकः प्रैष एका याज्या " इति, तत्र त्रयाणां ग्रहाणां याज्यानुवाक्ये विधत्ते—

" युवꣳ सुराममश्विनेति सर्वदेवत्ये याज्यानुवाक्ये भवतः। सर्वा एव देवताः प्रीणाति ( १ )। " [ ब्रा० का० १ प्र० ८ अ० ६ ] इति।

युवꣳ सुराममित्यादृग्द्वयं ब्राह्मणग्रन्थे प्रथमकाण्डस्य चतुर्थप्रपाठके द्वितीयानुवाके समाम्नातमतस्तत्रैव व्याख्यास्यते। तत्र चाश्विशब्दो यथा श्रुतस्तथैवेन्द्रावतमित्रीन्द्रशब्दोऽपि श्रुतः। सरस्वती त्वेति सरस्वतीशब्दोऽपि श्रुतः। ततोऽनयोः सर्वदेवत्यत्वं प्रकृतानां सर्वेषां देवानां प्रतीयमानत्वात् ॥

विधत्ते—

" ब्राह्मणं परिक्रीणीयादुच्छेपणस्य पातारम्। ब्राह्मणो ह्याहुत्या उच्छेपणस्य पाता। " [ ब्रा० का० १ प्र० ८ अ० ६ ] इति।

हुतायाः सुरायाः शेष उच्छेपणम् ॥

तत्रैवानुकल्पं विधत्ते—

" यदि ब्राह्मणं न विन्देत्। वल्मीकवपायामवनयेत्। सैव ततः प्रायश्चित्तिः। " [ ब्रा० का० १ प्र० ८ अ० ६ ] इति।

येयमवनयनक्रिया सैव ततस्तत्र ब्राह्मणपानाभाववैकल्ये प्रायश्चित्तिः ॥

पशूनां पुरोडाशानां च विलक्षणदेवत्यत्वं प्रशंसति—

" यद्वै सौत्रामण्यै व्यृद्धम्। तदस्यै समृद्धम्। नानादेवत्याः पशवश्च पुरोडाशाश्च भवन्ति समृद्ध्यै। " [ ब्रा० का० १ प्र० ८ अ० ६ ] इति।

कर्मान्तरे पशोः पुरोडाशस्य चैकदेवत्यत्वविधानाद्भिन्नदेवत्यत्वं समृद्धिहीनं भवति। यदेवान्यत्र समृद्धिहीनं भिन्नदेवत्यत्वं सौत्रामण्यां क्रियते तद्भिन्नदेवत्यत्वं सौत्रामण्यामस्यां वाचनिकत्वात्समृद्धं संपद्यते। तस्मादत्र समृद्ध्यै पशवश्च पुरोडाशाश्च भिन्नदेवत्या भवन्ति ॥

ऐन्द्रस्य पशोः पुरोडाशस्य च नैरन्तर्यं प्रशंसति—

"ऐन्द्रः पशूनामुत्तमो भवति । ऐन्द्रः पुरोडाशानां प्रथमः ( २ )। इन्द्रिये एवास्मै समीची दधाति ।" [ ब्रा० का० १ प्र० ८ अ० ६ ] इति ।

ऐन्द्रमृषभामिति पशुविधीनामन्ते पठितं, तदनन्तरमेवैन्द्रमेकादशकपालं निर्वपतीति पुरोडाशविधीनामादौ पठितं, तस्मादैन्द्रयोर्नैरन्तर्यादस्य यजमानस्य दक्षिणवामभागस्थे द्वे अपीन्द्रिये सम्यक्स्थापिते भवतः ॥

प्रकृतौ पशूनामङ्गयागात्पूर्वं पुरोडाशप्रचारो विहितः । अत्र त्वङ्गयागादूर्ध्वं तदीयेभ्योऽनुयाजेभ्यः पुरा, तं प्रचारं विधत्ते—

"पुरस्तादनूयाजानां पुरोडाशैः प्रचरति । पशवो वै पुरोडाशाः । पशूनेवावरुन्धे ।" [ ब्रा० का० १ प्र० ८ अ० ६ ] इति ।

पशुप्रयोगमध्ये प्रचारात्पुरोडाशानां पशुत्वम् ॥

पुरोडाशदेवताः प्रशंसति—

"ऐन्द्रमेकादशकपालं निर्वपति । इन्द्रियमेवावरुन्धे । सावित्रं द्वादशकपालं प्रसूत्यै । वारुणं दशकपालम् । अन्तत एव वरुणमवयजते ।" [ ब्रा० का० १प्र० ८ अ० ६ ] इति ॥

वडवायाः सौत्रामण्याश्च साम्येन दक्षिणां प्रशंसति—

"वडबा दक्षिणा ( ३ ) । उत वा एषाऽश्वं सूते । उताश्वतरम् । उत सोम उत सुरा । यत्सौत्रामणी समृद्ध्यै ।" [ब्रा० का०१प्र०८ अ०६] इति ।

एषा वडबा यदश्वमश्वतरं वोभयं प्रसूते । अश्वगर्दभजातिद्वयसंगमादुत्पन्नोऽश्वतरः । या सौत्रामणी साऽपि तद्वत्सोमः सुरा वेत्युभयरूपा भवति । अतः सदृशदक्षिणा समृद्धिकरी ॥

सोमवामिन उक्तास्त्रय एव पशवः, सोमातिपवितस्य तु विशेषं विधत्ते—

"बार्हस्पत्यं पशुं चतुर्थमतिपवितस्याऽऽलभते । ब्रह्म वै देवानां बृहस्पतिः। ब्रह्मणैव यज्ञस्य व्यृद्धमपिवपति ।" [ ब्रा० का० १ प्र० ८ अ० ६ ] इति ।

व्यृद्धं विकलाङ्गमपिवपति समृद्धं करोति ॥

पूर्वपशुवत्समानदेवत्यपुरोडाशाभावप्रसक्तौ प्रकृतिवत्तादृशस्य पुरोडाशस्य प्रतिप्रसवं विधत्ते—

"पुरोडाशवानेष पशुर्भवति । न ह्येतस्य ग्रहं गृह्णन्ति ।" [ ब्रा० का० १ प्र० ८ अ० ६ ] इति ।

पूर्वेषां पशूनां समानदेवत्या ग्रहा एव पुरोडाशस्थानीया इत्युक्तम् । अत्र तु ग्रहाभावात्पुरोडाशः कार्यः ॥

( सौत्रामणीमन्त्रपशुहविषामभिधानम् )

विधत्ते—

"सोमप्रतीकाः पितरस्तृप्णुतेति शतातृण्णायाꣳ समवनयति ( ४ )। शतायुः पुरुषः शतेन्द्रियः। आयुष्येवेन्द्रिये प्रतितिष्ठति।" [ ब्रा० का० १ प्र० ८ अ० ६ ] इति।

शतातृण्णा शतच्छिद्रा स्थाली ॥

दक्षिणाग्नेरुपरि शतातृण्णायां( या ) बन्धनं यत्सूत्रकारेणोक्तं तदिदं विधत्ते—

"दक्षिणेऽग्नौ जुहोति। पापवस्यसस्य व्यावृत्त्यै।" [ ब्रा० का० १ प्र० ८ अ० ६ ] इति।

पापवस्यसं पापेन धनवत्तरत्वम्। निषिद्धां हि सुरां स्वकीयद्रव्यत्वेन संपादयन्पुरुषः पापाचरणेन धनवत्तरो भवति। तस्य व्यावृत्तिः कर्तव्या। सोमाज्यादिवदाहवनीय एव तद्धोमे व्यावृत्तिर्न भवेत्। तस्माद्दक्षिणेऽग्नौ जुहुयात् ॥

शतातृण्णायां हिरण्यस्थापनं विधत्ते—

"हिरण्यमन्तरा धारयति। पूतामेवैनां जुहोति।" [ ब्रा० का० १ प्र० ८ अ० ६ ] इति।

अन्तरा दक्षिणाग्निसुरयोर्मध्ये। सा च सुरा हिरण्यस्पर्शेन पूता भवति ॥

परिमाणं विधत्ते—

"शतमानं भवति। शतायुः पुरुषः शतेन्द्रियः। आयुष्येवेन्द्रिये प्रतितिष्ठति।" [ ब्रा० का० १ प्र० ८ अ० ६ ] इति ॥

दक्षिणाग्नौ शतातृण्णायाः स्थापनं विधत्ते—

"यत्रैव शतातृण्णां धारयति ( ५ )। तन्निदधाति प्रतिष्ठित्यै।" [ ब्रा० का० १ प्र० ८ अ० ६ ] इति ॥

त्वꣳ सोम प्रचिकित इत्यादिभिरुपस्थानं विधत्ते—

"पितॄन्वा एतस्येन्द्रियं वीर्यं गच्छति। यꣳ सोमोऽतिपवते। पितॄणां याज्यानुवाक्याभिरुपतिष्ठते। यदेवास्य पितॄनिन्द्रियं वीर्यं गच्छति। तदेवावरुन्धे।" [ ब्रा० का० १ प्र० ८ अ० ६ ] इति।

यं यजमानं पीतः सोमोऽतिशयेन शोधयति स्वयं तदुदरे जीर्णत्वादेतस्येन्द्रियमिति पूर्वत्रान्वयः ॥

संख्यां विधत्ते—

" तिसृभिरुपतिष्ठते । तृतीये वा इतो लोके पितरः । तानेव प्रीणाति । " [ ब्रा० का० १ प्र० ८ अ० ६ ] इति ।

तदेतदापस्तम्बेन स्पष्टीकृतम्—" स्रवन्ति सौमीभिः पितृमतीभिस्तिसृभिस्तिसृभिरुत्तरोत्तराभिरुपतिष्ठन्ते त्वꣳ सोम प्रचिकित इत्येताः समाम्नाता भवन्ति पुरस्तादध्वर्युर्दक्षिणतो ब्रह्मा पश्चाद्धोता " इति । त्वꣳ सोम प्रचिकितस्त्वया हि नः पितरस्त्वꣳ सोम पितृभिरित्यध्वर्योरेतास्तिस्रः । बर्हिषदः पितर आऽहं पितॄनुपहूताः पितर इति ब्रह्मण एतास्तिस्रः । अग्निष्वात्ताः पितरो ये अग्निष्वात्ता वान्यायै दुग्ध इति होतुरेतास्तिस्रः ॥

तानेतानुपस्थातॄन्विधत्ते—

" अथो त्रीणि वै यज्ञस्येन्द्रियाणि । अध्वर्युर्होता ब्रह्मा । त उपतिष्ठन्ते । यान्येव यज्ञस्येन्द्रियाणि । तैरेवास्मै भेषजं करोति (६) । " [ ब्रा० का० १ प्र० ८ अ० ६ ] इति ।

इन्द्रियवद्व्यवहारनिर्वाहकत्वादृत्विजां यज्ञेन्द्रियत्वम् ॥

तदेवमेतदन्तेनानुब्राह्मणेन मन्त्रकाण्डोक्ताः प्रधानकर्मविधयस्तन्मन्त्राश्च व्याख्याताः । अथानुब्राह्मणशेषेण व्याख्येयमन्त्रकाण्डनिरपेक्षो राजसूयप्रयोगोऽभिधीयते ।

तत्राऽऽरम्भकाले कर्तव्यं पवित्राख्यं सोमयागं विधत्ते—

" अग्निष्टोममग्र आहरति । यज्ञमुखं वा अग्निष्टोमः । यज्ञमुखमेवाऽऽरभ्य सवमाक्रमते । " [ ब्रा० का० १ प्र० ८ अ० ७ ] इति ।

सोमयागानां सर्वेषां प्रकृतित्वेनाग्निष्टोमस्य यज्ञमुखत्वम् । सवमभिषेकयुक्तं राजसूयमाक्रमते प्राप्नोति ॥

विधत्ते—

" अथैषोऽभिषेचनीयश्चतुस्त्रिꣳशपवमानो भवति । त्रयस्त्रिꣳशद्वै देवताः । ता एवाऽऽप्नोति । प्रजापतिश्चतुस्त्रिꣳशः । तमेवाऽऽप्नोति । " [ ब्रा० का० १ प्र० ८ अ० ७ ] इति ।

अथाग्निष्टोमादूर्ध्वं न तु तदनन्तरम् । आनुमतादिभी रत्निहविःपर्यन्तैर्यागैरग्निष्टोमाभिषेचनीययोर्व्यवहितत्वात् । प्रकृतौ बहिष्पवमानमाध्यंदिनपवमानार्भवपवमानानां क्रमेण त्रिवृत्पञ्चदशसप्तदशस्तोमा विहिताः । अत्र तु तान्परित्यज्य चतुस्त्रिंशस्तोमः प्रयोक्तव्यः । समिधमातिष्ठेत्यनुवाके त्रयस्त्रिंशस्तोमविधायकं ब्राह्मणमुदाहृतम् । तत्रैवावस्थितिविशेषेणैका स्तोत्रीयाम-

१ क. °वन्त्सौ सौ° । २ क. घ. ङ. च. °ष्ठते त्वꣳ ।

धिकां संपाद्य चतुस्त्रिंशस्तोमं कुर्यात्। स चाऽऽवृत्तिविशेषः सामसूत्रे द्रष्टव्यः। ये देवा दिव्येकादश स्थेतिमन्त्रे त्रयस्त्रिंशद्देवा उक्ताः। यद्वा वाजसनेयिभिः शाकल्यब्राह्मणेऽधीयते—"अष्टौ वसव एकादश रुद्रा द्वादशाऽऽदित्यास्त एकत्रिंशदिन्द्रश्चैव प्रजापतिश्च त्रयस्त्रिंशौ" इति। पूर्वोक्ताः कर्मभुज एताः सूपास्या इति तत्तत्प्रकरणादवगम्यते। एतासां त्रयस्त्रिंशद्देवतानां प्रजारूपाणां पालकोऽन्यः प्रजापतिश्चतुस्त्रिंशः। यथोक्तस्तोमे तु यथोक्तसर्वदेवताप्राप्तिर्भवति ॥

पवमानशब्देन प्रथमस्य बहिष्पवमानस्यैव सहसा बुद्धिस्थत्वात्तत्रैवायं चतुस्त्रिंशस्तोम इति भ्रमं व्युदसितुं त्रिष्वपि पवमानेष्वेतं स्तोमं विधत्ते—

"संशर एष स्तोमानामयथापूर्वम्। यद्विषमाः स्तोमाः (१)। एतावान्वै यज्ञः। यावान्पवमानाः। अन्तःश्लेषणं त्वा अन्यत्। यत्समाः पवमानाः। तेनासंशरः। तेन यथापूर्वम्।" [ब्रा० का० १ प्र० ८ अ० ७] इति।

एतस्मिन्पवमाने चतुस्त्रिंशस्तोमं कृत्वेतयोस्तदकरणे सति यद्वैषम्यं भवति स एष स्तोमानां संशरः सम्यग्गिमनं भवति। द्वितीयतृतीयपवमानयोश्चोदकप्राप्तौ यौ पञ्चदशसप्तदशस्तोमौ तयोः प्रथमपवमानप्रयुक्ताच्चतुस्त्रिंशस्तोमान्न्यूनत्वेन हिंसैव भवति। किं चायथापूर्वत्वं परो दोषः। स्तोमेषु दुष्टेषु यज्ञस्य किमायातमिति न शङ्कनीयं, पवमानस्तोमदोषस्य यज्ञभ्रंशे पर्यवसानात्। एते त्रयः पवमाना इति यावानेतावानेव मुख्यो यज्ञः। अन्यत्सर्वं यज्ञस्यान्तःश्लेषणम्। यथा भित्तिदार्ढ्यायान्तर्दृढकाष्ठं पाषाणो वा प्रक्षिप्यते तद्वद्यज्ञस्यान्यदङ्गजातं संपूर्त्यर्थमत्र क्रियते न तु मुख्यस्वरूपम्। त्रयाणामपि पवमानानां चतुस्त्रिंशस्तोमे सति पूर्वोक्तदोषद्वयं न भवति ॥

अभिषेचनीयस्योक्थ्यसंस्थारूपत्वं विधत्ते—

"आत्मनैवाग्निष्टोमेनर्ध्नोति। आत्मना पुण्यो भवति। प्रजा वा उक्थानि। पशव उक्थानि। यदुक्थ्यो भवत्यनुसंतत्यै (२)।" [ब्रा० का० १ प्र० ८ अ० ७] इति।

अग्निष्टोमे द्वादशैव शस्त्राणि। उक्थ्ये तु तेभ्य ऊर्ध्वं त्रीणि शस्त्राणि। तथा सति द्वादशशस्त्रयुक्तेनाग्निष्टोमभागेनायं यजमान आत्मनैव स्वयमेव धनादिभिः समृद्धो भवति। स्वर्गहेतुपुण्या युक्तश्च भवति। तत उत्तरभाविनां

१ क. घ. ङ. च. °नः क°। २ ख. °त्यास्त ए°। ३ क. घ. ङ. च. °जापतिरू°।

त्रयाणां प्रजापशुरूपत्वात्पञ्चदशस्तोत्रयुक्तोक्थ्यरूपत्वे सति प्रजासु पशुषु च समृद्धिरनुसंतता भवति ॥

बहिष्पवमानस्तोत्रस्य प्रारम्भे चोदकप्राप्तामुपास्मै गायता नर इत्येतामृचं बाधितुमृगन्तरं विधत्ते—

"उप त्वा जामयो गिर इति प्रतिपद्भवति । वाग्वै वायुः । वाच एवैषोऽभिषेकः । सर्वासामेव प्रजानाꣳ सूयते । सर्वा एनं प्रजा राजेति वदन्ति।" [ ब्रा० का० १ प्र० ८ अ० ८ ] इति ।

प्रतिपद्यत उपक्रम्यतेऽनयेति प्रतिपत् , आदौ पठनीयेत्यर्थः । अस्यामृचि वायोरनीके अस्थिरन्निति गिरां वायुसमीपे स्थितिः पठ्यते । स च वायुर्वाक्स्वरूपः, कोष्ठाग्निप्रेरितस्य वायोः कण्ठताल्वाद्यभिघातेनाक्षरविशेषोत्पत्तेः । अभिषेचनीये योऽभिषेकः क्रियते सोऽयं वाच एवाभिषेकः । तत्कथमित्युच्यते, सर्वासामेव प्रजानां मध्ये सूयतेऽभिषिच्यते । सर्वाश्च प्रजा एनं राजेति वदन्त्यः सेवन्ते । तस्मात्तादृशवाक्प्रेरकवायुप्रतिपादिका सेयमृगेवाऽऽदौ पाठ्या॥

ऋगन्तरपाठं विधत्ते—

"एतमु त्यं दशक्षिप इत्याह । आदित्या वै प्रजाः । प्रजानामेवैतेन सूयते।" [ ब्रा० का० १ प्र० ८ अ० ८ ] इति ।

इत्याह, इत्येतामृचं पठेत् । अस्यामृचि समादित्येभिरख्यतेत्यादित्याः श्रूयन्ते । ते चाऽऽदित्या एव प्रजा अदितेरुत्पन्नत्वात् । तेन मन्त्रपाठेन प्रजानामेव मध्येऽभिसूयतेऽभिषिच्यते ॥

ऋगन्तरपाठं विधत्ते—

"यन्ति वा एते यज्ञमुखात् । ये संभार्या अक्रन् ( ? ) । यदाह पवस्व वाचो अग्रिय इति । तेनैव यज्ञमुखान्नयन्ति।" [ ब्रा० का० १ प्र० ८ अ० ८ ] इति ।

सम्यग्भ्रियन्ते धीयन्ते पोष्यन्ते वा तृचा याभिराद्याभिर्ऋग्भिस्तास्तृचानामाद्या ऋचः संभार्याः । तादृश ऋचो य उद्गातारोऽक्रन्कुर्वन्ति पठन्ति त एत उद्गातारो यज्ञमुखाद्यन्ति वा अपगच्छन्त्येव । पवस्वेत्यृचः पाठे तु तत्र हे सोम त्वमग्रियोऽग्रे भव आदिभूतः सन्वाचः शोधयेत्यभिधानाद्यज्ञमुखादपगमनं न भवति ॥

उच्छन्दयुक्ताः काश्चिदृचो विधत्ते—

"अनुष्टुक्प्रथमा भवति । अनुष्टुगुत्तमा । वाग्वा अनुष्टुक् । वाचैव प्रयन्ति ।

वाचोयन्ति। उद्वतीर्भवन्ति। उद्वद्वा अनुष्टुभो रूपम्। आनुष्टुभो राजन्यः (२)। तस्मादुद्वतीर्भवन्ति।" [ब्रा० का० १ प्र० ८ अ० ८] इति।

स्तोत्रस्याऽऽद्यावन्ते[1] त्वनुष्टुभावृचौ भवतः। तथा सत्यनुष्टुप्छन्दसो वाग्विशेषत्वेन वाग्रूपत्वाद्वाचैव प्रारम्भसमाप्ती कृते भवतः। यद्यप्युप त्वा जामयो गिर इत्यादयो गायत्र्यः, तथाऽप्युच्छब्दयुक्ताभिर्ऋग्भिरनुष्टुप्त्वं संपद्यते। अनुष्टुभो हि स्वरूपमुच्छब्दयुक्तं तस्योत्कृष्टत्वात्। यद्वा सौरीष्वनुष्टुप्छन्दस्का-सूद्वन्नद्य मित्रेत्यादिषूच्छब्ददर्शनादनुष्टुब्रूपमुच्छब्देरुपेतम्। अनुष्टुभः संबन्धी राजन्योऽनुष्टुप्छन्दसां प्रतिष्ठेति श्रुतेः। यथा छन्दसां मध्येऽनुष्टुभ उत्तमत्वं तद्वद्राज्ञः सर्वपालकत्वेनोत्तमत्वात्(त्वम्)। तस्मात्प्रशस्तत्वादुच्छब्दयुक्ता ऋचः कार्याः॥

स्तोत्रसमापिकामृचं विधत्ते—

"सौर्यनुष्टुगुत्तमा भवति। सुवर्गस्य लोकस्य संतत्यै।" [ब्रा० का० १ प्र० ८ अ० ८] इति।

पूर्वोक्ता उद्वतीरिमां च सौरीं सामसूत्रे जानीयात्। सूर्यस्य स्वर्गवाचित्वात्सौर्या समापने स्वर्गः संततो भवति॥

प्राकृतानि पृष्ठस्तोत्राण्यपवदितुमन्यानि पृष्ठस्तोत्राणि विधत्ते—

"यो वै सवादेति। नैन॰ सव उपनमति। यः सामभ्य एति। पापीयान्त्सुषुवाणो भवति। एतानि खलु वै सामानि। यत्पृष्ठानि। यत्पृष्ठानि भवन्ति (३)। तैरेव सवान्नैति।" [ब्रा० का० १ प्र० ८ अ० ८] इति।

यो यजमानः सवादेति प्रस्तुतात्सोमाभिषवादपगच्छति, एनं सवो नोपनमति भावी सोमाभिषवो न प्राप्नोति। तर्हि वर्तमानं सोमाभिषवं करोत्विति चेन्मैवम्। यः सामभ्योऽपगच्छत्यसौ सुषुवाणः पापीयान्भवति। वर्तमानं सोमाभिषवं कुर्वतोऽपि सामराहित्यात्पापिष्ठत्वम्। तर्हि सामान्यपि कानिचिद्गायत्विति चेन्मैवम्। नहि यानि कानिचित्सामान्यत्र मुख्यानि किं तु पृष्ठस्तोत्रगतान्येव। तस्मात्प्रयुज्यमानैस्तैरेव पृष्ठस्तोत्रैः सवान्नैति सोमाभिषवान्नापगच्छति। पृष्ठविशेषस्वरूपं चान्यतोऽवगन्तव्यम्॥

पृष्ठस्तोत्रगतान्युभयविधसामानि प्रशंसति—

"यानि देवराजाना॰ सामानि। तैरमुष्मिँल्लोक ऋध्नोति। यानि मनुष्यराजाना॰ सामानि। तैरस्मिँल्लोक ऋध्नोति। उभयोरेव लोकयोर्ऋध्नोति। देवलोके च मनुष्यलोके च।" [ब्रा० का० १ प्र० ८ अ० ८] इति।

---

[1] ख. 'न्ते चानु'।

एतच्च सामद्वैविध्यमन्यतो द्रष्टव्यम् ॥

माप्तानेव स्तोमान्प्रशंसति—

" एकविꣳशोऽभिषेचनीयस्योत्तमो भवति । एकविꣳशः केशवपनीयस्य प्रथमः । सप्तदशो दशपेयः ( ४ ) । विड्वा एकविꣳशः । राष्ट्रꣳ सप्तदशः । विश एवैतन्मध्यतोऽभिषिच्यते । तस्माद्वा एष विशां प्रियः । विशो हि मध्यतोऽभिषिच्यते । " [ ब्रा० का० १ प्र० ८ अ० ८ ] इति ।

अभिषेचनीयो दशपेयः केशवपनीय एवमत्रत्यानां त्रयाणां सोमयागानामनुक्रमः । तत्राभिषेचनीयस्योक्थ्यविकृतित्वादुक्थ्ये चोत्तमस्तोत्रस्यैकविंशस्तोमयुक्तत्वादभिषेचनीयस्याप्युत्तम एकविंशो भवति । दशपेये सर्वेषु स्तोत्रेषु सप्तदशस्तोमो वाचनिकः । केशवपनीयेऽप्यग्निष्टोमगताः स्तोमा विपर्ययेण प्रयुज्यन्ते । अग्निष्टोमे च त्रिवृत्पञ्चदशः सप्तदश एकविंश इत्येष क्रमः । केशवपनीये त्वेकविंशः सप्तदशः पञ्चदशस्त्रिवृदित्येतादृशः क्रमो भवति । तत्राभिषेचनीये योऽन्त्य एकविंशो यश्च केशवपनीये प्रथम एकविंशस्तयोरुभयोः प्रजारूपयोर्मध्ये दशपेयगतस्य सप्तदशस्तोत्ररूपस्यावस्थितत्वादेतद्राष्ट्रं विश एवैतन्मध्यतस्तद्द्वयोर्विशोर्मध्येऽभिषिक्तं भवति । यस्मात्सप्तदशस्तोमरूपस्य राष्ट्रस्य पालक एष राजा यथोक्तरीत्या विशां मध्ये प्रजानां मध्येऽभिषिच्यते तस्मादेव कारणाद्विशां प्रजानां प्रियो भवति ॥

अवरोहक्रमानुष्ठितस्तोमयुक्तं केशवपनीयं विधत्ते—

" यद्वा एनमदो दिशोऽनु व्यास्थापयन्ति । तत्सुवर्गं लोकमभ्यारोहति । यदिमं लोकं न प्रत्यवरोहेत् । अति जनं वेयात् । उद्वा माद्येत् । यदेष प्रतीचीनः स्तोमो भवति । इममेव तेन लोकं प्रत्यवरोहति । अथो अस्मिन्नेव लोके प्रतितिष्ठत्यनुन्मादाय ( ५ ) । " [ब्रा० का० १ प्र० ८ अ० ८] इति ।

अद इत्यनेन प्रत्यक्षत्वं हस्तेनाभिनीय प्रदर्श्यते । यदा समिधमातिष्ठत्यादिभिर्मन्त्रैरस्माकं दृष्टिपथ एवैनं राजानं दिशो व्यास्थापयन्ति तदानीमेवायं स्वर्गं लोकमभ्यारोहति । अभ्यारुह्य च पुनरिमं लोकं प्रति नावरोहेच्चेत्तदानीमत्रत्यं बन्धुजनमतिक्रम्य यत्र क्वापि गच्छेदुन्मत्तो वा भवेत् । प्रतीचीनस्तोमोऽग्निष्टोमाद्विपर्ययेण प्रत्यावृत्ताः स्तोमा यस्य केशवपनीयस्य स एष यद्यत्र भवेत्तर्हि केशवपनीयेनेममेव लोकं प्रत्यवरोहति । किं चोन्मादाभावायास्मिन्नेव लोके प्रतितिष्ठति ॥

---

१ क. 'नामुपक्र' । २ क. घ. ङ. च. एव त' ।

( सौत्रामणीमन्त्रपशुहविषामभिधानम् )

यो रुक्मोऽभिषेककाले पुरुषस्याधस्तादवस्थापितो यश्चान्यः शिरसि त्रातुं धृतस्तावुभौ प्रशंसति—

" इयं वै रजता। असौ हरिणी। यद्रुक्मौ भवतः। आभ्यामेवैनमुभयतः परिगृह्णाति। " [ ब्रा० का० १ प्र० ८ अ० ९ ] इति।

अधस्तनो रुक्मो राजतो भूमिस्वरूप उपरितनस्तु हिरण्मयो द्युलोकः। तत आभ्यां द्यावापृथिवीरूपाभ्यामधस्तादुपरिष्टाच्च परिगृहीतो भवति। ननु— " अमृतमसि मृत्योर्मा पाहीति हिरण्यमुपास्यति " इति श्रवणादधस्तनोऽपि रुक्मो राजतो न भवति। नायं दोषः। रजतस्यापि हिरण्यावान्तरभेदत्वात्। " तस्माद्रजतꣳ हिरण्यमदक्षिण्यम् " इति पुनराधाने श्रवणात्। होतृब्राह्मणेऽपि द्वैविध्यमाम्नातम्—" तद्दुर्वर्णꣳ हिरण्यमभवत्। तद्दुर्वर्णस्य हिरण्यस्य जन्म। स द्वितीयमतप्यत। सोऽताम्यत्। स प्राङ्बाधत। स देवानसृजत। तदस्य प्रियमासीत्। तत्सुवर्णꣳ हिरण्यमभवत् " इति च॥

उपरितनं रुक्मं पुनः प्रशंसति—

" वरुणस्य वा अभिषिच्यमानस्याऽऽपः। इन्द्रियं वीर्यं निरघ्नन्। तत्सुवर्णꣳ हिरण्यमभवत्। यद्रुक्ममन्तर्दधाति। इन्द्रियस्य वीर्यस्यानिर्घाताय। " [ ब्रा० का० १ प्र० ८ अ० ९ ] इति।

आपो वीर्यं निरघ्नन्निर्गमितवत्यः। तच्च निर्गतं वीर्यं सुवर्णमभवत्॥

तस्य च रुक्मस्य परिमाणं छिद्राणि च विधत्ते—

" शतमानो भवति शताक्षरः। शतायुः पुरुषः शतेन्द्रियः। आयुष्येवेन्द्रिये प्रतितिष्ठति। " [ ब्रा० का० १ प्र० ८ अ० ९ ] इति॥

हिरण्यद्रव्यं प्रशंसति—

" आयुर्वै हिरण्यम्। आयुष्या एवैनमभ्यतिक्षरन्ति। तेजो वै हिरण्यम्। तेजस्या एवैनमभ्यतिक्षरन्ति। वर्चो वै हिरण्यम्। वर्चस्या एवैनमभ्यतिक्षरन्ति ( १ )। " [ ब्रा० का० १ प्र० ८ अ० ९ ] इति।

हिरण्यदानेनापमृत्योः परिहर्तुं शक्यत्वात्तस्याऽऽयुष्ट्वम्। तत्संबन्धादायुर्हिता एवाऽऽप एनं यजमानमभितः क्षरन्ति। सुवर्णस्य दीप्तिमत्त्वात्तेजस्त्वम्। तत्संबन्धादापस्तेजस्याः। शरीरशोभा वर्चः। तच्चाऽऽभरणसंबन्धाज्जायत इति हिरण्यस्य वर्चस्त्वम्। तद्योगादापो वर्चस्याः॥

अथ व्युष्टिद्विरात्रं विधत्ते—

" अप्रतिष्ठितो वा एष इत्याहुः। यो राजसूयेन यजत इति। यदा वा

एष एतेन द्विरात्रेण यजते । अथ प्रतिष्ठा । अथ संवत्सरमाप्नोति । यावन्ति संवत्सरस्याहोरात्राणि । तावतीरेतस्य स्तोत्रीयाः । अहोरात्रेष्वेव प्रतितिष्ठति । ” [ ब्रा० का० १ प्र० ८ अ० १० ] इति ।

राजसूयेनेष्ट्वाऽपि द्विरात्राननुष्ठानेन संपूर्त्यभावादप्रतिष्ठितत्वम् । अत्रत्येषु स्तोमेषु आवर्त्यमानाः स्तोत्रीया ऋचो विंशत्यधिकसप्तशतसंख्याकाः संपद्यन्ते । तथा च संवत्सरगताहोरात्रसंख्यासामान्यादहोरात्रेषु प्रतिष्ठितत्वं संवत्सरप्राप्तिर्भवति ॥

द्विरात्रावयवावहर्विशेषौ विधत्ते—

“ अग्निष्टोमः पूर्वमहर्भवति । अतिरात्र उत्तरम् ( १ ) । नानैवाहोरात्रयोः प्रतितिष्ठति । ” [ ब्रा० का० १ प्र० ८ अ० १० ] इति ।

विलक्षणयोरह्नोरनुष्ठितत्वादहोरात्रयोरस्य विविधप्रतिष्ठोपपद्यते ॥

तयोरनुष्ठानाय शुक्लकृष्णपक्षौ विधत्ते—

“ पौर्णमास्यां पूर्वमहर्भवति । व्यष्टकायामुत्तरम् । नानैवार्धमासयोः प्रतितिष्ठति । ” [ ब्रा० का० १ प्र० ८ अ० १० ] इति ।

तयोरुभयोर्विलक्षणपक्षत्वादुभयोरर्धमासयोरस्य विविधा प्रतिष्ठोपपद्यते ॥

पक्षान्तरत्वेन विलक्षणयोर्मासयोर्द्वयोरनुष्ठानं विधत्ते—

“ अमावास्यायां पूर्वमहर्भवति । उद्दृष्ट उत्तरम् । नानैव मासयोः प्रतितिष्ठति । ” [ ब्रा० का० १ प्र० ८ अ० १० ] इति ।

एकेनाह्ना निष्पाद्यः सोमयागोऽहःशब्देनोपलक्ष्यते । तादृशश्चाग्निष्टोमः पूर्वमहः । तच्चामावास्यायां कर्तव्यम् । उद्दृष्टं शुक्लप्रतिपत्, उत्कर्षेण दर्शनस्य तत्रोपक्रमात्, तस्मिन्नुद्दृष्ट उत्तरं द्वितीयमहरतिरात्राख्यं कर्तव्यम् । तथा सति विलक्षणयोर्मासयोः कृतत्वाद्द्विविधप्रतिष्ठा भवति ॥

प्रकारान्तरं विधत्ते—

“ अथो खलु । ये एव समानपक्षे पुण्याहे स्याताम् । तयोः कार्यं प्रतिष्ठित्यै ( २ ) । ” [ ब्रा० का० १ प्र० ८ अ० १० ] इति ।

अथो खलु अथवेत्यर्थः । समानश्चासौ पक्षश्च तत्र ये पुण्यदिने ज्योतिःशास्त्रप्रसिद्धे शुभावहे दिने तयोरिदं कर्म कार्यं न त्वत्र पक्षभेदो विवक्षितः । मासभेदस्तु दूरापेतः ॥

अस्मिन्द्विरात्रे दोषमुद्भाव्य परिहरन्प्रशंसति—

“ अपशव्यो द्विरात्र इत्याहुः । द्वे ह्येते छन्दसी । गायत्रं च त्रैष्टुभं च ।

(सौत्रामणीमन्त्रपशुहविषामभिधानम्)

जगतीमन्तर्यन्ति। न तेन जगती कृतेत्याहुः। यदेनां तृतीयसवने कुर्वन्तीति। यदा वा एषाऽहीनस्याहर्भजते। साहस्य वा सवनम्। अथैव जगती कृता। अथ पशव्यः।" [ ब्रा० का० १ प्र० ८ अ० १० ] इति।

जागताः पशव इति श्रुत्यन्तरे पशूनां जगतीसंबन्धश्रवणाद्द्विरात्रे च जगत्या अन्तरितत्वादपशव्यो द्विरात्र इत्याक्षेपवादिन आहुः। अथैवं मन्यसे, विद्यत एव जगती, जागतं तृतीयसवनमितिश्रुतेस्तृतीयसवने जगत्याः कृतत्वादिति, तदयुक्तं खलु। अहीने तावन्मात्रेण जगत्यनुष्ठानं न संपूर्णं किं तर्हि यदा द्विरात्रस्यैतस्याहीनस्यैकमहः कृत्स्नं जगती व्याप्नोति तदा जगत्यनुष्ठानं संपूर्णं भवति। साह्न एकेनाह्ना निष्पन्नत्वादेकाहः। तस्य तु तृतीयसवनसंबन्धमात्रेणापि जगत्यनुष्ठानं संपूर्णं भवति। तस्मादत्र कृत्स्नस्याह्नो जगतीव्याप्त्यभावादपशव्यत्वं तदवस्थमित्याक्षेपवादिनामभिप्रायः। तस्मिन्नाक्षेपे भङ्ग्यन्तरेण परिहारोऽप्यन्तर्भूतः। तत्कथमित्युच्यते, वाक्ये यदेतिशब्दं परित्यज्य परिहारो योजनीयः। एषा जगती प्रकृतस्य द्विरात्रस्याहीनस्य कृत्स्नस्याहर्भजते। तस्मादत्र जगती कृता। तस्मादयं द्विरात्रः पशव्य इति परिहारः। यद्यपि तस्मिन्नहनि च्छन्दोन्तराणि सन्ति तथाऽपि जगतीव्याप्तावुपायः सप्तमकाण्डेऽङ्गिरसां द्विरात्रे समाम्नातः—"वैखानसं पूर्वेऽहन्साम भवति तेन जगत्यै नैति" इति। वैखानसनामकं साम पूर्वस्मिन्दिने गायेत्। यत्र(तच्च) जगतीसंबद्धमिति तदहः कृत्स्नं जगत्या नापगच्छति। अतो वैखानससाममहिम्नैव कृत्स्नेऽप्यह्नि जगत्याः पूरितत्वाद्द्विरात्रः पशव्य एव॥

अस्य द्विरात्रस्य व्युष्टिनाम प्रशंसति—

"व्युष्टिर्वा एष द्विरात्रः। य एवं विद्वान्द्विरात्रेण यजते। व्येवास्मा उच्छति। अथो तम एवापहते।" [ ब्रा० का० १ प्र० ८ अ० १० ] इति।

विशिष्ट उषःकालो यस्मिन्द्विरात्रे सोऽयं व्युष्टिः। यो यजमान एवं व्युष्टिनाम विद्वान्यजतेऽस्मै यजमानार्थं विशेषेणोच्छत्येव सर्वं कर्तव्यजातं बुद्धौ प्रकाशत एव। किं च तमो बुद्धिमान्द्यमयं यजमानो विनाशयत्येव॥

यदुक्तं सूत्रकारेण—"क्षत्त्राणां धृतिस्त्रिष्टोमोऽग्निष्टोमः पञ्चापवर्गस्तेनान्ते यजते संतिष्ठते राजसूयः" इति, क्षत्त्राणां धृतिरिति कर्मनामधेयं, स च कर्मविशेषः प्रकृतिवत्त्रिवृदादिस्तोमचतुष्टयो न भवति किं तर्हि त्रिभिरेव स्तोमैरुपेतः। तमेतं विधत्ते—

१ घ. ङ. च. ति। यो हि एं। २ ख. तत्र।

" अग्निष्टोममन्तत आहरति । अग्निः सर्वा देवताः । देवतास्वेव प्रतितिष्ठति ( ३ ) । " [ ब्रा० का० १ प्र० ८ अ० १० ] इति ।

अग्निविषयः स्तोमो यस्य क्रतोरन्ते सोऽयमग्निष्टोमः । यज्ञायज्ञा वो अग्नय इत्येतस्यामाग्नेय्यामृचि स्तोत्रकाल आहृत्या स्तोमं संपादयति । तेन च क्रतुः संस्थितो भवति । तस्मादयमग्निष्टोमः । अग्नेश्च सर्वदेवतारूपत्वमसकृदुक्तम् । तस्माद्राजसूयसमाप्त्यवसरेऽनुष्ठितेनाग्निष्टोमेन यजमानो देवतासु प्रतितिष्ठत्येव ॥

अत्र विनियोगसंग्रहः—

" स्वाद्वीं शष्पैः सुरा योज्या पुनाद्वाभ्यां तु पावयेत् ।
कुवित्स्वरे सुरा ग्राह्या सोमावनयते सुराम् ॥
शतच्छिद्रयुतस्थाल्यां मन्त्राः पञ्चेह वर्णिताः ॥ १ ॥" [इति] ॥

अथ मीमांसा ।

तृतीयाध्यायस्य पञ्चमपादे चिन्तितम्—

" सौत्रामण्यां ग्रहे स्विष्टकृदाद्यस्ति न वाऽस्ति तत् ।
शेषणान्न सुराक्षीरयोरन्यत्रोपयोगतः ॥ "

सौत्रामणीनामके यागे श्रूयते—" पयोग्रहाः सुराग्रहाश्च गृह्यन्ते " इति । तत्र प्रकृतिगतसोमग्रहेष्विव शेषकार्यं स्विष्टकृदिडादिकमस्ति । न चात्र पूर्ववच्छेषाभावः, उच्छिनत्ति( ष्टि ) न सर्वं जुहोतीत्यवशेषयितव्यत्वश्रवणादिति चेन्मैवम् । शिष्टस्यान्यत्रोपयोगश्रवणात् । " ब्राह्मणं परिक्रीणीयादुच्छेषणस्य पातारम् " इति श्रूयते । " यदि ब्राह्मणं न विन्देत् । वल्मीकवपायामवनयेत् " इति च । " शतातृण्णायां समवनयेत् " इति च । शतच्छिद्रा कुम्भी शतातृण्णा । तस्मान्नास्ति स्विष्टकृदादिकम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डेऽष्टमप्रपाठक एकविंशोऽनुवाकः ॥ २१ ॥

---

( अथ प्रथमाष्टकेऽष्टमप्रपाठके द्वाविंशोऽनुवाकः । )

---

अग्नांविष्णू महि तद्वां महित्वं वीतं घृतस्य

गुह्यानि नाम। दमेदमे सप्त रत्ना दधाना प्रति वां जिह्वा घृतमा चरण्येत्। अग्नाविष्णू महि धाम प्रियं वां वीथो घृतस्य गुह्या जुषाणा। दमेदमे सुष्टुतीर्वावृधाना प्रति वां जिह्वा घृतमुच्चरण्येत्। प्र णो देवी सरस्वती वाजेभिर्वाजिनीवती। धीनामवित्र्यवतु। आ नो दिवो बृहतः (१) पर्वतादा सरस्वती यजता गन्तु यज्ञम्। हवं देवी जुजुषाणा घृताची शग्मां नो वाचमुशती शृणोतु। बृहस्पते जुषस्व नो हव्यानि विश्वदेव्य। रास्व रत्नानि दाशुषे। एवा पित्रे विश्वदेवाय वृष्णे यज्ञैर्विधेम नमसा हविर्भिः। बृहस्पते सुप्रजा वीरवन्तो वयꣳ स्याम पतयो रयीणाम्। बृहस्पते अति यदर्यो अर्हाद्द्युमद्विभाति क्रतुमज्जनेषु। यद्दीदयच्छवसा (२) ऋतप्रजात तदस्मासु द्रविणं धेहि चित्रम्। आ नो मित्रावरुणा घृतैर्गव्यूतिमुक्षतम्। मध्वा रजाꣳसि सुक्रतू। प्र बाहवा सिसृतं जीवसे न आ नो गव्यूतिमुक्षतं घृतेन। आ नो जने श्रवयतं युवाना श्रुतं मे मित्रावरुणा

हवेमा । अग्निं वः पूर्व्यं गिरा देवमीडे वसूनाम् । सपर्यन्तः पुरुप्रियं मित्रं न क्षेत्रसाधसम् । मक्षू देववतो रथः (३) शूरो वा पृत्सु कासु चित् । देवानां य इन्मनो यजमान इयक्षत्यभीदयज्वनो भुवत् । न यजमान रिष्यसि न सुन्वान न देवयो । असदत्र सुवीर्यमुत त्यदाश्वश्वियम् । नकिष्टं कर्मणा नशन्न प्र योषन्न योषति । उप क्षरन्ति सिन्धवो मयोभुव ईजानं च यक्ष्यमाणं च धेनवः । पृणन्तं च पपुरिं च (४) श्रवस्यवो घृतस्य धारा उप यन्ति विश्वतः । सोमारुद्रा वि वृहतं विषूचीममीवा या नो गयमाविवेश । आरे बाधेथां निर्ऋतिं पराचैः कृतं चिदेनः प्र मुमुक्तमस्मत् । सोमारुद्रा युवमेतान्यस्मे विश्वा तनूषु भेषजानि धत्तम् । अव स्यतं मुञ्चतं यन्नो अस्ति तनूषु बद्धं कृतमेनो अस्मत् । सोमापूषणा जनना रयीणां जनना दिवो जनना पृथिव्याः । जातौ विश्वस्य भुवनस्य गोपौ देवा अकृण्वन्नमृतस्य नाभिम् । इमौ देवौ जायमानौ जुषन्तेमौ तमांसि गूह-

(काम्ययाज्यापुरोनुवाक्याभिधानम्)

तामजुष्टा । आभ्यामिन्द्रः पक्वमामास्वन्तः सोमापूषभ्यां जनदुस्रियासु (५) ॥

( बृहतः शवसा रथः पपुरिं च दिवो जनना पञ्चविꣳशतिश्च । )

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टकेऽष्टमप्रपाठके द्वाविंशोऽनुवाकः ॥ २२ ॥

( अनुमत्या आग्नेयमैन्द्राग्नमग्नये सोमाय प्रतिपूरुषमैन्द्राग्नं धात्रे बार्हस्पत्यमग्नये गृहपतयेऽर्थेतो देवीः समिधꣳ सोमस्येन्द्रस्य मित्र आग्नेयꣳ सद्य आग्नेयꣳ हिरण्यमाग्नेयꣳ स्वाद्वीं त्वाऽग्नाविष्णू द्वाविꣳशतिः ॥ २२ ॥)

( अनुमत्यै यथाऽसति देवीरापो मित्रोऽसि शूरो वा द्विचत्वारिꣳशत् ॥ ४२ ॥ )

हरिः ॐ ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टकेऽष्टमः प्रपाठकः ॥ ८ ॥

---

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां प्रथमाष्टकः संपूर्णः ॥ १ ॥

---

( अथ प्रथमाष्टकेऽष्टमप्रपाठके द्वाविंशोऽनुवाकः । )

---

अग्नाविष्णू इत्यग्ना—विष्णू । महि । तत् । वाम् । महित्वमिति महि—त्वम् । वीतम् । घृतस्य । गुह्यानि । नाम । दमेदम इति दमे—दमे । सप्त । रत्ना । दधाना । प्रतीति । वाम् । जिह्वा । घृतम् । एति । चरण्येत् । अग्नाविष्णू इत्यग्ना—विष्णू । महि । धाम । प्रियम् । वाम् । वीथः । घृतस्य । गुह्या ।

जुषाणा । दमेदम इति दमे—दमे । सुष्टुतीरिति सु—स्तुतीः । वावृधाना । प्रतीति । वाम् । जिह्वा । घृतम् । उदिति । चरण्येत् । प्रेति । नः । देवी । सरस्वती । वाजेभिः । वाजिनीवतीति वाजिनी—वती । धीनाम् । अवित्री । अवतु । एति । नः । दिवः । बृहतः (१) । पर्वतात् । एति । सरस्वती । यजता । गन्तु । यज्ञम् । हवम् । देवी । जुजुषाणा । घृताची । शग्माम् । नः । वाचम् । उशती । शृणोतु । बृहस्पते । जुषस्व । नः । हव्यानि । विश्वदेव्येति विश्व—देव्य । रास्व । रत्नानि । दाशुषे । एवा । पित्रे । विश्वदेवायेति विश्व—देवाय । वृष्णे । यज्ञैः । विधेम । नमसा । हविर्भिरिति हविः—भिः । बृहस्पते । सुप्रजा इति सु—प्रजाः । वीरवन्त इति वीर—वन्तः । वयम् । स्याम । पतयः । रयीणाम् । बृहस्पते । अतीति । यत् । अर्यः । अर्हात् । द्युमदिति द्यु—मत् । विभातीति वि—भाति । क्रतुमदिति क्रतु—मत् । जनेषु । यत् । दीदयत् । शवसा ( २ ) । ऋतप्रजातेत्यृत—प्रजात । तत् । अस्मासु । द्रविणम् । धेहि । चित्रम् । एति । नः । मित्रावरुणेति मित्रा—वरुणा । घृतैः । गव्यूतिम् ।

( काम्ययाज्यापुरोनुवाक्याभिधानम् )

उक्षतम्। मध्वा। रजांसि। सुक्रतू इति सु-क्रतू। प्रेति। बाहवा। सिसृतम्। जीवसे। नः। एति। नः। गव्यूतिम्। उक्षतम्। घृतेन। एति। नः। जने। श्रवयतम्। युवाना। श्रुतम्। मे। मित्रावरुणेति मित्रा—वरुणा। हवा। इमा। अग्निम्। वः। पूर्व्यम्। गिरा। देवम्। ईडे। वसूनाम्। सपर्यन्तः। पुरुप्रियमिति पुरु—प्रियम्। मित्रम्। न। क्षेत्रसाधसमिति क्षेत्र—साधसम्। मक्षु। देववत इति देव—वतः। रथः (३)। शूरः। वा। पृत्स्विति पृत्—सु। कासु। चित्। देवानाम्। यः। इत्। मनः। यजमानः। इयक्षति। अभीति। इत्। अयज्वनः। भुवत्। न। यजमान। रिष्यसि। न। सुन्वान। न। देवयो इति देव—यो। असत्। अत्र। सुवीर्यमिति सु—वीर्यम्। उत। त्यत्। आश्वश्वियमित्याशु—अश्वियम्। नकिः। तम्। कर्मणा। नशत्। न। प्रेति। योषत्। न। योषति। उपेति। क्षरन्ति। सिन्धवः। मयोभुव इति मयः—भुवः। ईजानम्। च। यक्ष्यमाणम्। च। धेनवः। पृणन्तम्। च। पपुरिम्। च (४)। श्रवस्यवः। घृतस्य। धाराः।

उपेति । यन्ति । विश्वतः । सोमारुद्रेति सोमा—रुद्रा । वीति । बृहतम् । विषूचीम् । अमीवा । या । नः । गयम् । आविवेशेत्या—विवेश । आरे । बाधेथाम् । निर्ऋतिमिति निः—ऋतिम् । पराचैः । कृतम् । चित् । एनः । प्रेति । मुमुक्तम् । अस्मत् । सोमारुद्रेति सोमा—रुद्रा । युवम् । एतानि । अस्मे इति । विश्वा । तनूषु । भेषजानि । धत्तम् । अवेति । स्यतम् । मुञ्चतम् । यत् । नः । असित । तनूषु । बद्धम् । कृतम् । एनः । अस्मत् । सोमापूषणेति सोमा—पूषणा । जनना । रयीणाम् । जनना । दिवः । जनना । पृथिव्याः । जातौ । विश्वस्य । भुवनस्य । गोपौ । देवाः । अकृण्वन् । अमृतस्य । नाभिम् । इमौ । देवौ । जायमानौ । जुषन्त । इमौ । तमांसि । गूहताम् । अजुष्टा । आभ्याम् । इन्द्रः । पक्कम् । आमासु । अन्तः । सोमापूषभ्यामिति सोमापूष—भ्याम् । जनत् । उस्रियासु ( ५ ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टकेऽ-ष्टमप्रपाठके द्वाविंशोऽनुवाकः ॥ २२ ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमाष्टकेऽ-ष्टमः प्रपाठकः ॥ ८ ॥

---

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमा-ष्टकः समाप्तः ॥ १ ॥

( अथ प्रथमकाण्डेऽष्टमप्रपाठके द्वाविंशोऽनुवाकः ।

एकविंशे सौत्रामणीमुक्त्वा राजसूयः समापितः । द्वाविंशे काम्ययाज्या-[ पुरोनुवाक्या ] उच्यन्ते ।

तत्र काम्येष्टिकाण्डे त्रिहविष्का काचिदिष्टिराम्नायते—

" आग्नावैष्णवमेकादशकपालं निर्वपेदभिचरन्त्सरस्वत्याज्यभागा स्याद्बार्हस्पत्यश्चरुर्यदाग्नावैष्णव एकादशकपालो भवत्यग्निः सर्वा देवता विष्णुर्यज्ञो देवताभिश्चैवैनं यज्ञेन चाभिचरति सरस्वत्याज्यभागा भवति वाग्वै सरस्वती वाचैवैनमभिचरति बार्हस्पत्यश्चरुर्भवति ब्रह्म वै देवानां बृहस्पतिर्ब्रह्मणैवैनमभिचरति " [ सं० का० २ प्र० २ अ० ९ ] इति ।

आज्यं भागो यस्याः साऽऽज्यभागा । आज्यमेव हविरित्यर्थः । स्पष्टमन्यत् ॥

तत्र प्रथमहविषः पुरोनुवाक्यामाह—

अग्नाविष्णू महि तद्वां महित्वं वीतं घृतस्य गुह्यानि नाम । दमेदमे सप्त रत्ना दधाना प्रति वां जिह्वा घृतमा चरण्येत् ।, इति ।

हेऽग्नाविष्णू वां युवयोस्तद्वक्ष्यमाणं महित्वं महिमोपेतत्वं महि पूजनीयम् । कथमिति तदुच्यते । घृतस्य यानि गुह्यानि नामानि मन्त्रेषु गोप्यान्याज्यं पृषदाज्यं सर्पिरित्यादीनि तानि युवां वीतं प्राप्नुतं, पशूनां तेजसाऽग्नये जुष्टमभिघारयामीति आयुर्दा अग्ने हविषो जुषाणो घृतप्रतीको घृतयोनिरेधीति आजुह्वानस्य सर्पिष इत्यादिमन्त्रान्सर्वदा शृणुतमित्यर्थः । कुत्रैतन्नामश्रवणं दमेदमे सर्वेषां यजमानानां गृहे गृहे । किं च, वां युवयोर्जिह्वा प्रति प्रत्येकं घृतमागत्य प्राप्य चरण्येद्भक्षयतु पिबत्वित्यर्थः । कीदृशी जिह्वा, सप्त रत्ना दधाना सप्तसंख्याकान्रत्नसदृशाञ्ज्वालाविशेषान्धारयन्ती । छत्रिन्यायेनाग्निसाहित्याद्विष्णोरपि तथात्वम् ॥

अत्रैव याज्यामाह—

अग्नाविष्णू महि धाम प्रियं वां वीथो घृतस्य गुह्या जुषाणा । दमेदमे सुष्टुतीर्वावृधाना प्रति वां जिह्वा घृतमुच्चरण्येत् ।, इति ।

हेऽग्नाविष्णू वां युवयोः प्रियं धाम यज्ञशालारूपं स्थानं महि पूजनीयं युवां घृतस्य गुह्यं योग्यं सारमभिघारणरूपं जुषाणा सेवमानौ वीथः पुरोडाशं भक्षयथः। कीदृशौ युवां, दमेदमे सर्वेषु यजमानगृहेषु सुष्टुतीर्वावृधाना पूर्वोदाहृता आयुर्दा अग्न इत्यादिकाः शोभनाः स्तुतीर्वर्धयन्तौ। प्रति वां जिह्वेत्यादि पूर्ववत्। उच्चरण्येदुत्कर्षेण भक्षयतु ॥

द्वितीयहविषः पुरोनुवाक्यामाह—

प्र णो देवी सरस्वती वाजेभिर्वाजि-
नीवती। धीनामवित्र्यवतु।, इति।

सरस्वती देवी वाजेभिरन्नैर्नोऽस्मान्प्रकर्षेणावतु रक्षतु। कीदृशी, वाजिनीवती वाजोऽस्यां क्रियायामस्तीत्यन्नप्रदा यागक्रिया वाजिनी सा यस्यामस्ति सा वाजिनीवती। धीनामवित्री यज्ञविषयाणामस्मद्बुद्धीनां पालयित्री ॥

तत्रैव याज्यामाह—

आ नो दिवो बृहतः पर्वतादा सरस्वती
यजता गन्तु यज्ञम्। हवं देवी जुजुषाणा
घृताची शग्मां नो वाचमुशती शृणोतु।, इति।

यजता यष्टव्या सरस्वती नोऽस्माकं यज्ञं प्रति दिवः सकाशादागन्त्वागच्छतु। बृहतः पर्वतादागच्छतु। यद्यप्येषा द्युलोके मेरौ वा तिष्ठति तथाऽप्यवश्यमागच्छत्वित्यर्थः। सेयमागता देवी शग्मां सुखप्रापिकां नोऽस्मदीयां स्तुतिरूपां वाचमुशती कामयमाना शृणोतु। कीदृशी देवी, हवमस्मदीयमाह्वानं जुजुषाणा सेवमाना, घृतमञ्चति प्राप्नोतीति घृताची ॥

तृतीयहविषः पुरोनुवाक्यामाह—

बृहस्पते जुषस्व नो हव्यानि विश्व-
देव्य। रास्व रत्नानि दाशुषे।, इति।

विश्वदेव्य विश्वेभ्यो देवेभ्यो हित हे बृहस्पते नोऽस्माकं हव्यानि जुषस्व। दाशुषे हविर्दत्तवते यजमानाय रत्नानि रास्व देहि ॥

तत्रैव याज्यामाह—

एवा पित्रे विश्वदेवाय वृष्णे यज्ञैर्विधेम
नमसा हविर्भिः। बृहस्पते सुप्रजा वीर-
वन्तो वयꣳ स्याम पतयो रयीणाम्।, इति।

(काम्ययाज्यापुरोनुवाक्याभिधानम्)

एवा, एवं किं चेत्यर्थः। हे बृहस्पते पित्रे पितृवत्पालकाय विश्वे देवा यस्यासौ विश्वदेवोऽस्मै सर्वदेवगुरवे वृष्णेऽभिमतफलवर्षिणे तुभ्यं यज्ञैर्बहुविधयागैर्नमसा भक्तिपूर्वकनमस्कारैर्हविर्भिराज्यपुरोडाशादिभिश्च परिचर्यां विधेम सर्वथा परिचरेम। त्वत्प्रसादाच्छोभनापत्ययुक्ताः शूरभटोपेता धनानां पतयो भवेम॥

तत्रैव विकल्पितां याज्यामाह—

बृहस्पते अति यदर्यो अर्हाद्द्युमद्विभाति क्रतुमज्जनेषु। यद्दीदयच्छवसर्तप्रजात तदस्मासु द्रविणं धेहि चित्रम्।, इति।

हे बृहस्पतेऽर्यो राजा यद्द्रविणं रत्नादिरूपमतीतरानतिक्रम्याहतिस्वयमेवानुभवितुमर्हति। यच्चास्मज्जनेष्वमात्यादिषु द्युमदाभूषणादिमद्विभाति। यजमानरूपेषु जनेषु क्रतुमद्यागसाधनवद्विभाति। पुनरपि यद्द्रविणं शवसा बलेन जीवितप्रदानसंपादितसैन्यरूपेण दीदयद्दीप्यते तद्यथोक्तगुणोपेतं द्रविणं चित्रं मणिमुक्तादिरूपं हे ऋतप्रजात तदस्मासु धेहि स्थापय। ऋतात्सत्यात्परमात्मनः प्रकर्षेण देवगुरुत्वेनोत्पन्न ऋतप्रजातः॥

प्रथममभिचरतः शत्रोस्त्रिहविष्केष्टिर्विहिता। इदानीं तदीयादभिचाराद्दूर्ध्वं प्रत्यभिचरतस्तामेवेष्टिं विहितामभिप्रेत्य तत्र विशेषं विधत्ते—

"प्रति वै परस्तादभिचरन्तमभिचरन्ति द्वेद्वे पुरोनुवाक्ये कुर्यादतिप्रयुक्त्या" [सं० का० २ प्र० २ अ० ९] इति।

प्रथमतोऽभिचरन्तं शत्रुं ज्ञात्वा तद्विरोधिनः पुरुषाः पश्चात्प्रत्यभिचरन्ति तदानीं पूर्वोक्तायाः पुरोनुवाक्याया आवृत्त्या वा मन्त्रान्तरागमनेन वैकैकस्य हविषो द्वे द्वे पुरोनुवाक्ये कुर्यात्। मन्त्रान्तरपक्षे तु प्रथमस्य हविषोऽग्नाविष्णू सजोषसेत्येषा समाम्नातव्या। द्वितीयस्य हविषः पावीरवी कन्येति। तृतीयस्य तु समाम्नाता एव तिस्र ऋचो वर्तन्ते। किमर्थं पुरोनुवाक्याद्वित्वं तदुच्यते। अतिप्रयुक्त्यै तस्मादप्यतिशयितप्रयोगार्थम्॥

यस्तु पापभीरुः सन्प्रतिचारं न करोति किं तु केवलं स्वविषयमभिचारं परिहर्तुमिच्छति तस्य पूर्वोक्तामेव त्रिहविष्कामिष्टिं विधत्ते—

"एतयैव यजेताभिचर्यमाणो देवताभिरेव देवताः प्रतिचरति यज्ञेन यज्ञं वाचा वाचं ब्रह्मणा ब्रह्म स देवताश्चैव यज्ञं च मध्यतो व्यवसर्पति तस्य

न कुतश्चनोपाव्याधो भवति नैनमभिचरन्त्स्तृणुते " [ सं० का० २ प्र० २ अ० ९ ] इति ।

देवताः प्रतिचरति निवारयति । स्वकीययज्ञेन तदीययज्ञं निवारयति । स्वकीयवाचा तदीयवाचं निवारयति । स्वकीयब्रह्मणा तदीयं ब्रह्म निवारयति । लौकिकाधिक्षेपपरिहारो वाङ्निवारणं, ब्राह्मण्यपरिहारो मन्त्रनिवारणम् । स तादृशः पुरुषः शत्रोरात्मनश्च मध्ये स्वकीयदेवताः स्वकीययज्ञं च मध्यतो व्यवसर्पति व्यवधानरूपेण स्थापयति । तस्य तादृशस्य कुतोऽपि व्याध्यादेर्बाधो न भवति । प्रथममभिचरन्पुरुष एनं न स्तृणुते न हिनस्ति ॥

यज्ञप्राप्तिकामिन एकहविष्कामिष्टिं विधत्ते—

" आग्नावैष्णवमेकादशकपालं निर्वपेद्यं यज्ञो नोपनमेदग्निः सर्वा देवता विष्णुर्यज्ञोऽग्निं चैव विष्णुं च स्वेन भागधेयेनोप धावति तावेवास्मै यज्ञं प्र यच्छत उपैनं यज्ञो नमति " [ सं० का० २ प्र० २ अ० ९ ] इति ।

यं यज्ञानुष्ठानार्थं पुरुषं केनापि द्रव्याभावादिविघ्नेन स यज्ञो न प्राप्नुयात्तस्येयमिष्टिः ॥

दृष्टिपाटवार्थिन एकहविष्कामिष्टिं विधत्ते—

" आग्नावैष्णवं घृते चरुं निर्वपेच्चक्षुष्कामोऽग्नेर्वै चक्षुषा मनुष्या वि पश्यन्ति यज्ञस्य देवा अग्निं चैव विष्णुं च स्वेन भागधेयेनोप धावति तावेवास्मिंश्चक्षुर्धत्तश्चक्षुष्मानेव भवति " [ सं० का० २ प्र० २ अ० ९ ] इति ।

अग्नेश्चक्षुषा दीपेनान्धकारादियुक्तप्रदेशे मनुष्याः पश्यन्ति । यज्ञस्य तु चक्षुषा सामर्थ्यरूपेण देवाः पश्यन्ति । अतो यागदेवस्य विष्णोरग्नेश्च हविषा तावुभौ कामलादिरोगपरिहारेणास्मिन्यजमाने चक्षुर्दृष्टिपाटवं धत्तः प्रयच्छतः । तेनासौ चक्षुष्मान्सूक्ष्मदर्शनेऽपि समर्थो भवति ॥

घृतं चरुप्रकृतिद्रव्यं च प्रशंसति—

" धेन्वै वा एतद्रेतो यदाज्यमनडुहस्तण्डुला मिथुनादेवास्मै चक्षुः प्र जनयति " [ सं० का० २ प्र० २ अ० ९ ] इति ।

भक्षिततृणसारत्वादाज्यस्य धेनुरेतस्त्वं, बलीवर्दकृष्टोत्पन्नत्वात्तण्डुलानामनडुद्रेतस्त्वं, धेन्वनडुद्रूपमिथुनादेवास्य दृष्टिलाभः ॥

प्रकारान्तरेण घृतं प्रशंसति—

" घृते भवति तेजो वै घृतं तेजश्चक्षुस्तेजसैवास्मै तेजश्चक्षुरव रुन्धे " [ सं० का० २ प्र० २ अ० ९ ] इति ।

दीप्यमानत्वाद्रूपभासकत्वाच्च घृतचक्षुषोस्तेजस्त्वम् ॥

( काम्ययाज्यापुरोनुवाक्याभिधानम् )

फलान्तराय त्रिहविष्कामिष्टिं विधत्ते—

" इन्द्रियं वै वीर्यं वृङ्क्ते भ्रातृव्यो यजमानोऽयजमानस्याध्वरकल्पां प्रति निर्वपेद्भ्रातृव्ये यजमाने नास्येन्द्रियं वीर्यं वृङ्क्ते " [ सं० का० २ प्र० २ अ० ९ ] इति।

परस्परविरोधिनोरुभयोर्मध्ये कश्चिदग्निष्टोमादियज्ञं न करोति तदीयस्तु भ्रातृव्यः करोति तदानीमयजमानस्येन्द्रियसामर्थ्यमितरो विनाशयति। प्रत्यक्षं ह्येतत्, दीक्षित सोमयाजिन्नित्यामन्त्रणादिभिरयजमानस्यानाहूतत्वात्तस्येयमध्वरकल्पेषदसमाप्तोऽध्वरः सवनत्रयसद्भावादध्वरत्वं सोमाभावादीषदसमाप्तिरनस्तामध्वरकल्पां तदीयस्य सोमयागस्य प्रतिपक्षत्वेन निर्वपेत्। कदा, भ्रातृव्ये यजमाने सति। तेन प्रतिनिर्वापेणेन्द्रियसामर्थ्यं न नश्यति, दीक्षादीनामभावेऽपि प्रभुत्वधनादेरुत्कर्षो भवतीत्यर्थः॥

निर्वापकालं विधत्ते—

" पुरा वाचः प्रवदितोर्निर्वपेद्यावत्येव वाक्तामप्रोदितां भ्रातृव्यस्य वृङ्क्ते तामस्य वाचं प्रवदन्तीमन्या वाचोऽनु प्रवदन्ति ता इन्द्रियं वीर्यं यजमाने दधति " [ सं० का० २ प्र० २ अ० ९ ] इति।

उषःकाले मनुष्याः शयनादुत्थाय परस्परं वाचः प्रवदन्ति। प्रवदितोः प्राक्प्रवदनात्पुरा निर्वपेत्। तथा सति भ्रातृव्यस्य यावती वाग्विद्यते तामप्रोदितामनुच्चारितां वृङ्क्ते यथा नोच्चारिता भवति तथा नाशयति। अस्य तु यजमानस्य संबन्धिनीं तां वाचं प्रवदन्तीमन्वन्या वाच इतरजनसंबन्धिन्यो वाचः प्रवदन्ति, यजमानेन यद्यथोच्यते तत्तथैव सर्वजना वदन्त्यस्य वचनमनुमन्यन्त इत्यर्थः। ता अन्यदीया वाच उपलालनेनेन्द्रियसामर्थ्यं यजमाने स्थापयन्ति॥

अध्वरसाम्यं संपादयितुं त्रिषु कालेष्वनुष्ठानं विधत्ते—

" आग्नावैष्णवमष्टाकपालं निर्वपेत्प्रातःसवनस्याऽऽकाले सरस्वत्याज्यभागा स्याद्बार्हस्पत्यश्चरुर्यदष्टाकपालो भवत्यष्टाक्षरा गायत्री गायत्रं प्रातःसवनं प्रातःसवनमेव तेनाऽऽप्नोत्याग्नावैष्णवमेकादशकपालं निर्वपेन्माध्यंदिनस्य सवनस्याऽऽकाले सरस्वत्याज्यभागा स्याद्बार्हस्पत्यश्चरुर्यदेकादशकपालो भवत्येकादशाक्षरा त्रिष्टुप्त्रैष्टुभं माध्यंदिनꣳ सवनं माध्यंदिनमेव सवनं तेनाऽऽप्नोत्याग्नावैष्णवं द्वादशकपालं निर्वपेत्तृतीयसवनस्याऽऽकाले सरस्वत्याज्यभागा स्याद्बार्हस्पत्यश्चरुर्यद्द्वादशकपालो भवति द्वादशाक्षरा जगती जागतं तृतीयसवनं

१ क. °दाचिद्भ्रातृव्ये यजमाने स°। घ. ङ. °दाचिद्भ्रात°। २ क. °च्चारयति।

तृतीयसवनमेव तेनाऽऽप्नोति देवताभिरेव देवताः प्रतिचरति यज्ञेन यज्ञं वाचा वाचं ब्रह्मणा ब्रह्म कपालैरेव छन्दाꣳस्याप्नोति पुरोडाशैः सवनानि ” [ सं० का० २ प्र० २ अ० ९ ] इति ।

प्रातःसवनस्याऽऽकाले भ्रातृव्ययज्ञसंबन्धिनः प्रातःसवनस्य यावन्कालस्तावति काले कपालैरष्टैकादशद्वादशसंख्याकैरेव च्छन्दांसि प्रतिवादिप्रयुक्तानि गायत्रीत्रिष्टुब्जगतीरूपाणि व्याप्नोति । यथोक्तैस्त्रिभिः पुरोडाशैः प्रतिवाद्यनुष्ठितानि सवनानि त्रीणि सवनानि व्याप्नोति । तस्मादस्त्यध्वरसाम्यम् । उक्तासु प्रत्यभिचारादीष्टिषु पूर्वोक्ता एव याज्यानुवाक्याः ॥

एतस्यैवाध्वरकल्पानुष्ठायिनः प्रतिवाद्यनुष्ठितानूबन्ध्यास्थानीयामिष्टिं विधत्ते—
“ मैत्रावरुणमेककपालं निर्वपद्वशायै काले यैवासौ भ्रातृव्यस्य वशाऽनूबन्ध्या सो एवैषैतस्यैककपालो भवति न हि कपालैः पशुमर्हत्याप्तुम् ” [ सं० का० २ प्र० २ अ० ९ ] इति ।

भ्रातृव्योऽवभृथं कृत्वा गृहे समागत्योदवसानीयामनुष्ठायानूबन्ध्यां वशामुपाकरोति, तस्मिन्काले मित्रावरुणदेवताकमेककपालं पुरोडाशं निर्वपेत् । भ्रातृव्यस्य साऽनूबन्ध्या वशा यैवास्ति एतस्याध्वरकल्पस्याधिकारिणोऽयमेककपालः सैवैषा वशा भवति । ननु पूर्वोक्तैः कपालैर्यथा छन्दांसि प्राप्तानि तथाऽनूबन्ध्याख्यः पशुरपि प्राप्यतामिति चेन्न । संख्यासाम्येन च्छन्दसां प्राप्तुं शक्यत्वात् । नहि पशावष्टत्वादिसंख्याऽस्ति । अतः पूर्वोक्तैः कपालैरिमं पशुमाप्तुं न शक्नोति नार्हति । मैत्रावरुणस्य तु कपालैक्यात्संख्यासाम्येन पशुमेकं प्राप्तुमर्हति ॥

अस्मिन्मैत्रावरुणे पुरोनुवाक्यामाह—

आ नो मित्रावरुणा घृतैर्गव्यूतिमुक्षतम् । मध्वा रजाꣳसि सुक्रतू । , इति ।

हे मित्रावरुणौ नो गव्यूतिमस्मदीयगोयूथं घृतैः प्रभूतैरा समन्तादुक्षतं सिञ्चतम् । सुक्रतू शोभनक्रतुयुक्तौ रजांस्यस्मदीयक्षेत्रपांसून्मध्वा मधुना जलेनोक्षतम् ॥

तत्रैव याज्यामाह—

प्र बाहवा सिसृतं जीवसे न आ नो

---

१ क. घ. ङ. च. °शं भ्रा° ।

( काम्ययाज्यापुरोनुवाक्याभिधानम् )

गव्यूतिमुक्षतं घृतेन । आ नो जने श्रवयतं युवाना श्रुतं मे मित्रावरुणा हवेमा ।, इति ।

हे मित्रावरुणौ नोऽस्माकं जीवसे जीवितुं वाहवा धनपूर्णेन बाहुना सह प्रकर्षेण सिसृतं प्राप्नुतम् । आगत्य च नोऽस्माकं गोयूथं घृतेन सिञ्चतम् । हे युवाना परस्परमिश्रितौ युवां जने ब्राह्मणादियजमानसभायां नोऽस्माञ्श्रवयतं प्रख्यापयतम् । मित्रावरुणौ मे मदीयमिमा हवेदमाह्वानं श्रुतं शृणुतम् ॥

इष्ट्यन्तरं विधत्ते—

"असावादित्यो न व्यरोचत तस्मै देवाः प्रायश्चित्तिमैच्छन्तस्मा एतꣳ सोमारौद्रं चरुं निरवपन्नेनैवास्मिन्रुचमदधुर्यो ब्रह्मवर्चसकामः स्यात्तस्मा एतꣳ सोमारौद्रं चरुं निर्वपेत्सोमं चैव रुद्रं च स्वेन भागधेयेनोप धावति तावेवास्मिन्ब्रह्मवर्चसं धत्तो ब्रह्मवर्चस्येव भवति" [सं०का०२प्र०२अ०१०] इति ।

न व्यरोचत विशेषेण दीप्तिं न प्राप्तवान् । प्रायश्चित्तिं प्रतीकारं, ब्रह्मवर्चसं श्रुताध्ययनसंपत्तिः ॥

कालं विधत्ते—

"तिष्यापूर्णमासे निर्वपेद्रुद्रो वै तिष्यः सोमः पूर्णमासः साक्षादेव ब्रह्मवर्चसमव रुन्धे" [सं० का० २ प्र० २ अ० १० ] इति ।

यथा रुद्रो दुःखं द्रावयति तथा पौषमासः शैत्यदानेन तापं वारयति, तस्मात्तस्य रुद्रत्वम् । सोमो हि पौर्णमास्यां संपूर्णमण्डल इति तयोरैक्यम् । साक्षादेव मुख्यमेव न त्वनूचानस्य पुत्रत्वमात्रेणाऽऽपादितममुख्यं ब्रह्मवर्चसम् ॥

वेदेः[1] परित आवरणं विधत्ते—

"परिश्रिते याजयति ब्रह्मवर्चसस्य परिगृहीत्यै" [सं० का० २ प्र० २ अ० १० ] इति ।

परिश्रयणेन वेद्यामावृतायां वेदिरेव ब्रह्मवर्चसं परिगृहीतं भवति ॥

चोदकप्राप्तमपवदितुं कांश्चिद्विशेषान्विधत्ते—

"श्वेतायै श्वेतवत्सायै दुग्धं मथितमाज्यं भवत्याज्यं प्रोक्षणमाज्येन मार्जयन्ते यावदेव ब्रह्मवर्चसं तत्सर्वं करोति" [सं०का०२प्र०२अ० १०] इति ।

श्वेतवत्सयुक्तायाः श्वेताया गोर्दुग्धं तदेवाऽऽतञ्चनेन दधिभावमापाद्य[2] मथितं सत्पश्चादाज्यं भवति, न तु मैत्राबार्हस्पत्य इव स्वयंमूर्तस्वयंमथितत्वा-

---

१ क. वेदेरे । २ क. मापद्य ।

दिकमत्रास्ति । प्रकृतौ श्वेतवत्सा श्वेता गौरिति नास्ति नियमः । अत्र त्वस्ति। प्रकृतावद्भिः प्रोक्षणं मार्जनं च । अत्र तु सर्वमाज्येनेति विशेषः । तथा सति तु ब्रह्मवर्चसं संपूर्णं भवति ॥

सामिधेनीषु समिध्यमानेद्धवत्योर्मध्ये प्रक्षेपणीये द्वे ऋचौ विधत्ते—

"अति ब्रह्मवर्चसं क्रियत इत्याहुरीश्वरो दुश्चर्मा भवितोरिति मानवी ऋचौ धाय्ये कुर्याद्यद्वै किं च मनुरवदत्तद्भेषजं भेषजमेवास्मै करोति" [ सं० का० २ प्र० २ अ० १० ] इति ।

आज्यमात्रेण यद्ब्रह्मवर्चसं तद्युक्तमेव, श्वेतवत्साश्वेतगोभ्यां यत्तदत्यधिकं, तेन दुश्चर्मा श्वेतकुष्ठयुक्तो भवितुं प्रभुर्भवति, तत्परिहाराय मनुना दृष्टे द्वे ऋचौ सामिधेनीषु धाय्ये प्रक्षेपणीये भवतः । मनोर्धर्मवक्तृत्वात्तेन यन्मन्त्रजातमुक्तं तदौषधम् । तदेतत्सर्वमापस्तम्ब आह—" सर्वप्रोक्षणमार्जनानीत्या-(न्या)ज्येन मानवी ऋचौ धाय्ये कुर्यादग्निं व इत्येतामां द्वे " इति ॥

एतस्मिन्सोमारुद्रचरौ धाय्यात्वेनाग्निं वः पूर्व्यमित्यादिका विकल्पिताः षडृच आम्नाताः । तत्र प्रथमायाः पाठस्तु—

अग्निं वः पूर्व्यं गिरा देवमीडे वसूनाम् । सप-
र्यन्तः पुरुप्रियं मित्रं न क्षेत्रसाधसम् । , इति ।

वसूनां वो युष्माकं मध्ये पूर्व्यं प्रथमभाविनमग्निं देवं गिरा वैदिक्या, ईडे स्तौमि स्तावकोऽहम् । कीदृशः, सपर्यन्तः पर्यन्तेन यागसमाप्त्या सह वर्तत इति सपर्यन्तः । सकृत्स्तुत्वा नोपरमं कुर्वे किं त्वा समाप्तेः स्तौमीत्यर्थः । कीदृशमग्निं, मित्रं न क्षेत्रसाधसं पितृभ्रात्राद्यात्मकमित्रमिवास्मदीयस्य क्षेत्रस्य साधकम् ॥

अथ द्वितीया—

मक्षू देववतो रथः शूरो वा पृत्सु
कासु चित् । देवानां य इन्मनो यज-
मान इयक्षत्यभीदयज्वनो भुवत् । , इति ।

कासुचित्पृत्सु केषुचित्सङ्ग्रामेष्वत्यन्तमभिनिवेशेन प्रवर्तमानेषु शूरो वा शूरो भट इव देववतो यक्ष्यमाणदेवोपेतस्य यजमानस्य रथो मक्षु गच्छतीति

१ ख. °मेवृद्धत्वा° । घ. ङ. च. °मेवत्वात्ते° । २ ख. घ. ङ. च. °देव स° । ३ ख. घ. ङ. च. °प्रोक्षामा° । ४ क. ख. घ. ङ. च. °धसमिति पि° ।

( काम्ययाज्यापुरोनुवाक्याभिधानम् )

शेषः। रामरावणयुद्धवदत्यभिनिवेशेन प्रवृत्ते युद्धे शूरो भटः स्वदेहं विस्मृत्य परसेनां हन्तुं यथा त्वरया गच्छति तथा देवान्यष्टुमस्य यजमानस्य मनोवृत्तिस्त्वरया रथवद्गच्छतीत्यर्थः। य इद्ध एव यजमानो देवतानां मन इयक्षति पूजयितुमिच्छति तदीयं चित्तप्रसादं वाञ्छतीत्यर्थः। स एवायज्वनो यागरहितान्पुरुषानभिभुवदिदभिभवत्येव। इदमुत्तरार्धमुत्तरेषु त्रिषु मन्त्रेष्वनुवर्तते॥

अथ तृतीया—

न यजमान रिष्यसि न सुन्वान न देवयो।, इति।

हे यजमान त्वं यागं कृत्वा न रिष्यसि न विनश्यसि। अत्र यजमानत्वमिष्टिकर्तृत्वम्। हे सुन्वान सोमयाजिन्न रिष्यसि। हे देवयो पाकयज्ञादिभिर्देवानिच्छंस्त्वं न रिष्यसि। अनुवर्णितं देवानामित्युत्तरार्धं पूर्ववद्योज्यम्॥

अथ चतुर्थी—

असदत्र सुवीर्यमुत त्यदाश्वश्वियम्।, इति।

अत्रास्मिन्यजमाने सुवीर्यं शोभनं सामर्थ्यमसद्भवेदित्यर्थः। उतापि च त्यत्तदस्तु। किं त्यत्, आश्वश्वियम्, आशवः शीघ्रगामिनश्च तेऽश्वाश्चाऽऽश्वश्वास्तेषां संबन्धि शोभनवीर्यमस्तु॥

अथ पञ्चमी—

नकिष्टं कर्मणा नशन्न प्र योषन्न योषति।, इति।

नकिरिति शब्दो निषेधवाची। कर्मसहितं तं यजमानं नकिर्नशत्, राक्षसादिर्मा विनाशयतु। यज्ञविरोधी पाप्मा यजमानेन सह प्रकर्षेण न योषन्मैव मिश्री भवतु। यजमानोऽपि न योषति न पाप्मना सह मिश्री भवति॥

अथ षष्ठी—

उप क्षरन्ति सिन्धवो मयोभुव ईजानं च
यक्ष्यमाणं च धेनवः। पृणन्तं च पपुरिं च
श्रवस्यवो घृतस्य धारा उप यन्ति विश्वतः।, इति।

सिन्धवो नदीसदृशा मयोभुवः सुखं भावयित्र्यो धेनवः पूर्वमिष्टवन्तमितः परं यक्ष्यमाणं च पुरुषमेनमुपेत्य क्षरन्ति स्रवन्ति बहुतरं क्षीरं प्रयच्छन्ती-

१ ख. घ. ङ. च. तत्।

त्यर्थः । पृणन्तमस्मिन्कर्माणि जुहूं पूरयन्तं पपुरिं हविष्मत्सु कर्मसु पूरयिष्यन्तं च यजमानं श्रवस्यवः श्रोतुमिच्छन्त्य इव घृतस्य धारा विश्वतः सर्वत उपयन्ति समीपे प्राप्नुवन्ति ॥

विकल्पितानि त्रीणि धाय्यायुग्मान्युक्त्वा पुरोनुवाक्यामाह—

सोमारुद्रा वि वृहतं विषूचीममीवा या नो
गयमाविवेश । आरे बाधेथां निर्ऋतिं पराचैः
कृतं चिदेनः प्र मुमुक्तमस्मत् ।, इति ।

याऽमीवा रोगरूपा निर्ऋतिर्नोऽस्माकं गयं गृहमाविवेश सोमारुद्रा हे सोमारुद्रौ तां निर्ऋतिं विषूचीं विष्वग्गतिं नानादिक्षु यथा पलायति तथा विवृहतं विशेषेणोन्मूलयतं, पराचैः पराङ्मुखीं निर्ऋतिं तामारे दूरे युवां बाधेथां, तया निर्ऋत्याऽस्मासु कृतमेनश्चित्पापं रोगरूपमप्यस्मत्प्रमुमुक्तं प्रकर्षेणास्मत्तो मोचयतम् ॥

याज्यामाह—

सोमारुद्रा युवमेतान्यस्मे विश्वा तनूषु भेषजानि धत्तम् । अव स्यतं मुञ्चतं यन्नो अस्ति
तनूषु बद्धं कृतमेनो अस्मत् ।, इति ।

हे सोमारुद्रौ युवमुभौ युवामस्मे तनूषु अस्माकं शरीरेषु विश्वा सर्वाण्येतानि भेषजान्यौषधानि धत्तं स्थापयतम् । अवस्यतं तैर्भेषजैरनिष्टं विनाशयतम् । निर्ऋत्या कृतं नोऽस्माकं तनूषु यद्बद्धमेनोऽस्ति तदस्मत्तो मुञ्चतम् ॥

इष्ट्यन्तरं विधत्ते—

" यदि बिभीयाद्दुश्चर्मा भविष्यामीति सोमापौष्णं चरुं निर्वपेत्सौम्यो वै देवतया पुरुषः पौष्णाः पशवः स्वयैवास्मै देवतया पशुभिस्त्वचं करोति न दुश्चर्मा भवति " [ सं० का० २ प्र० २ अ० १० ] इति ।

सोमसंबन्ध्योषधिरसेन जातत्वात्पुरुषः सोमदेवताकः । इयं वै पूषेतिश्रुतेः पूषरूपया भूम्या तृणादिप्रदानेन पोषितत्वात्पशवः पौष्णाः । अतो हविषा तुष्टा स्वदेवता पशुभिः सहिता समीचीनां त्वचं करोति । ततो दुश्चर्मत्वमपगच्छति ॥

तत्र पुरोनुवाक्यामाह—

सोमापूषणा जनना रयीणां जनना दिवो

(काम्ययाज्यापुरोनुवाक्याभिधानम्)

जनना पृथिव्याः। जातौ विश्वस्य भुवनस्य
गोपौ देवा अकृण्वन्नमृतस्य नाभिम्।, इति।

हे सोमापूषणौ युवां देवा अमृतस्य कर्मफलस्य नाभिमकृण्वन्। न(ण)ह बन्धन इत्यस्माद्धातोरुत्पन्नो नाभिशब्दः। बन्धनरज्जुं कृतवन्त इत्यर्थः। सोमापूषभ्यां हि कर्मफलं यजमाने बध्यते। कीदृशौ युवां, धनानां द्यावापृथिव्योश्च जनयितारौ। ऐहिकामुष्मिकफलदातृत्वमेवात्र द्यावापृथिव्योर्जनकत्वम्। किं च, जातौ सन्तौ जातमात्रेणैव विश्वस्य सर्वस्य भुवनस्य लोकस्य गोपौ गोपायितारौ॥

तत्रैव याज्यामाह—

इमौ देवौ जायमानौ जुषन्तेमौ तमाꣳसि
गूहतामजुष्टा। आभ्यामिन्द्रः पक्कमामा-
स्वन्तः सोमापूषभ्यां जनदुस्रियासु॥, इति॥

सर्वे देवा जायमानाविमौ देवौ जुषन्त सेवन्ते। इमावुभावजुष्टान्यप्रियाणि तमांसि बुद्धिमान्द्यानि गूहतां समवृण्वतां विनाशयताम्। इन्द्र आभ्यां सोमापूषभ्यामामासूस्रियासु तरुणीषु गोष्वन्ता रसपोषकाभ्यां पक्कं क्षीरं जनज्जनयति। गावो हि सारयुक्तायां भूमौ सोमेन वर्धिता ओषधीर्भक्षयित्वा बहुनवनीतगर्भं क्षीरं धारयन्ति॥

अस्मात्सोमापौष्णात्पूर्वं विहितमेव पुनः फलान्तराय विधत्ते—

"सोमारौद्रं चरुं निर्वपेत्प्रजाकामः सोमो वै रेतोधा अग्निः प्रजानां प्रजनयिता सोम एवास्मै रेतो दधात्यग्निः प्रजां प्र जनयाति विन्दते प्रजाम्" [सं० का० २ प्र० २ अ० १०] इति।

गर्भाशये धृतस्य रेतसोऽग्निना पच्यमानत्वादग्नेः प्रजनयितृत्वम्॥

पुनरपि फलान्तराय विधत्ते—

"सोमारौद्रं चरुं निर्वपेदभिचरन्त्सौम्यो वै देवतया पुरुष एष रुद्रो यदग्निः स्वाया एवैनं देवतायै निष्क्रीय रुद्रायापि दधाति ताजगार्तिमार्छति" [सं० का० २ प्र० २ अ० १०] इति।

पुरुषस्य सोमदेवताकत्वं पूर्वमभिहितम्। यदरोदीत्तद्रुद्रस्य रुद्रत्वमिति श्रुत्या रुद्ररूपत्वमग्नेराम्नातम्। पुरुषस्य स्वामिभूता या सोमदेवता तस्या देवतायाः सकाशाच्चरुणा मुख्येन मूल्येन तं पुरुषं वैरिणं निष्क्रीय क्रूराय

रुद्राय चरुरूपमुत्कोचं दत्त्वा तं वध्यं वैरिणं तस्मै प्रयच्छति। स च वैरी तदानीमेव मरणं प्राप्नोति ॥

पुनरपि फलान्तराय विधत्ते—

" सोमारौद्रं चरुं निर्वपेज्ज्योगामयावी सोमं वा एतस्य रसो गच्छत्यग्निꣳ शरीरं यस्य ज्योगामयति सोमादेवास्य रसं निष्क्रीणात्यग्नेः शरीरमुत यदीतासुर्भवति जीवत्येव " [ सं० का० २ प्र० २ अ० १० ] इति।

ज्योगामयावी दीर्घरोगयुक्तः। यस्य पुरुषस्य ज्योगामयति यं पुरुषं व्याधिश्चिरं पीडयति एतस्य पुरुषस्य शरीरप्राणयोर्बन्धको योऽन्नरसः स व्याधिकाले सोमं प्राप्नोति। भुक्तस्यान्नस्य संबन्धी योऽयं सूक्ष्मो रसो मनःप्रभृतेर्लिङ्गशरीरस्याऽऽप्यायनकरस्तेन रसेन प्राणो देहे बध्यत इतीममर्थं वाजसनेयिनः शिशुब्राह्मणेऽन्नं ददामीति वाक्येन समामनन्ति। तस्मिन्सोमेऽन्नोपभूते सति अयं देहोऽग्निं गच्छति जाठराग्नेर्गर्भस्थान्नरसस्याभावान्मांसादिधातूनग्निर्भक्षयति। अत एवाऽऽमयाविनः शरीरं कृशं दृश्यते। एवं सति यजमानश्चरुणा मूल्येन सोमाग्निभ्यां रसं शरीरं निष्क्रीणाति। ततोऽयमरोगो भवति। किं च, यद्यप्ययं मुहूर्तमात्रं गतप्राणस्तथाऽपि भूमौ शयानस्तदानीं जीवत्येव ॥

एतस्य चरोरङ्गत्वेन होतुर्बलीवर्ददानं विधत्ते—

" सोमारुद्रयोर्वा एतं ग्रसितꣳ होता निष्खिदति स ईश्वर आर्तिमार्तोरनड्वान्होत्रा देयो वह्निर्वा अनड्वान्वह्निर्होता वह्निनैव वह्निमात्मानꣳ स्पृणोति " [ सं० का० २ प्र० २ अ० १० ] इति।

रोगिसंबन्धिरसशरीरयोः[2] सोमारुद्राभ्यां स्वीकृतत्वात्तयोर्मुखे रोगी ग्रसितो वर्तते। तं ग्रसितं होता याज्यानुवाक्याबलान्निर्ष्खिदति तयोर्मुखान्निःसारयति। स च होता तयोः कोपादार्तिं प्राप्तुमीश्वरो योग्यो भवति। अनडुहो वह्नित्वमनड्वाहमग्नीध इत्यत्रोपपादितम्। अग्निविषयावाहनमन्त्रपाठाद्धोतुर्वह्नित्वम्। तथा सत्यनडुहो दाता होता तेनानडुद्रूपेण वह्निनैव वह्निरूपं स्वात्मानं स्पृणोति आर्तिशान्त्या प्रीणयति ॥

पुनरपि फलान्तराय विधत्ते—

" सोमारौद्रं चरुं निर्वपेद्यः कामयेत स्वेऽस्मा आयतने भ्रातृव्यं जनयेयमिति वेदिं परिगृह्यार्धमुद्धन्यादर्धं नार्धं बर्हिषः स्तृणीयादर्धं नार्धमिध्मस्या

---

१ ख. घ. ङ. च. 'दामीति। २ ख. घ. ङ. च. रोगसंबन्धिश'।

( काम्ययाज्यापुरोनुवाक्याभिधानम् )

भ्यादध्यादर्धं न एव एवास्मा आयतने भ्रातृव्यं जनयति ॥" [ सं० का० २ प्र० २ अ० १० ] इति।

अस्मै एव आयतनेऽस्य वैरिणः स्वकीयगृहविषये क्षेत्रविषये वा भ्रातृव्यं विवादकारिणमन्यं विरोधिनं जनयेयमिति यः कामयेत स एतं चरुं निर्वपेत्। तस्य वेदिपरिग्रहस्थानं सूत्रकारेण दर्शितम्—"भ्रातृव्यक्षेत्रं गत्वैतामिष्टिं निर्वपेत्तत्र दक्षिणमर्धं वेद्या उद्धन्य तदेवार्धेन बर्हिषः स्तृणीयादर्धमभ्याद-ध्यात्" इति। एवं कृते सत्ययं यजमानोऽस्य भ्रातृव्यस्य तदीयस्थान एव विवादकारिणं जनयति ॥

अत्र विनियोगसंग्रहः—

"आग्नावैष्णवमित्यादावभिचारहविस्त्रये।
अग्ना प णो बृहेत्याद्या अधिका तु विकल्प्यते ॥ १ ॥
आ न एककपाले तु मैत्रावरुणनामके।
अग्निमित्यादिका धाय्याः स्युः सोमारौद्रके चरौ ॥ २ ॥
देवानामिति चार्धर्चस्तिसृष्वृक्ष्वनुपठ्यते।
पड्धाय्या द्वे तु याज्यानुवाक्ये सोमेत्युदीरिते ॥
सोमापौष्णे तु सोमेति मन्त्रा एकोनविंशतिः ॥ ३ ॥"

अथ मीमांसा।

अष्टमाध्यायस्य तृतीयपादे चिन्तितम्—

"आग्नावैष्णव आग्नेयविकृतिः शुचिदेवकः।
अग्नीषोमीयविकृतिरथ वा व्यत्ययो द्वयोः ॥
प्रथमत्वद्वितीयत्वसाम्यादाद्योऽन्तिमो भवेत्।
द्विदेवत्यै(त्वै)कदेवत्य(त्व)साम्यस्य श्रुतिमत्त्वतः ॥"

हविर्गणः कश्चिच्छ्रूयते—"आग्नावैष्णवमेकादशकपालं निर्वपेत्सरस्वत्यै चरुं बार्हस्पत्यं चरुम्" इति। गणान्तरमेवं श्रूयते—"अग्नये पावकायाग्नये[1] शुचयेऽष्टाकपालम्" इति। अत्राऽऽग्नावैष्णवस्य प्रथमस्थानत्वादाग्नेयविकृतित्वं युक्तं, शुचिदेवकस्य द्वितीयस्थानत्वादग्नीषोमीयविकृतित्वमिति चेन्न। द्विदेव-त्या(त्वा)दिसाम्यस्य श्रूयमाणत्वेनार्थसिद्धस्थानतो बलीयस्त्वात्। तस्मा-दाग्नावैष्णवोऽग्नीषोमीयविकृतिः, शुचिदेवक आग्नेयविकृतिः ॥

---

१ क. 'ये पवमानायाग्नये पा'।

विस्पष्टमनुवाकार्था वर्ण्यन्ते बुद्धिशुद्धये ।
अनुमत्यादयो वैश्वदेवो वरुणघासकाः ॥ १ ॥
साकमेधाः पितृयज्ञस्त्र्यम्बकाश्च शुनादिकाः ।
शुनासीरीयमिन्द्रादि तुरीयं च द्वयं तथा ॥ २ ॥
पश्चैध्मीयमपामार्गहोम एते शुनादिकाः ।
देविकाद्यं कर्मषट्कं स्याद्रत्निहविरादिकम् ॥ ३ ॥
हवींषि रत्निनां तद्वद्दीक्षणीयाऽभिषेचयगा ।
हवींषि स्युर्देवसुवां जलग्रहणसंस्कृती ॥ ४ ॥
दिशां व्यास्थापनं तद्वदभिषेकोऽथ दिग्जयः ।
सेवा संसृष्टहविस्तद्वद्दशपेयो ह्यवेष्टयः ॥ ५ ॥
हवींषि प्रयुजां सौत्रामणी याज्या इतीरिताः ॥ ६ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये प्रथमकाण्डेऽष्टमप्रपाठके
द्वाविंशोऽनुवाकः ॥ २२ ॥

---

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ॥
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इति श्रीमद्विद्यातीर्थमहेश्वरापरावतारस्य श्रीमद्राजाधिराजपरमेश्वरस्य श्रीवीरबुक्कमहाराजस्याऽऽज्ञापरिपालकेन माधवाचार्येण विरचिते वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये
प्रथमकाण्डेऽष्टमः प्रपाठकः ॥ ८ ॥

इति श्रीमद्विद्यातीर्थमहेश्वरापरावतारस्य श्रीमद्राजाधिराज-
परमेश्वरस्य श्रीवीरबुक्कमहाराजस्याऽऽज्ञापरिपाल-
केन माधवाचार्येण विरचिते वेदार्थप्रकाशे
कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये
प्रथमः काण्डः समाप्तः ॥ १ ॥

---

( मूलक्रमेण—अष्ट० १ प्रपा० ८ अनु० १४६ )

( भाष्यक्रमेण—काण्ड० १ प्रपा० ८ अनु० १४० )

---

१ क. घ. ङ. 'द्रत्नह' ।